आनन्दादिस्वरूपस्य लोकः प्रकाशः अनुभवः। तेषामुपनिषदुक्तब्रह्मज्ञानिनां भवतीत्यर्थः॥

### ताम्रपर्णीश्रीनिवासाचार्यविरचिता षट्प्रश्नभाष्यटीकाटिप्पणी

नमो भगवते तस्मै प्राणादिप्रभविष्णवे।
अमन्दानन्दसान्द्राय वासुदेवाय वेधसे॥
श्रीमदानन्दतीर्थार्यान् जयार्यांश्च गुरूनपि।
नत्वा षट्प्रश्नटीकार्थं वक्ष्येऽहं तत्कृपाबलात्॥

मङ्गलमाचरति– **पान्त्विति**॥ गुरुत्ववाचकभारशब्दस्य पूर्वनिपातः। गुरुतरकबरीसुरभीकरणे उन्मुखा इति यावत्। भगवत्पादसम्बन्धेन रजसां रमा-केशबन्धे सुरभीकरणसामर्थ्यं बोध्यम्। रेणवोऽपि परमात्मस्वरूपभूता इत्यप्याहुः। **इष्णुच्प्रत्ययेनेति**। 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधि-कृत्य 'भुवश्च' इत्यनेन सूत्रेण ताच्छील्यार्थे भूधातोरिष्णुच्प्रत्यये सति निष्पन्नस्य प्रभविष्णव इत्यस्य तत्स्वभावार्थत्वमुक्तमित्यर्थः॥ **वर्तमानापदेशेनेति**॥ परमेश्वरस्येदानीं प्राणादिजनकत्वाभावेन वर्तमानार्थेन लटा तत्स्वाभाव्यस्य वर्तमानत्वमुच्यत इत्यर्थः॥

### मङ्गाली धर्मराजाचार्यविरचिता षट्प्रश्नभाष्यटीकाटिप्पणी

श्रीवासुदेवमानम्य पूर्णबोधान् गुरूनपि।
करिष्ये प्रश्नषट्कीयभाष्यव्याख्यानपञ्चिकाम्॥

जयतीर्थश्रीमच्चरणः षट्प्रश्नभाष्यं व्याचिख्यासुः श्रीनारायणचरणनलिन-परागकर्तृकस्वावनप्रार्थनरूपं मङ्गलमादौ निबध्नाति– **पान्त्विति** ॥ पद्मं नाभौ यस्य सः पद्मनाभः। श्रीपदशब्दस्य पद्मनाभशब्दसापेक्षत्वेऽपि नित्यसापेक्षत्वेन रेणुशब्देन समासोपपत्तिः। नोऽस्मान्पान्तु रक्षन्तु। इतरदेवता-पादपांसून्विहाय पद्मनाभपादपांसूनामेव प्रार्थने को हेतुरित्यतः प्राप्ताशेष-कामयापि रमया अनुरागेणानिशं धृतत्वेनावगतामितगुणत्वादिति भावेनाह– **कमलेति** ॥ कमलायाः कबरीलक्षणो यो भारः केशपाशस्तस्य यत्सुरभीकरणं

तस्मिन्नुद्यता उद्युक्ता इत्यर्थः। तेन भारशब्दस्यैव केशपाशवाचित्वेन कबरीशब्दो व्यर्थ इति नाशङ्कनीयम्। सामान्यविशेषभावेनावैयर्थ्यात्। सुरभीकरणोद्यता इत्यनेन पादपांसूनां पङ्कजपरागसादृश्यमुपपादितम्। दृष्टान्तादतिशयोऽपि दार्ष्टान्तिकेऽवगम्यते। नहि नानाकुसुमपरागनिचयानां मिलितानामपि अति-सुगन्धात्मकेन्दिराकबरीभारसुरभीकरणोद्यमित्वं सम्भवति। भगवतस्तु 'सद्देहः सुखगन्धश्च' इति सुगन्धशरीरावयवत्वात्तत्सम्बद्धरेणूनां तत्त्वं सम्भवतीति। ननु भाष्यकारीयं 'नमो भगवत' इत्याद्यमाद्यं पद्यं व्यर्थम्। आथर्वण्या ब्राह्मणोपनिषदो व्याख्यानस्य निर्विघ्नपरिसमाप्त्याद्यर्थं मङ्गलनिबन्धनरूपं तदिति चेत्, उपनिषद एवाधिकार्यादिशून्यतया अनुपादेयत्वात्। अधिकार्या-दिमत्त्वेनोपादेयत्वेऽप्यव्याख्येयत्वात्। गहनार्थत्वेन व्याख्येयत्वेऽपि वासुदेव-स्यैव प्रणामे बीजाभावादित्यत आह– **इहेति**॥ अधिकार्यनधि-कारिवर्ग इत्यर्थः। खल्विति वाक्यालङ्कारे। उक्तार्थस्य प्रसिद्धिद्योतने वा वर्तते। 'समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः' इत्यमरोक्तेः पारावारः समुद्रः। जननी तनयमिवेत्यनेन तद्वत्केवलानुकम्पावशादेवोद्दिधीर्षुः उद्धर्तुमिच्छुरित्युक्तं भवति। एतच्चाभिमानिव्यपेक्षया॥ **इतिकर्तव्यतामन्तरेणेति** ॥ साक्षादुपकारकाङ्गं विनेत्यर्थः॥ **न्यायगर्भं भाष्यं करिष्यन्निति** ॥ तत्त्वार्थनिश्चये न्यायानामङ्गत्वेन तत्प्रतिपादकभाष्यस्येतिकर्तव्यतात्वमिति भावः। एतच्च यत्तच्छान्तमजर-मित्यादिनेत्यादौ। वक्ष्यत इत्यस्यानुवृत्तिर्द्रष्टव्या॥ **इष्णुच्प्रत्ययेनोक्तमिति** ॥ 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इत्यधिकृत्य 'भुवश्च' इत्यनेन सूत्रेण ताच्छील्येऽर्थे प्रोपसृष्टस्य भूधातोरिष्णुच्प्रत्यये निष्पन्नस्य प्रभविष्णव इत्यस्य तत्स्वाभाव्यार्थत्वं युक्तमित्यर्थः॥ **वर्तमानापदेशेनेति** ॥ सर्जनक्रियाया इदानीं निवृत्तत्वेऽपि तत्स्वभावस्यानुवृत्तत्वेन वर्तमानार्थकलट्प्रयोग इति भावः॥ **वेधस इतीति** ॥ 'वेधा विधौ बुधे विष्णौ' इति विश्वकोशे वेधश्शब्दस्य बुधवाचकत्वोक्त्या मुख्यत्वात्सार्वज्ञार्थत्वसिद्धिः॥ **तच्छेषतयेति** ॥ तत्सृज्य-त्वेन वासुदेवोपसर्जनत्वेनेत्यर्थः। प्रतिपाद्या इति वचनविपरिणामेनानुवर्तते। तज्ज्ञानफलं च सूचितमित्यन्वयः॥ **उपासत इति** ॥ उपास्त इत्यर्थः॥ **तदेव**

**भवतीति** ॥ तत्सदृश एव भवत्युपासकः। तदेव उपास्यगुणजातसदृशागुण-जातमेवोपासकानां भवतीति वार्थः॥ **विरजो ब्रह्मलोक इतीति** ॥ 'ब्रह्माणि जीवाः सर्वेऽपि' इति जीववाचको ब्रह्मशब्दो भावप्रधानः। तथाच ब्रह्मत्वस्य जीवत्वस्यानन्दादिस्वरूपत्वस्य लोकः प्रकाशोऽनुभवः तेषां उपनिषदुक्तब्रह्म-ज्ञानिनां भवतीत्यर्थ इत्यभिप्रेतम्। उत्तरत्र ब्रह्मलोको वैकुण्ठादिः प्राप्यो भवतीत्यर्थान्तरमुक्तमिति ज्ञातव्यम्॥

### अनन्तभट्टविरचिता षट्प्रश्नभाष्यटीकाटिप्पणी

ग्रन्थादौ मङ्गलमाचरति– **पान्त्विति**॥ अस्मदभिमतं समस्तं प्रापयन्तु अनभिमतं निवर्तयन्त्वित्यर्थः। कुतः पद्मनाभपदपङ्कजपरागाणां तादृशसामर्थ्य-मित्यतः प्राप्ताशेषकामयापि रमया परमानुरागेणानिशं शिरसा धृतत्वेनावगत-गुणत्वादित्याह– **कमलेति**॥ सुरभीकरणोद्यता इत्यनेन पदपांसूनां पङ्कजपराग-सादृश्यमुपपादितम्। दृष्टान्तादतिशयश्चानेन दार्ष्टान्तिकेऽवगम्यते। नहि नाना-कुसुमनिचयस्य मिलितस्यापि स्वतोऽतिसुगन्धात्मकेन्दिराकबरीभारसुरभी-करणोद्यमित्वं सम्भवतीति। पारावारः सरित्पतिः ॥ **जननीति**॥ तद्वत्केवला-नुरागादेव प्रवृत्तिरिति भावः॥ **वर्तमानेति** ॥ सर्जनक्रियाया इदानीं निवृत्तत्वेऽपि तत्स्वभावस्यानुवृत्तत्वेन वर्तमानार्थकलट्प्रयोग इति भावः ॥

### गूढकर्तृका षट्प्रश्नभाष्यटीकाटिप्पणी

मङ्गलमाचरति– **पान्त्विति** ॥ गुरुत्ववाचकभारशब्दस्य पूर्वनिपातः। बृह-त्कबरीति यावत्। रेणवोऽपि परमात्मस्वरूपभूता इत्याहुः ॥

## अथ प्रथमः प्रश्नः

**सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनः ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मा-**

**न्वेषमाणाः एष ह वै तत् सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥**

**टीका**—अथ 'प्रजा' इत्यादिवाक्यव्याख्यानमपव्याख्यानप्रत्याख्यानं च लाघवेन चिकीर्षुः सङ्क्षेपतस्तावत् प्रथमप्रश्नप्रतिवचनसमाख्यारूपां स्मृतिमेव पठति— **प्रजानामित्यादिना**॥ अत्राऽऽदौ 'सुकेशा' इत्याद्याख्यायिका विद्याप्रशंसया श्रोतृणां श्रद्धाद्यतिशयजननार्था। एवं किल महद्भिः भारद्वाजप्रभृतिभिरपीयं विद्या सांवत्सरब्रह्मचर्यादिना लब्धाऽतोऽतिप्रशस्ततरा। अस्माभिरप्येवंविधैर्भाव्यमिति। स्मर्यते हि श्रद्धादीनां तत्त्वज्ञानहेतुत्वं "श्रद्धावाँल्लभते ज्ञानम्' इति। तत्रेयमक्षरयोजना। सुकेशा नामतः। भरद्वाजस्यापत्यं भारद्वाजः। शिबेरपत्यं शैब्यः, सत्यकामो नामतः। सूर्यस्यापत्यं सौर्यः, तदपत्यं सौर्यायणिः। दीर्घः सुलोपश्च छान्दस इति स एव सौर्यायणी। गर्गस्य गोत्रो गार्ग्यः, कौसल्यो नामतः, कोसलायां भवो वा। अश्वलायनस्यापत्यं आश्वलायनः। भृगोरपत्यं भार्गवः। विदर्भेषु भवो वैदर्भिः, कबन्धी नामतः। कत्यस्यापत्यं कात्यायनः। इतरेतरयोगे चशब्दाः। त एते ह किल ब्रह्मपराः वेदाभ्यासे तात्पर्यवन्तः। ब्रह्मनिष्ठाः तदुक्तानुष्ठाननिष्ठाश्च मुनयः कदाचित्समवेताः परं ब्रह्म वासुदेवमन्वेषमाणा जिज्ञासवो बभूवुरिति शेषः। 'ब्रह्मपराः' इत्यादि ब्रह्मजिज्ञासाधिकारसम्पत्तिकथनम्। ततस्ते किलैष पिप्पलादो यद्वयं प्रक्ष्यामस्तत्सर्वं वक्ष्यति तस्मादेनं प्रति गच्छाम इति निश्चित्य समित्पाणयो भूत्वा भगवन्तं पूज्यं पिप्पलादमुपसन्नाः तत्समीपं प्राप्ताः। हवैशब्दः पिप्पलादस्य प्रश्नप्रतिवचनसामर्थ्यप्रसिद्धिद्योतकः॥ १-१ ॥

**वामन**—अथ सुकेशादयो भरद्वाजान्वयजाताः षण्मुनयो भगवन्तं पिप्पलादमुपसन्नास्तं सम्प्रसाद्य यथेष्टं प्रश्नान् पप्रच्छुः। सुकेशाख्यो भरद्वाजपुत्रः। शिबिपुत्रः सत्यकामः। सौर्यायणसुतो गार्ग्यगोत्रः। कोसलसुतश्च आश्वलायनगोत्रः। भार्गवगोत्रो विदर्भपुत्रः। कत्ययनात्मजः कबन्धी। सुकेशेत्यत्र मात्राधिक्येन दीर्घत्वं विशेषाधिक्यविवक्षया 'आधिक्येऽधिकम्' इति सूत्रात्।

अस्ति ह्यस्य वैरैर्दुष्परिहरप्रश्नकर्तृत्वं नाम विशेषः। विसर्गाभावस्तु 'हल्ङ्याभ्यो दीर्घाद्' इत्यादिना विभक्तिलोपात्॥ १-१ ॥

**सत्य**–॥ **लाघवेनेति** ॥ व्याख्यानरूपप्रमाणविरोधादेवापव्याख्यान-निराकरणं लभ्यत इति लाघवमित्यर्थः ॥ **सुकेशा नामतः इति** ॥ दीर्घः सुलोपः छान्दस इति भावः । अत एव सौर्यायणी इत्यत्र वक्ष्यति । 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घो वा ॥ १-१ ॥

**श्रीनिवास**–आख्यायिकेति उपलब्धार्थविषयककृतिरित्यर्थः। ननु तर्हि सौर्या-यणिरिति स्यात्सौर्यायणीति दीर्घः कुत इत्यतः आह– दीर्घ इति ॥ तथा सोरुत्वे विसर्गे च सौर्यायणिरिति स्यादत उक्तं सुलोपश्चेति॥ १-१ ॥

**छलारी**–॥ **सुकेशेति** ॥ शोभनाः केशा यस्येति विग्रहे सुकेशशब्दात्परस्य प्रथमैकवचनस्य सोः 'सुपां सुलुक्' इति आकारादेशे सवर्णदीर्घे सुकेशेत्या-कारान्तरूपं ज्ञेयम्॥ **भारद्वाज इति** ॥ 'ऋष्यन्धकवृष्णि..' इत्यण् ॥ **शैब्य इति** ॥ गर्गादित्वाद्यञ्। सूर्यस्यापत्यं सौर्य इति। सूर्यशब्दादपत्यार्थेऽप्यण्। अणन्तात् सौर्यशब्दात् 'तिकादिभ्यः' इति फिञ् । तस्यायन्नादेशे सौर्यायणिरिति रूपम्॥ **गर्गगोत्रमिति** ॥ ततश्च 'गर्गादिभ्यो यञ्' इति यञिति भावः। एव-मुभयोर्मध्ये एकस्य नामत्वं एकस्यावयवार्थकत्वम्। एकस्योभयगोत्रा-पत्यत्वासम्भवात् ॥ **कोसलायां भव इति** ॥ नगर्यामिति शेषः। तद्धिता इति वचनात्। शैषिको यञ्प्रत्ययः॥ **आश्वलायन इति**॥ 'नडादिभ्यः फक्' इति फक् ॥ **विदर्भेषु प्रभवो वैदर्भिरिति**॥ यस्स विदर्भः तस्यापत्यमिति शेषः। अथवा विदर्भेषु भवो वैदर्भिः 'बाह्वादिभ्यश्च' इति अपत्यार्थे उत्पत्त्यर्थे उक्तोऽपि यञ् 'तद्धिताः' इति वचनात् भावार्थेऽपि भवतीति भावः॥ **कत्यस्येति** ॥ कत्यशब्दात् गर्गादित्वाद्यञि छान्दसे आदिवृद्ध्यभावे कतस्य गोत्रापत्यं कत्यस्तस्यापत्यमिति कतस्य युवा विवक्षिते 'यञियोश्च' इति फक्। ब्रह्मपरा वेदाभ्यासे तात्पर्यवन्त इति। 'ब्रह्म प्रोक्तं तपोऽध्यात्मवेदज्ञानेषु सूरिभिः' इति विश्वोक्तेः ब्रह्मशब्दो वेदार्थकः॥ **अधिकारेति** ॥ 'भक्तिमान् परमे विष्णौ यस्त्वध्ययनवान्नरः' इत्युक्तेरिति भावः ॥ १-१ ॥

**ताम्रपर्णीय**–॥ **अपव्याख्येति** ॥ प्रजापतेरित्याद्यैक्यस्य परैर्व्याख्यातत्वात् व्याख्यानरूपप्रमाणेनैव तन्निरासोऽपि लक्ष्यत इति लाघवमिति भावः॥ **सुकेशा नामत इति**॥ सुकेशेति शब्दस्य साधुत्वमुक्तं प्राचीनटीकाकारैर्वरदतीर्थैः। सुकेशेत्यत्राधिक्येन दीर्घत्वं विद्याधिक्यविवक्षया । 'आधिक्येऽधिकम्' इति सूत्रात्। अस्ति ह्यस्य दुष्परिहरप्रश्नकर्तृत्वं नाम विशेषः। विसर्गाभावस्तु 'हल् ङ्याभ्यो दीर्घात्...' इत्यादिना विभक्तिलोपादिति। केचित्तु सुकेशा नामत इति दीर्घः सुलोपः छान्दस इति भावः। अत एव सौर्यायणीशब्दे तथा वक्ष्यति। 'सुपां सुलुक्' इति पूर्वसवर्णदीर्घो वेति व्याचक्षते ॥ **दीर्घः सुलोप इति**॥ सुकेशस्यैवाधिक्यविवक्षया दीर्घप्राप्त्यभावात्। अत एव दीर्घात्परं विहित-सुलोपानवकाशात्। अत्र दीर्घः सुलोपः छान्दस इति भावः। नच सुपां सुलुक् पूर्वसवर्णेति सूत्रात् पूर्वसवर्णदीर्घप्राप्तिरस्तीति भ्रमितव्यम्। अच्परत्वाभावेनात्र तदप्राप्तेरिति ज्ञेयम्॥ **उक्तानुष्ठानेति** । ब्रह्मशब्दितवेदोक्तानुष्ठानेत्यर्थः॥ १-१॥

**मङ्कालीय**–॥ **अथेति** ॥ आद्यपद्यनिबन्धनानन्तरमित्यर्थः ॥ **लाघवेनेति** ॥ व्याख्यानरूपप्रमाणविरोधेनैवापव्याख्याननिराकरणं लभ्यत इति लाघवमित्यर्थः ॥ **अत्रेति** ॥ उपनिषदीत्यर्थः॥ **आख्यायिकेति** ॥ उपलब्धार्थविषयककथेत्यर्थः। अतिप्रशस्ततरा इयं विद्येत्यन्वयः। ननु श्रद्धादीनां निष्प्रयोजनत्वे कैश्चिदनुष्ठानमात्रेण कथमनुष्ठेयत्वम्। अतो नेदं तात्पर्यकथनं युक्तमित्यत आह— **स्मर्यते हीति** ॥ **सुकेशा नामत इति** ॥ शोभनाः केशा यस्येति विग्रहे सुकेशशब्दात्परस्य प्रथमैकवचनस्य 'सोः सुपां सुलुक्' इत्यादिना आकारादेशे सवर्णदीर्घे च सुकेशेत्याकारान्तं रूपं ज्ञेयम्॥ **कोसलायामिति** ॥ नगर्यामिति शेषः। विदर्भेषु देशेषु। कदाचित् क्वचित्समवेता इत्यध्याहारोक्तिः॥ **अधिकारेति** ॥ 'भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नर' इत्याद्युक्तेरिति भावः॥ १-१ ॥

**अनन्तभट्टीय**–ननु श्रद्धादीनां निष्प्रयोजनत्वे कैश्चिदनुष्ठानमात्रेण कथमनुष्ठेयत्वमतो नेदं तात्पर्यकथनं युक्तमित्यत आह— **स्मर्यते हीति**॥

**गूढकर्तृक– अपव्याख्याननिराकरणं चेति** ।। 'आदित्यो ह वै प्रजापतिः' इत्यादौ परेण आदित्याद्यैक्यपरत्वस्य व्याख्यातत्वादिति भावः। नकारान्तोऽयं शब्दः। अत एव सौर्यायणीशब्द एव दीर्घः। सुलोपः छान्दस इति वक्ष्यति। अन्यथा प्रथमातिक्रमणे कारणाभावादिति ।। १-१ ।।

## श्रीराघवेन्द्रयतिविरचितः(?) षट्प्रश्नोपनिषत्खण्डार्थः

श्रीरङ्गविठ्ठलं नत्वा सर्वज्ञादिगुरूनपि।
षट्प्रश्नाख्योपनिषदष्टीकोक्तार्थो निगद्यते।।

इह खलु संसारपारावारे निपतितमधिकारिणं जनं जननी तनयमिव परमात्मतत्त्वज्ञानप्लवेनोद्धर्तुं प्रवृत्तेयमाथर्वणी ब्राह्मणोपनिषत् । अस्या उपनिषदो वासुदेवो मुख्यतया प्रतिपाद्यो देवता । प्राणादयस्तु तच्छेषतया तथेति ज्ञेयम्। पिप्पलादादय ऋषयः । छन्दस्तु क्वचिदक्षरपरिगणनया ज्ञेयम्। अत्र सुकेशा इत्यादिकाऽऽख्यायिका विद्याप्रशंसया श्रोतॄणां श्रद्धाजननार्था। एवं किल महद्भिर्भारद्वाजप्रभृतिभिरपीयं विद्या संवत्सरब्रह्मचर्यादिना लब्धा। अतोऽतिप्रशस्ततरा। अतोऽस्माभिरप्येवंविधैर्भाव्यमिति । स्मर्यते हि श्रद्धादिनां तत्त्वज्ञानहेतुत्वं 'श्रद्धावाँल्लभते ज्ञानम्' इत्यादिना । अत्रेयमक्षरयोजना– १. सुकेशा नामतः भरद्वाजस्यापत्यं भारद्वाजः । २. शिबेरपत्यं शैब्यः सत्यकामो नामतः । ३. सूर्यस्यापत्यं सौर्यः, तदपत्यं सौर्यायणिः, दीर्घः सुलोपश्च छान्दस इति स एव सौर्यायणी, गर्गस्य गोत्रो गार्ग्यः । ४. कौसल्यो नामतः, कोसलायां भवो वा, अश्वलस्यापत्यमाश्वलायनः । ५. भृगोरपत्यं भार्गवः, विदर्भेषु भवो वैदर्भिः। ६. कबन्धी नामतः, कत्यस्यापत्यं कात्यायनः । इतरेतरयोगे चशद्बाः । त एते ह किल ब्रह्मपराः वेदाभ्यासे तात्पर्यवन्तः, ब्रह्मनिष्ठाः तदुक्तानुष्ठानशीलाश्च मुनयः कदाचित् क्वचित् समवेताः परं ब्रह्म वासुदेवमन्वेषमाणाः जिज्ञासवः। बभूवुरिति शेषः । ब्रह्मपरा इत्यादि ब्रह्मजिज्ञासाधिकारसम्पत्तिकथनम् । ततस्ते किलैष पिप्पलादः यद्वयं पृच्छामः तत्सर्वं वक्ष्यति तस्मादेनं गच्छाम इति निश्चित्य समित्पाणयो भूत्वा भगवन्तं पूज्यं पिप्पलादमुपसन्नाः तत्समीपं प्राप्ताः। वैशब्दः पिप्पलादस्य प्रश्नप्रतिवचनसामर्थ्यद्योतकः ।। १-१ ।।

## नरसिंहभिक्षुविरचिता षट्प्रश्नार्थप्रकाशिका

वासुदेवं प्रणम्यैनं जयार्योक्त्यवलम्बनात्।
षट्प्रश्नोपनिषत्खण्डसत्तत्त्वार्थः 'प्रकाश्यते॥

इह हि सासांरिकविविधदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिकारिण अशेषदुःखनिवृत्तये परमानन्दावाप्तये च वासुदेवं सम्यज्ज्ञापयितुं षट्प्रश्नोपनिषत्प्रवृत्ता। तत्रादौ विद्याप्रशंसया श्रोतॄणां श्रद्धाजननाय आख्यायिकामाह– **सुकेशा इति**॥ १. सुकेशा नामतः । भरद्वाजस्यापत्यं भारद्वाजः। २. शिबेरपत्यं शैब्यः, सत्यकामो नामतः। ३. सूर्यस्यापत्यं सौर्यः, तदपत्यं सौर्यायणिः। दीर्घसुपलोपश्छान्दस इति स एव सौर्यायणी, गर्गस्य गोत्रापत्यं गार्ग्यः। ४. कौसल्यो नामतः। कोसलायां भवो वा । अश्वलस्यापत्यं आश्वलायनः। ५. भृगोरपत्यं भार्गवः, विदर्भेषु प्रभवो वैदर्भिः। ६. कबन्धी नामतः, कत्यायन-स्यापत्यं कात्यायनः। इतरेतरयोगे चशब्दाः। त एतेऽखिला ब्रह्मपरा वेदाभ्यासे तात्पर्यवन्तो ब्रह्मनिष्ठाः तदुक्तानुष्ठाननिष्ठाश्च मुनयः कदाचित्समवेताः परं ब्रह्म वासुदेवं अन्वेषमाणाः जिज्ञासवो बभूवुः। ततस्ते किल पिप्पलादो यत्तु वयं पृच्छामः तत्सर्वं वक्ष्यति, तस्मादेनं प्रति गच्छाम इति निश्चित्य समित्पाणयो भूत्वा भगवन्तं पूज्यं पिप्पलादं उपसन्नाः तत्समीपं प्राप्ताः॥ १-१ ॥

## उदयगिरिकेशवाचार्यविरचिता षट्प्रश्नपञ्चिका

लक्ष्मीनरहरिं विष्णुं लक्ष्मीनरहरीष्टदम्।
वासुदेवं सदा वासुदेवेष्टं नौमि सर्वगम्॥ १ ॥
वासुदेवगुरुं नत्वा पूर्णबोधमुनेर्वचः।
टीकाकृदुक्तिं चालोच्य कुर्वे षट्प्रश्नपञ्चिकाम्॥ २ ॥

इह खलु विविधसांसारिकदुःखदर्शनेन विरक्तस्य शमदमादिमतो मुमुक्षोरधिका-रिणस्तन्निवृत्तये परमान्दावाप्तये च भगवतः परमात्मनः स्वरूपं प्रतिपादयितुं प्रवृत्तामिमामुपनिषदमविद्यापिहितनयनैरन्यैरन्यथाव्याख्यातत्वेन

प्रवृत्तमिव मन्यमानैः परमकारुणिकैर्भगवद्भिः आनन्दतीर्थमुनिभिः सम्यक्कृतामपि च जयतीर्थचरणैर्भाष्यव्याख्यानपुरःसरं विशदीकृतामपि अधुनातनानां हरिगुरुचरणनलिनयुगलैकनिष्ठमानसानां सुखोपायेन बोद्धुमिच्छूनां बोधसौकर्याय अस्माभिरपि यथामति व्याख्यायते इयमाथर्वणी ब्राह्मणोपनिषत्। परब्रह्मणो वासुदेवस्य जगत्सर्जनादिकं प्रतिपादयतीत्यतो वासुदेवोऽस्या देवता। ऋषिः पिप्पलादः। छन्दस्त्वक्षरगणनया यथासम्भवं बोध्यम्।

ब्रह्मज्ञानेनैव सकलानिष्टपरिहारपूर्वकेष्टप्राप्तिर्भवतीति सदागमैः प्रतिपाद्यत्वात् पिप्पलादभारद्वाजादिसंवादव्याजेन परमात्मनः सर्वोत्कृष्टत्वमाह वेदपुरुषः— **सुकेशा इत्यादिना**॥ सुकेशा नामतः, भरद्वाजस्यापत्यं भारद्वाजः। 'तस्यापत्यम्' इत्यण्। शिबेरपत्यं, सत्यकामो नामतः। सौर्यायणीनामा, गर्गस्य गोत्रापत्यम्। कोसलायां भवः, आश्वलायननामा। विदर्भेषु भवः, वैदर्भिर्भार्गवो नाम। कात्यस्यापत्यं, कबन्धी नामतः। इतरेतरयोगे चशब्दाः। तत्र तत्र तद्धितप्रत्ययाः अणादयो यथासङ्ख्यमूह्याः। त एते पूर्वोक्ताः। हेति प्रसिद्धम्। ब्रह्मपराः ब्रह्मचर्यं प्राप्य वेदाभ्यासवन्तः। अनेन ब्रह्मजिज्ञासायामधिकारित्वं सूचयति। ब्रह्मनिष्ठाः ब्रह्म वेदः तदुक्तानुष्ठाननिष्ठाः आदरवन्तः । कदाचित् क्वचित्समवेताः परब्रह्म वासुदेवाख्यमन्वेषमाणा जिज्ञासवः। बभूवुरिति शेषः। ततः किं कुर्युरित्यत आह— **एष ह वै इति** ॥ ते पूर्वोक्ताः। हेति हर्षे। एष ह पिप्पलादः किल यद्वयं पृच्छामः तत्सर्वं वक्ष्यति वैशब्देन तस्य प्रश्नप्रतिवचनसामर्थ्यं द्योतयति। तस्मादेनं गच्छाम इति निश्चित्य समित्पाणयः समित् पाणौ येषां ते कृताञ्जलिपुटाः सन्तः भगवन्तं पूज्यं पिप्पलादनामानं मुनिमुपसन्नाः समीपं गताः। षद्लृधातोः निष्ठा, नत्वम्। ब्रह्मजिज्ञासार्थमिति शेषः।। १-१ ॥

उपनिषत्

**तान् ह स ऋषिरुवाच । भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ । यथाकामं प्रश्नान् पृच्छत । यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥**

**टीका**—तानागतान् ह किल ऋषिः पिप्पलाद उवाच। किमिति। यद्यपि यूयं प्रागेव तपआदिसम्पन्नास्तथाऽपि भूयः पुनरेव तपसा सर्वेन्द्रियनिग्रहलक्षणेन विशेषतोऽपि ब्रह्मचर्येण श्रद्धयाऽऽस्तिक्यनिष्ठया च युक्ताः संवत्सरमेकमस्मान्परिचरन्तः संवत्स्यथ सम्यग्वसत। ततो यथेष्टं प्रश्नान् प्रष्टव्यार्थान् पृच्छत। युष्माभिः पृष्टश्च प्रतिवक्तुं यदि वयं विज्ञास्यामः तर्हि सर्वं वो युष्मभ्यं वक्ष्याम इति। नह्येवं सति अवचने कारणमस्तीति हशब्दः॥ २ ॥

**प्रकाशिका**—आ सम्यक् ब्रह्मचर्येणेत्यर्थमभिप्रेत्याऽह— **विशेषतोऽपि ब्रह्मचर्येणेति**॥ २ ॥

**श्रीनिवास— एवं सतीति** ॥ भवद्भिः संवत्सरब्रह्मचर्ये कृतेऽस्माकं तद्विषयज्ञाने च सति अवचने कारणं नास्तीत्यर्थः।। १-२ ॥

**छलारी**—॥ **यद्यपि यूयं प्रागेव तपआदिसम्पन्ना इति**॥ इदं तु 'भूय एव तपसा'इत्याद्युक्तेः स्वारस्यं वचनं ज्ञेयम्॥ १-२ ॥

**ताम्रपर्णीय—न ह्येवं सतीति**॥ भवतामधिकारसम्पत्तौ सत्यां अवचने कारणं न ह्यस्तीत्यर्थः॥ १-२ ॥

**मङ्गालीय**—यद्यपि यूयं प्रागेव तपआदिसम्पन्ना इति॥ एतद्भूय एव तपसेत्याद्युक्तेस्तात्पर्यवचनम्। इन्द्रियमात्रनिग्रहवाचिना तपःशब्देन गुह्येन्द्रियनिग्रहरूपब्रह्मचर्यवाचिनो ब्रह्मचर्यशब्दस्यागतार्थत्वाय विशेषतोऽपी-त्युक्तम्। उत्तरत्र पृच्छतेति लटो विद्यमानत्वात्तदनुसारेण संवत्स्यथेति लृडपि लडन्तत्वेन व्याख्यातः। 'सर्वं ह वो वक्ष्यामः' इत्यत्र हशब्दस्य तत्रैव सम्बन्धे किलार्थत्वासम्भवाद्व्यत्यस्तान्वये च तान्ह स ऋषिरुवाचेत्यत्र विद्यमानेन पौनरुक्त्यमित्यत आह— **न ह्येवं सतीति** ॥ १-२ ॥

**अनन्तभट्टीय**—"सर्वं ह वो वक्ष्यामः" इत्यत्र हशब्दस्य तद्वाक्य एव सम्बन्धे किलार्थकत्वासम्भवात् व्यस्तान्वये च "तान्ह स ऋषिः" इत्यत्र विद्यमानेन पौनरुक्त्यापत्तेरित्यत आह— **न ह्येवं सतीति**॥ १-२ ॥

**खण्डार्थ**–तानागतान् ह किल स ऋषिः पिप्पलाद उवाच । किमिति ? यद्यपि यूयं प्रागेव तपआदिसम्पन्नाः, तथाऽपि भूयः पुनरेव तपसा सर्वेन्द्रियनिग्रह-लक्षणेन विशेषतोऽपि ब्रह्मचर्येण श्रद्धायाऽस्तिक्यनिष्ठया युक्ताः संवत्सरमेकमस्मान् परिचरन्तः संवत्स्यथ सम्यग्वसत । ततो यथेष्टं प्रश्नान् प्रष्टव्यार्थान् पृच्छत । ततो युष्माभिः पृष्टं प्रतिवक्तुं यदि वयं विज्ञास्यामस्तर्हि सर्वं वो युष्मभ्यं वक्ष्याम इति । न ह्येवं सति अवचने कारणमस्तीति हशब्दः ॥ १-२ ॥

**नर**–तानागतान्किल स ऋषिः पिप्पलाद उवाच, किमिति। यद्यपि यूयं प्रागेव तपआदिसम्पन्नाः तथापि भूयः पुनरेव तपसा सर्वेन्द्रियनिग्रहलक्षणेन, विशेषतोऽपि ब्रह्मचर्येण श्रद्धया आस्तिक्यनिष्ठया च युक्ताः संवत्सरमेक-मस्मान्परिचरन्तः संवत्स्यथ सम्यग्वसत। ततो यथेष्टं प्रश्नान् प्रष्टव्यार्थान् पृच्छत। युष्माभिः पृष्टं च प्रतिवक्तुं यदि वयं विज्ञास्यामः, तर्हि सर्वं वो युष्मभ्यं वक्ष्याम इति। न ह्येवं सत्यवचने कारणमस्तीति हशब्दः॥ १-२ ॥

**उदय**–ततः मुनिः किमकार्षीदित्यत आह– **तान्हेति** ॥ तान् भरद्वाजादीन् हेत्यानन्दपूर्वकं स ऋषिः पिप्पलाद उवाच। किमित्याहेत्याह– **भूय एवेति** ॥ भूय एव पुनरेव अनेन पूर्वमेव तपआदिमत्वमस्तीति ज्ञायते। तपसा ब्रह्मचर्येण सर्वेन्द्रियनिग्रहलक्षणेन । श्रद्धया आस्तिक्यनिष्ठया युक्ताः सन्तः यूयं एकसंवत्सर-पर्यन्तमस्मान् परिचरन्तः संवत्स्यथ सम्यक् वसत। अनेन गुरुशुश्रूषावत्त्वं सूचयति। 'नासंवत्सरवासिने प्रब्रूयात्' इति श्रुतावुक्तत्वादिति भावः। न केवलं वसतिरेव ज्ञानसाधिकेत्यत आह– **यथाकाममिति** ॥ ततः यथाकामं यथेष्टम्। कमि-रिच्छार्थेऽव्ययीभावः। प्रश्नान् प्रष्टव्यान् 'अविज्ञातप्रार्थनं च प्रश्न इत्यभिधीयते' इत्युक्तेः। पृच्छत मां प्रतीति शेषः। स्वगर्वपरिहारपूर्वमाह– **यदीति** ॥ युष्मत्पृष्टं प्रतिवक्तुं यदि वयं विज्ञास्यामः विज्ञानवन्तो भविष्यामः बहुवचनेन प्रतिवचने सामर्थ्यं द्योतयति। तर्हि युष्मत्पृष्टं सर्वं वो युष्मभ्यं युष्मान् वा वक्ष्यामः। हेति अवचने कारणाभावद्योतकम्॥ १-२ ॥

उपनिषत्

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् कुतो ह वा इमाः प्रजाः प्रजायन्त इति । तस्मै स होवाच। प्रजाकामो ह वै प्रजापतिः । स तपोऽतप्यत ॥ ३ ॥**

**टीका**–अथ तदुक्तनियमानुष्ठानसमनन्तरम्। तेषां मध्ये कबन्धी कात्यायन उपेत्योपसदनं कृत्वा पिप्पलादं पप्रच्छ। पाठक्रमादर्थक्रमो बलीयानिति पश्चादुक्तस्यापि कात्यायनस्य प्रश्नः प्रतिवचनं च प्रथममुक्तम्। एवमन्यत्रापि द्रष्टव्यम्। तच्च क्रमं तत्रैव दर्शयिष्यामः। किमिति? भगवन्, कुतो निमित्तकारणात् पुरुषादिमा देवाद्याः सर्वाः प्रजा उत्पद्यन्त इति। ह वा इति प्रजानां प्रजननस्य सुप्रसिद्धताद्योतकौ निपातौ। सुप्रसिद्धं तावत् प्रजानां प्रजननम्। नचैतदन्तरेण कारणमुपपन्नम्। सर्वदाऽपि प्रसङ्गात्। नचाचेतनैरेव कारणैः। चेतनानधिष्ठितानां कार्यकरत्वादर्शनात् । नच जीवोऽधिष्ठाता। अस्वतन्त्रत्वात्। नापीश्वरः। तदनुपलम्भादिति प्रश्नाशयः। यद्यपि न भगवान् सर्वेषां प्रत्यक्षगोचरो वर्तमानः कुलाल इव घटं, प्रजा जनयति। तथाऽपि जगत्कारणीभूतान् प्राणादीनुत्पाद्य तेष्वाविश्य तान्निमित्तीकृत्य निखिलाः प्रजा जनयतीति न कश्चिद्विरोध इत्यभिप्रायवांस्तस्मै पृष्टवते कात्यायनाय स पिप्पलादः किलोत्तरमुवाच। किमिति? प्रजानां ब्रह्मादीनां पतिः पालकः परमेश्वरः कल्पादौ किलाऽऽत्मनः प्रजाकामो देवादिप्रजावत्त्वमात्मन इच्छन्नवर्तत। अथ स सर्वज्ञोऽपि लोकविडम्बनाय तपोऽतप्यत कर्तव्यमन्वालोचयत्॥ ३ ॥

**वामन**–'प्रजाकामो वै प्रजापतिः' इत्यादीनां कबन्धिप्रश्नपरिहारवाक्याना-मभिप्रायं तु 'प्रजानां पालनाद्विष्णुः' इत्यादिना प्रजापतिसंहितावाक्येन प्रदर्शयति। अत्र तपस्तपनम्। जगत् सृजामीत्यालोचनम्॥ १-३ ॥

**प्रकाशिका**–'पाठक्रमादर्थक्रमो ज्यायान्' इत्यत्र कबन्धी हि सृष्टिप्रकारं पृच्छति। तदन्ये तु 'कत्येव देवाः प्रजाः विधारयन्त' इत्यादिना सृष्ट्युत्तर-कालीनपालनादिप्रकारान् पृच्छन्ति। अत एतत्प्रश्नप्रतिवचनयोरादित्वमित्यर्थः।

'किमिति' इत्यत्र किमिति पृष्टवानिति शेषः। 'चेतनानधिष्ठितानाम्' इत्यत्र चेतनेनापरिगृहीतानामित्यर्थः। अवर्ततेति योग्यक्रियाभिधानम्॥ ३ ॥

**सत्य–** ननु कुतो निमित्तकारणात् प्रजा जायन्त इति निमित्तकारणप्रश्नस्य किं बीजम् । कियन्ति च कारणानि कानि चात्र पक्षे बाधकानि यतः कुतः कस्मात्कारणादिति प्रश्नः सङ्गच्छत इत्यतः तदेतत्सर्वं प्रदृश्य प्रश्नार्थमाह– **हवा इत्युपक्रम्य सुप्रसिद्धं तावदित्यादिना** ॥ प्रजाकामो वै प्रजापतिरिति श्रुतौ आत्मनः प्रजाः देवादीन् यत्किञ्चिदर्थं कामयत इत्यर्थः प्रतीयते । नचासौ युक्तः । अद्यापि देवानामनुत्पन्नत्वेन यत्किञ्चित्प्रयोजनोद्देशेन तेषां कामनायोगादित्यतो व्याख्याति– **देवादिप्रजावत्त्वमात्मन इच्छन्नवर्ततेति**॥ १-३ ॥

**छलारी**–॥ **उपसदनमिति**॥ विनयपूर्वकं समीपेऽवस्थानमित्यर्थः। ननु 'सुकेशा च भारद्वाज' इति प्रथमोक्तस्य प्रश्नप्रतिवचनेऽनुक्त्वा अन्तिमोक्तस्य कात्यायनस्य प्रथमतः प्रश्नप्रतिवचनस्य कथने किं कारणमित्यत आह– **पाठक्रमादिति** ॥ पूर्वमीमांसायां पञ्चमाध्याये अर्थाच्चेत्यधिकरणे अग्निहोत्रं जुहोति यवागुं पचतीति विषयवाक्येऽयं न्याय उक्तः। तथाहि इतः अधिकरणे समिधो यजति, तनूनपातं यजतीत्युक्तपञ्चप्रयाजेषु एतद्वाक्यपाठक्रमेणैव क्रमः प्रतिपादितः। वाक्यक्रमेण क्रमेणैव बुद्ध्यारूढानां प्रयाजानां प्राप्तक्रमस्य त्यागे कारणाभावात्। तथाग्नि-होत्रहोमयवागूपाकयोरपि वाक्यक्रमेण क्रमः प्राप्नोति उक्तन्यायसाम्यादिति पूर्वपक्षिते अर्थाच्चेति जैमिनिना सिद्धान्तिततम्। अर्थात् प्रयोजनवशादित्यर्थः। अग्निहोत्रहोमस्य द्रव्यसापेक्षत्वेन यवागूपाकस्य प्रतिपत्तिसापेक्षत्वेन अग्निहोत्रहोमे द्रव्यान्तरकल्पनाप्रसङ्गात्। यवागूपाकस्य अपूर्वार्थिकत्वकल्पनाप्रसङ्गाद्वरं पूर्वं यवागूपाकः पश्चादग्निहोत्रहोम इति कल्पनम्। एवं पञ्चमादिप्रश्नानां षष्ठप्रश्न-प्रतिवचनादिसापेक्षत्वात् प्रथमतः वेदपुरुषेण षष्ठप्रश्नप्रतिवचनाद्यनुवादः कृत इति भावः॥ **एवमन्यत्रापीति**॥ भार्गववैदर्भ्यादि-प्रश्नादिषु षट्सु उक्तसापेक्षत्वं वक्ष्यमाणटीकाकारोक्तरीत्या ज्ञेयम्। तच्च क्रमं सापेक्षिकत्वरूपार्थिकक्रमं तत्र तत्तत्सापेक्षकत्वरूपार्थिकादिक्रमं तत्र सङ्गतिकथनसमय इत्यर्थः॥ १-३ ॥

**ताम्रपर्णीय–**देवादिप्रजा अन्यार्थं कामयतीति प्रजाकाम इत्युक्तम्। अद्याप्यनुत्पन्नदेवानां यत्किञ्चिदर्थं कामनायोगादित्यतो व्याचष्टे– **देवादिप्रजावत्त्वमिति** ॥ १-३ ॥

**मङ्गालीय–** ॥ **उपसदनमिति** ॥ विनयपूर्वकं समीपेऽवस्थानमित्यर्थः। ननु सुकेशा च भारद्वाज इति प्रथमोक्तस्य ऋषेः प्रश्नप्रतिवचनेऽनुक्त्वान्तिमस्य कात्यायनस्य प्रथमतः प्रश्नप्रतिवचनकथनं किमर्थं कृतमित्यत आह– **पाठक्रमादिति** ॥ पूर्वमीमांसायां प्रथमेऽध्याये अर्थाच्चेत्यधिकरणेऽग्निहोत्रं जुहोति यवागूं पचति इत्युदाहृत्यायं न्याय उदाहृतः। तथाहि– क्रमेण वा नियम्येत क्रत्वैकत्वे तद्गुणत्वादित्यधिकरणे 'समिधो यजति' 'तनूनापातं यजति' 'इडो यजति' 'बर्हिर्यजति' 'स्वाहाकारं यजति' इत्युक्तपञ्चप्रयाजेषु वाक्यपाठक्रमेणैव क्रमः प्रदर्शयिष्यते। वाक्यक्रमेणैव बुद्ध्यारूढानां प्राप्तक्रमस्य त्यागे कारणाभावात्। तथाग्निहोत्रहोमयवागूपाकयोरपि वाक्यक्रमेणैव क्रमः प्राप्नोति। उक्तन्यायसाम्यादिति पूर्वपक्षं प्रापय्यार्थाच्चेति जैमिनिना राद्धान्तितम्। अर्थात्प्रयोजनवशादित्यर्थः। अग्निहोत्रहोमस्य द्रव्यसापेक्षत्वेन यवागूपाकस्य प्रतिपत्तिसापेक्षत्वेनाग्निहोत्रहोमे द्रव्यान्तरकल्पनाप्रसङ्गाद्यवागूपाकस्यापूर्वार्थत्वकल्पनाप्रसङ्गाच्च वरं पूर्वं यवागूपाकः पश्चादग्निहोत्रहोम इति। एवं पञ्चमादिप्रश्नानां षष्ठप्रतिवचनादिसापेक्षत्वात्प्रथमतो वेदपुरुषेण षष्ठप्रश्नप्रतिवचनानुवादः कृत इति भावः॥ **एवमन्यत्रापीति** ॥ भार्गववैदर्भ्यादिप्रश्नादिष्वित्यर्थः॥ **तं च क्रममिति** ॥ सापेक्षत्वरूपार्थक्रमम्। तत्र तत्र तत्तत्प्रश्नसङ्गतिकथनावसर इत्यर्थः॥ **किमितीति** ॥ किं पप्रच्छेत्याकाङ्क्षायामाहेत्यर्थः। ननु कुतो निमित्तकारणात्प्रजा जायन्त इति निमित्तकारणप्रश्नस्य किं बीजं कियन्ति च कारणानि कानि च तत्पक्षे बाधकानि येन कुतः कस्मात्कारणादिति प्रश्नः सङ्गच्छेतेत्यतस्तदेतत्सर्वं प्रदर्श्य प्रश्नार्थमाह– **हवा इत्युपक्रम्य सुप्रसिद्धं तावदित्यादिना** ॥ नचाचेतनैरेव कारणैरुपपन्नमित्यन्वयः। तेष्वाविश्य स्वयमेव जनयति चेत् प्राणादीनां पराधीनमपि जगत्कर्तृत्वं न स्यात्। जीवाधिष्ठितशरीरवदित्यतः तान्निमित्तीकृत्येत्युक्तम्। हेत्यस्यार्थः किलेति। किमितीति।

किमुवाचेत्याकाङ्क्षायामाहेत्यर्थः। 'प्रजाकामो ह वै प्रजापतिः' इति श्रुतौ आत्मनः प्रजाः देवादीन् यत्किञ्चिदर्थं कामयत इत्यर्थः प्रतीयते नचासौ युक्तः। अद्यापि देवादीनामनुत्पन्नत्वेन यत्किञ्चित्प्रयोजनोद्देशेन तेषां कामनायोगादित्यतो व्याख्याति– **देवादिप्रजावत्त्वमात्मन इच्छन्नवर्ततेति** ॥ १-३ ॥

**अनन्तभट्टीय**–तेष्वाविश्य स्वयमेव जनयति चेत्प्राणादीनां पराधीनमपि जगत्कर्तृत्वं न स्यात् जीवाधिष्ठितशरीरवदित्यतस्तान्निमित्तीकृत्येत्युक्तम्॥ १-३ ॥

**खण्डार्थ**–अथोक्तनियमसमनुष्ठानानन्तरं तेषां मध्ये कबन्धी कात्यायन उपेत्यो-पसदनं कृत्वा पिप्पलादं पप्रच्छ । पाठक्रमादर्थक्रमो बलीयानिति पश्चादुक्तस्यापि कात्यायनस्य प्रश्नप्रतिवचनं प्रथममुक्तम् । एवमन्यत्रापि द्रष्टव्यम्। तच्च क्रमं तत्रैव दर्शयिष्यामः । किमिति? भगवन् कुतो निमित्तकारणात् पुरुषादिमा देवाद्याः सर्वाः प्रजाः प्रजायन्त उत्पद्यन्त इति । ह वा इति प्रजानां प्रजननस्य सुप्रसिद्धता-द्योतकौ निपातौ । सुप्रसिद्धं तावत् प्रजानां प्रजननम्। न चैतदन्तरेण कारणमुप-पन्नम् । सर्वदाऽपि प्रसङ्गात् । न चाचेतनैरेव कारणैः। चेतनानधिष्ठितानां तेषां कार्यकर्तृत्वादर्शनात् । न च जीवोऽधिष्ठाता, अस्वतन्त्रत्वात् । नापीश्वरः, तदनुपलम्भादिति प्रश्नाभिप्रायः । यद्यपि भगवान् सर्वेषां न प्रत्यक्षगोचरो वर्तमानः कुलालादयो घटादिकमिव प्रजाः प्रजनयति। तथाऽपि जगत्कारणीभूतान् प्राणादीनुत्पाद्य तेष्वाविश्य तान्निमित्तीकृत्य निखिलाः प्रजाः जनयन्तीति न कश्चिद् विरोध इत्याशयवान् तस्मै पृष्टवते कात्यायनाय स पिप्पलादः किलोत्तरमुवाच । किमिति? प्रजानां ब्रह्मादीनां पतिः पालकः परमेश्वरः कल्पादौ किलाऽत्मनः प्रजाकामो देवादिप्रजावत्त्वमात्मन इच्छन्नवर्तत । अथ सर्वज्ञोऽपि लोकविडम्बनाय तपोऽतप्यत । कर्तव्यमन्वालोचयत् ॥ १-३ ॥

**नर**–अथ तदुक्तनियमानुष्ठानसमनन्तरं तेषां मध्ये कबन्धी कात्यायन उपेत्य गुरूपसत्तिं कृत्वा पिप्पलादं पप्रच्छ। पाठक्रमादर्थक्रमो बलीयानिति पश्चा-दुक्तस्यापि कात्यायनस्य प्रश्नप्रतिवचनञ्च पूर्वमुक्तम्। एवमुत्तरत्रापि ज्ञातव्यम्।

तच्च क्रमं तत्रैव दर्शयिष्यामः। किमिति? भगवन् कुतो निमित्तकारणात् पुरुषादिमा देवाद्याः प्रजाः सर्वा उत्पद्यन्त इति। हवा इति प्रजानां प्रजननस्य सुप्रसिद्धताद्योतकौ निपातौ। प्रजननस्य कर्तृसापेक्षत्वादस्मदादीनां चेतनानां अस्वतन्त्रत्वादीश्वरस्यादर्शनादिति प्रश्नाभिप्रायः। प्रत्यक्षागोचरत्वेऽपि स्वसृष्ट-प्राणादीन् निमित्तीकृत्य ईश्वरः सृजतीति श्रुतिस्मृतिसिद्धार्थाङ्गीकारे न कोऽपि विरोध इत्याशयवान् तस्मै पृष्टवते कात्यायनाय स पिप्पलाद उवाच किल किमिति? प्रजानां ब्रह्मादीनां पतिः पालकः परमेश्वरः किलात्मनः प्रजाकामः देवादिप्रजावत्त्वं आत्मनः इच्छन्नवर्तत। अथ सर्वज्ञोऽपि लोक-विडम्बनाय स तपोऽतप्यत कर्तव्यं अन्वालोचयत्॥ १-३ ॥

**उदय**–गुरुणा आज्ञापितास्ते किमकार्षुरित्यत आह– **अथेत्यादिना** ॥ अथ तदुक्तनियमानन्तरं तेषु कबन्धी कात्यायनः उपेत्य समीपमागत्य गुरुं पप्रच्छ प्रश्नं कृतवान्। पाठक्रमापेक्षया अर्थक्रमस्य बलीयस्त्वेन पश्चादुक्तस्यापि प्राथम्योक्तिर्युक्ता। एवमुत्तरत्रापि ज्ञेयम्। प्रश्नमेवाह– **भगवन्निति**॥ हे भगवन् पूज्य । कुतः कस्मान्निमित्तकारणात् पुरुषात् । इमा देवाद्याः प्रजाः प्रजायन्ते उत्पद्यन्ते। प्रजाजननं च सुप्रसिद्धमिति हवेत्येताभ्यामाह। उत्पत्तिश्च विना कारणमसम्भाविनी केवलाचेतनानां कारणत्वादर्शनात् । जीवस्य चास्वातन्त्र्यात् । ईश्वरस्य चानुपलब्धेरिति प्रश्नाशयः। एवं पृष्टवते तस्मै कात्यायनाय स मुनिः हेति सहर्षमुवाच उत्तरं दत्तवान्। यद्यपि भगवान् न प्रत्यक्षगोचरः कुलाल इव । तथापि जगत्कारणीभूतान् प्राणादीनुत्पाद्य तेष्वाविश्य तान्निमित्तीकृत्य प्रजा उत्पादयतीति न कश्चिद्विरोध इत्याशयेन प्रतिवचनमाह गुरुः– **प्रजाकाम इति**॥ प्रजानां ब्रह्मादीनां पतिः पालकः भगवान्, कल्पादौ, प्रजाकामः प्रजासु कामो यस्येति देवादिप्रजावत्त्वमात्मन इच्छन् इत्यर्थः। अवर्तत इति शेषः। ह वै प्रसिद्धम्। स सर्वज्ञोऽपि भगवान् लोकविडम्बनार्थं तपोऽतप्यत कर्तव्य-मन्वालोचयत्। आलोचनं च तज्ज्ञानात्मकमेव ॥ १-३ ॥

उपनिषत्

**स मिथुनमुत्पादयते । रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ॥ ४ ॥**

भाष्यम्

**प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः ।**
**स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम्॥**
**सूर्याचन्द्रगतौ देवः ससर्ज पुरुषोत्तमः।**
**तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः॥**

**टीका**–आलोचितकार्यश्च स प्रजापतिर्मिथुनं स्त्रीपुरुषरूपं द्वन्द्वमुत्पादयते उदपादयत्। किं तत्? रयिं वित्ताभिमानिनीं भारतीम्। प्राणं मुख्यं चेत्येतत्। ननु सर्वाः प्रजाः सिसृक्षुः परमेश्वरः कथं तौ उदपादयदिति। एवं मन्यते स्म प्रजापतिः। एतौ रयिप्राणौ मे मम बहुविधाः प्रजाः करिष्यत इति। एतावाविश्याहं प्रजाः स्रक्ष्यामि इमौ प्रजासर्जने मम निमित्तीभविष्यत इति। अभूतां च तौ प्रजापतेः प्रजासर्गे निमित्तमित्युच्यते— **आदित्य इत्यादिना**॥ ततोऽसौ प्राणः प्रजापतिना आदित्यादिषु सृष्टेष्वादित्यः आदित्यनामा आदित्यं प्रविष्टो बभूव। रयिरेव रयिरपि चन्द्रमाः चन्द्रमानाम्नी चन्द्रमसमाविष्टा बभूव। एवं सूर्याचन्द्रगतौ तावाविश्य तौ निमित्तीकृत्य प्रजापतिः प्रजाः ससर्जेति वाक्यशेषः तदेतदाह— **प्रजानामिति** सूर्याचन्द्रनामानौ तौ सूर्याचन्द्रगतौ चकारेति योज्यम् ॥ १-४॥

**वामन**–'आदित्यो ह वै प्राण' इत्यत्र सूर्यनामा मुख्यवायुरुच्यते रयिरिति च चन्द्रनाम्नी सरस्वती सूर्यचन्द्रस्थत्वात्तयोः ॥ १-४ ॥

**सत्य**–प्राणश्च रयिश्चेत्येतन्मिथुनमित्यन्वयः । उपनिषदि रयिप्राणयोः सूर्याचन्द्रमसोः प्रवेशमात्रकथनेन भगवतस्तौ निमित्तीकृत्य स्वसृष्टत्वं न लभ्यत इत्यसङ्गतिरित्यतः भाष्यानुसारेण श्रुतावध्याहरति– **एवं सूर्याचन्द्रगताविति** ॥

तश्च क्रमं तत्रैव दर्शयिष्यामः। किमिति? भगवन् कुतो निमित्तकारणात् पुरुषादिमा देवाद्याः प्रजाः सर्वा उत्पद्यन्त इति। हवा इति प्रजानां प्रजननस्य सुप्रसिद्धताद्योतकौ निपातौ। प्रजननस्य कर्तृसापेक्षत्वादस्मदादीनां चेतनानां अस्वतन्त्रत्वादीश्वरस्यादर्शनादिति प्रश्नाभिप्रायः। प्रत्यक्षागोचरत्वेऽपि स्वसृष्ट-प्राणादीन् निमित्तीकृत्य ईश्वरः सृजतीति श्रुतिस्मृतिसिद्धार्थाङ्गीकारे न कोऽपि विरोध इत्याशयवान् तस्मै पृष्टवते कात्यायनाय स पिप्पलाद उवाच किल किमिति? प्रजानां ब्रह्मादीनां पतिः पालकः परमेश्वरः किलात्मनः प्रजाकामः देवादिप्रजावत्त्वं आत्मनः इच्छन्नवर्तत। अथ सर्वज्ञोऽपि लोक-विडम्बनाय स तपोऽतप्यत कर्तव्यं अन्वालोचयत्॥ १-३ ॥

**उदय**–गुरुणा आज्ञापितास्ते किमकार्षुरित्यत आह– **अथेत्यादिना** ॥ अथ तदुक्तनियमानन्तरं तेषु कबन्धी कात्यायनः उपेत्य समीपमागत्य गुरुं पप्रच्छ प्रश्नं कृतवान्। पाठक्रमापेक्षया अर्थक्रमस्य बलीयस्त्वेन पश्चादुक्तस्यापि प्राथम्योक्तिर्युक्ता। एवमुत्तरत्रापि ज्ञेयम्। प्रश्नमेवाह– **भगवन्निति**॥ हे भगवन् पूज्य । कुतः कस्मान्निमित्तकारणात् पुरुषात् । इमा देवाद्याः प्रजाः प्रजायन्ते उत्पद्यन्ते। प्रजाजननं च सुप्रसिद्धमिति हवेत्येताभ्यामाह। उत्पत्तिश्च विना कारणमसम्भाविनी केवलाचेतनानां कारणत्वादर्शनात् । जीवस्य चास्वातन्त्र्यात् । ईश्वरस्य चानुपलब्धेरिति प्रश्नाशयः। एवं पृष्टवते तस्मै कात्यायनाय स मुनिः हेति सहर्षमुवाच उत्तरं दत्तवान्। यद्यपि भगवान् न प्रत्यक्षगोचरः कुलाल इव । तथापि जगत्कारणीभूतान् प्राणादीनुत्पाद्य तेष्वाविश्य तान्निमित्तीकृत्य प्रजा उत्पादयतीति न कश्चिद्विरोध इत्याशयेन प्रतिवचनमाह गुरुः– **प्रजाकाम इति**॥ प्रजानां ब्रह्मादीनां पतिः पालकः भगवान्, कल्पादौ, प्रजाकामः प्रजासु कामो यस्येति देवादिप्रजावत्त्वमात्मन इच्छन् इत्यर्थः। अवर्तत इति शेषः। ह वै प्रसिद्धम्। स सर्वज्ञोऽपि भगवान् लोकविडम्बनार्थं तपोऽतप्यत कर्तव्य-मन्वालोचयत्। आलोचनं च तज्ज्ञानात्मकमेव ॥ १-३ ॥

उपनिषत्

**स मिथुनमुत्पादयते । रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः ॥ ४ ॥**

भाष्यम्

**प्रजानां पालनाद्विष्णुः प्रजापतिरितीरितः ।**
**स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीम्॥**
**सूर्याचन्द्रगतौ देवः ससर्ज पुरुषोत्तमः।**
**तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः॥**

**टीका**–आलोचितकार्यश्च स प्रजापतिर्मिथुनं स्त्रीपुरुषरूपं द्वन्द्वमुत्पादयते उदपादयत्। किं तत्? रयिं वित्ताभिमानिनीं भारतीम्। प्राणं मुख्यं चेत्येतत्। ननु सर्वाः प्रजाः सिसृक्षुः परमेश्वरः कथं तौ उदपादयदिति। एवं मन्यते स्म प्रजापतिः। एतौ रयिप्राणौ मे मम बहुविधाः प्रजाः करिष्यत इति। एतावाविश्याहं प्रजाः स्रक्ष्यामि इमौ प्रजासर्जने मम निमित्तीभविष्यत इति। अभूतां च तौ प्रजापतेः प्रजासर्गे निमित्तमित्युच्यते— **आदित्य इत्यादिना**॥ ततोऽसौ प्राणः प्रजापतिना आदित्यादिषु सृष्टेष्वादित्यः आदित्यनामा आदित्यं प्रविष्टो बभूव। रयिरेव रयिरपि चन्द्रमाः चन्द्रमानाम्नी चन्द्रमसमाविष्टा बभूव। एवं सूर्याचन्द्रगतौ तावाविश्य तौ निमित्तीकृत्य प्रजापतिः प्रजाः ससर्जेति वाक्यशेषः तदेतदाह— **प्रजानामिति** सूर्याचन्द्रनामानौ तौ सूर्याचन्द्रगतौ चकारेति योज्यम् ॥ १-४॥

**वामन**–'आदित्यो ह वै प्राण' इत्यत्र सूर्यनामा मुख्यवायुरुच्यते रयिरिति च चन्द्रनाम्नी सरस्वती सूर्यचन्द्रस्थत्वात्तयोः ॥ १-४ ॥

**सत्य**–प्राणश्च रयिश्चेत्येतन्मिथुनमित्यन्वयः । उपनिषदि रयिप्राणयोः सूर्याचन्द्रमसोः प्रवेशमात्रकथनेन भगवतस्तौ निमित्तीकृत्य स्वसृष्टत्वं न लभ्यत इत्यसङ्गतिरित्यतः भाष्यानुसारेण श्रुतावध्याहरति– **एवं सूर्याचन्द्रगताविति** ॥

सूर्याचन्द्रगतौ रयिप्राणौ ससर्ज इत्यनन्वितमित्यतः ससर्ज सृष्ट्वा सूर्याचन्द्रगतौ चकारेति ससर्जेत्यस्यावृत्त्या योजयति– **सूर्येति योज्यमिति** ॥

**छलारी–॥ वाक्यशेष इति** ॥ एवं सूर्याचन्द्रगतावित्यादिभाष्यमुपनिषदि रयिरेव चन्द्रमा इत्यनन्तरं शेषोक्तिः। स वायुमित्याद्यभिप्रायकथनं ज्ञेयम्। चकारेति ससर्जेत्यस्य व्याख्यानम्॥ १-४ ॥

**ताम्रपर्णीय–**प्राणं मुख्यं चेत्येतन्मिथुनमित्यन्वयः। उपनिषदि रयिप्राणयोः सूर्याचन्द्रमसोः प्रवेशमात्रकथनेन भगवतस्तौ निमित्तीकृत्य स्रष्टृत्वं न लभ्यत इति असङ्गतिरित्यतो भाष्यानुसारेण श्रुतावध्याहरति– **एवं सूर्याचन्द्रगताविति**॥ भाष्ये स वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीं ससर्ज। सूर्याचन्द्रमसौ तावाविश्य सर्वसृष्टीः करोमीत्यन्वयो वाच्यः। स न युक्तः। तयोः सूर्याचन्द्रप्रवेशानुक्त्यानुवादायोगादित्यतोऽध्याहारेण योजयति– **सूर्याचन्द्रनामानावेताविति**॥ ततश्चैवं भाष्ययोजना। स प्रजापतिर्वायुं सूर्यनामानं चन्द्रनाम्नीं सरस्वतीञ्च ससर्ज। सृष्ट्वा सूर्यचन्द्रनामानावेतौ सूर्याचन्द्रगतौ चकार। कृत्वा च तावाविश्य सृष्टीः करोतीति।। १-४ ॥

**मङ्गालीय–**प्राणं मुख्यं चेत्येतन्मिथुनमित्यन्वयः। रयिं प्राणमिति द्वितीया प्रथमार्थे अत इतिकरणोपपत्तिः।। **कथं तावुदपादयदितीति** ।। इत्याकाङ्क्षायां तदभिप्रायमाहेत्यर्थः। रयिप्राणौ मम बहुविधाः प्रजाः करिष्यत इति मत्वा तौ सृष्ट्वा स्वयं तूष्णीमासीनश्चेन्न स्वयं जगत्कारणं स्यात्प्रजापतिरित्यतस्तदभिप्रायमाह– **एतावाविश्येति** ॥ रयिप्राणयोः सूर्याचन्द्रमसोः प्रवेशमात्रकथनेन भगवतस्तौ निमित्तीकृत्य स्रष्टृत्वं न लभ्यत इत्यसङ्गतिरित्यतो भाष्यानुसारेण श्रुतावध्याहरति– **एवं सूर्याचन्द्रगताविति**॥ वायुभारत्योः सृष्ट्यनन्तरमेव सूर्यादौ प्रवेशस्य वक्तव्यतया सूर्याचन्द्रगतौ तौ ससर्जेत्यनुपपन्नमित्यतो योजयति– **सूर्येति** ॥ **योज्यमिति** ॥ वायुं सरस्वतीं च ससर्ज तदनन्तरं सूर्यादिनामानौ तौ सूर्याचन्द्रगतौ ससर्ज चकारेति ससर्जेत्यस्यावृत्त्या भाष्यं व्याख्येयमित्यर्थः। तावाविश्येत्यादिकं भाष्यमुपनिषद्यध्याहारकथनरूपमिति

ज्ञेयम्। सूर्याचन्द्रगतौ ससर्जेत्यनेन प्राणरय्योः स्वत एव सूर्याचन्द्रमसोः प्रवेश-प्रतीतिरपोढा भवति। ॥ १-४ ॥

**अनन्तभट्टीय**—वायुभारत्योः सृष्ट्यनन्तरमेव सूर्यादौ प्रवेशस्य वक्तव्यतया सूर्याचन्द्रगतौ तौ ससर्जेत्युपपन्नमित्यतो योजयति— **सूर्येति**॥ वायुं सरस्वतीं ससर्ज। तदनन्तरं सूर्यादिनामानौ तौ तद्गतौ चकारेति योज्यमित्यर्थः॥ १-४ ॥

**खण्डार्थ**—आलोचितकार्यस्सः प्रजापतिः मिथुनं स्त्रीपुरुषद्वन्द्वमुत्पादयते उद-पादयत् । न च प्राणादिजननेनास्य प्रयोजनं शङ्कनीयम् । तत्स्वभाव्यादित्युत्पादयत इति वर्तमानापदेशेनाऽह । किं तन्मिथुनम्? रयिं वित्ताभिमानिनीं भारतीं प्राणं मुख्यं चेत्येतत् । सर्वाः प्रजाः सिसृक्षुः परमेश्वरः कथं तावुदपादयदिति चेत्, एवं मन्यते स्म प्रजापतिः । एतौ रयिप्राणौ मे मम बहुविधाः प्रजाः करिष्यत इति । एतावाविश्याहं प्रजाः स्रक्ष्यामि । इमौ मे प्रजासर्जने निमित्ती-भविष्यत इति । अभूतां च तौ प्रजापतेः प्रजासर्जने निमित्तमित्युच्यते— **आदित्य इत्यादिना** ॥ ततोऽसौ प्राणः प्रजापतिनाऽऽदित्यादिषु सृष्टेष्वादित्यः आदित्य-नामा आदित्यं प्रविष्टो बभूव । रयिरेव रयिरपि चन्द्रमाः चन्द्रमानाम्नी चन्द्रमस्या-विष्टा बभूव । एवं चन्द्रसूर्यगतौ तावाविश्य तौ निमित्तीकृत्य प्रजापतिः प्रजास्ससर्जेति वाक्यशेषः ॥ १-४ ॥

**गूढकर्तृक**—विवक्षितलाभाय भाष्यानुसारेण श्रुतावध्याहरति— **एवमिति** ॥ १-४ ॥

**नर**—आलोचितकार्यः स प्रजापतिः मिथुनं स्त्रीपुरुषरूपं उत्पादयते उदपादयत्। किं तन्मिथुनम्। रयिं वैदिकलौकिकवित्ताभिमानिनीं भारतीं सर्वचेष्टकं मुख्यप्राणं चेत्येत्येतत्। सर्वप्रजाकामः परमेश्वरः केनाभिप्रायेण तावुदपादयदित्यत आह— **एतौ इति** ॥ एतौ रयिप्राणौ बहुविधाः प्रजाः करिष्यतः एतावाविश्य अहं प्रजाः करिष्यामि, एतौ प्रजासर्जने निमित्तीभविष्यत इति। अभूतां च तौ प्रजापतेः प्रजासर्गे निमित्तमित्याह— **आदित्य इति** ॥ ततोऽसौ प्राणः प्रजापतिना आदित्यादिषु सृष्टेष्वादित्यः आदित्यनामा आदित्यं

प्रविष्टो बभूव। रयिरेव रयिरपि चन्द्रमा चन्द्रमानाम्नी चन्द्रमसं प्रविष्टा बभूव। एवं सूर्यचन्द्रगतौ तौ रयिप्राणावाविश्य निमित्तीकृत्य प्रजापतिः प्रजाः ससर्जेति वाक्यशेषः॥ १-४ ॥

**उदय**– सोऽन्वालोचितकार्यो भगवान् स्त्रीपुरुषरूपं द्वन्द्वं उत्पादयते उत्पादयतीति । छान्दसत्वात्पदव्यत्ययः। किं तत् द्वन्द्वमित्यत आह– **रयिञ्चेति** ॥ 'रै अर्थे विभवे च' इति कोशात् वित्ताभिमानिर्नी भारतीम् । प्राणं मुख्यप्राणं चेत्येतद् द्वन्द्वमित्यर्थः। चशब्द इतरेतरयोगे। किमर्थमेतदेव द्वन्द्वमादावुदपादयदित्यत्राह– **एताविति**॥ एतौ रयिप्राणौ मे मदनुज्ञया बहुधाऽनेकप्रकारेण प्रजाः स्वावरान् रुद्रादीन् करिष्यतः उत्पादयतः। एतावाविश्य अहमेव प्रजाः स्रक्ष्यामि । इमौ च प्रजासर्जने मम निमित्तीभविष्यत इत्यर्थः। रयिप्राणौ प्रजासर्गे निमित्तकारणे अभूतामित्याह– **आदित्य इत्यादिना** ॥ असौ प्राणः आदित्यः। प्रजापतिना आदित्यादिषु सृष्टेषु आदित्यं प्रविष्टो बभूवेति शेषः। रयिरेव चन्द्रमाः चन्द्रमसमाविष्टा बभूव। एवं सूर्याचन्द्रगतौ रयिप्राणौ आविश्य तौ निमित्तीकृत्य प्रजापतिः प्रजाः ससर्जेति वाक्यशेषद्योतकौ हवै निपातौ॥ १-४ ॥

उपनिषत्

**रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं च । तस्मान्मूर्तिरेव रयिः । अथाऽदित्य उदयन् यत् प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु सन्निधत्ते । यद् दक्षिणां यत् प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत् सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु सन्निधत्ते ॥ ५ ॥**

भाष्यम्

**अमूर्तस्थः स वायुस्तु मूर्तसंस्था सरस्वती**
**आदित्यस्थः स वायुस्तु प्राणानात्मनि सन्नयेत्।**

**प्राच्याः प्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः॥**
**प्रतीच्या वरुणाद्यास्तु सोमाद्या उत्तराः स्मृताः।**
**शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ।**
**सभार्याः कोणपैः सार्धं चत्वरो दिशि दिश्यपि॥ ५ ॥**

**टीका**–प्रकारान्तरेण तयोः प्रजोत्पत्तिनिमित्तत्वमुच्यते– **रयिर्वा इत्यादिना**॥ एतत्सर्वं रयिर्वै प्रमाणप्रसिद्धमेतत्। किं तत्सर्वम्। मूर्तं तेजोऽबन्नलक्षणम्, अमूर्तं च प्रकृत्यादिकमिति यदुपादानकारणं राशिद्वयं तस्माद्राशिद्वयात् प्रविभक्ता या मूर्तिः यन्मूर्तं सैव रयिः। सप्तम्यर्थे वा पञ्चमी। अमूर्तं प्राण इति शेषः। प्रकृत्यादिषु स्थित्वा तेषामुपादानत्वशक्तिं प्रेरयन्तौ तौ प्रजापतेः प्रजोत्पत्तौ निमित्तं भवत इति यावत्। तदिदमाह– **अमूर्तस्थ इति**॥ तावाविश्येति सर्वत्र सम्बध्यते। आदित्ये स्थित्वा प्राणः प्रजोत्पत्तिनिमित्तं भवतीत्युक्तम्। तत्कथमित्युच्यते– **अथेत्यादि**॥ अथशब्दः प्रकृतमूर्तादिप्रसङ्गादर्थान्तरद्योतकः। आदित्यः आदित्यस्थः प्राणः उदयन् उद्गच्छन् प्राचीं दिशं प्रकाशेन प्रविशतीति यत्तेन प्राच्यान् प्राणान् स्वरश्मिषु सन्निधत्ते संनिवेशयति। स्वरश्मिभिस्तान् व्याप्नोतीति यावत्। एवं दक्षिणां दिशं प्रविशतीति यत्तेन दक्षिणान् प्राणान् स्वरश्मिषु सन्निधत्त इत्यादि योज्यम्। दिशोऽन्तरा दशदिशां मध्ये। अवान्तरदिशां प्राच्यादिग्रहणेनैव गृहीतत्वात्। अन्यथा प्राच्यान् प्राणानित्यादिबहुवचनायोगात्। यत्सर्वमिति निगमनम् ॥ ५ ॥

**वामन**–तौ रयिप्राणौ मूर्तामूर्तदेवते इत्यभिप्रायेणाह— **रयिर्वा एतदिति**।। यन्मूर्तं चामूर्तं चेत्युक्त्वा तस्मान्मूर्तिरेव रयिरित्यवधारणा-दमूर्तिर्वायुरिति सिद्ध्यति। तत्स्थौ तावित्यभिप्रायः। तदेतदाह– **अमूर्तस्थः स इत्यादिना**॥ मूर्तं पृथिव्यादित्रयम् । अमूर्तं वाय्वादिद्वयम्। एवं भूतपञ्चकसंस्थौ वाक्प्राणौ प्रविश्य स्वयमेव भगवान् सर्वसृष्ट्यादिकृद्भवतीति भावः। अथादित्य उदयन्नित्यादे-रभिप्रायमादित्यस्थ इत्यादिना दर्शयति। स भगवान् वायुस्थ एवादित्ये स्थित्वा प्राच्यादिप्राणान् स्वरश्मिषु प्रवेशयति । उदक्तनौ उपरितनौ।

इन्द्राद्या इत्यादिष्वाद्यशब्दात् के कति च इत्याकाङ्क्षायामाह– **सभार्या इति**॥ इन्द्राद्याः कोणपैः सार्धं सभार्या इत्यन्वयः। दिशि दिशि चत्वार इत्युक्तत्वात्। अपरथा चतुष्ट्वासिद्धेः । अवाचीनावपिं सभार्यत्वाच्चत्वार एव तथैवान्त्यावपीति सर्वे चतुर्विंशतिः ॥ १-५ ॥

**प्रकाशिका**–रयिर्वा एतत्सर्वमिति श्रुतिवाक्ये रयिपदेन प्राणोऽप्युपलक्ष्यते। एवञ्च तावुभौ सूर्याचन्द्रमसोः स्थित्वा सृष्टिकरणात् पूर्वमिदं सर्वं जगत् ससृजतुरित्यर्थः। सूर्ये स्थित्वा शोषणपाचनादीनां या सृष्टिः, चन्द्रे स्थित्वौषध्यादीनां च या सृष्टिः सा सर्वाऽपि मूर्तामूर्तात्मकप्रपञ्चसृष्टिं विनाऽनवसरदुस्थेत्यतः सर्वोपयुक्तपञ्चभूतसृष्टिः महदव्यक्ताख्यतत्त्वाभिमानिनि जडरूपेणैव प्रकृतेति भावः। 'तस्मान्मूर्तिरेव रयिः' इत्यत्र तस्मिन् राशिद्वय इति सप्तम्यर्थे पञ्चमीति भावेनोक्तम्– **सप्तम्यर्थ इति**॥ मूर्तामूर्तयोः प्रस्तुतत्वात्तत्र मूर्तस्य रयित्वोक्तावमूर्तस्य प्राणत्वमपि प्रकरणवशाल्लभ्यते। तथाऽपि स्पष्टीकरणायामूर्तं प्राण इति शेष इत्युक्तम्। 'अन्यथा प्राच्यान् प्राणान्' इत्यत्रान्यथाऽवान्तरदिशां प्राच्यादिष्वसङ्ग्रहे प्राच्यान् दक्षिणानित्यादिबहुवचनं न स्यात्। प्राचीनप्राणस्य स्वभार्यया सह द्वित्वसम्भवेऽपि बहुवचनायोगात्। कोणाभिमानिस्वभार्यासहिताग्नेरपि सङ्ग्रहे चतुर्णामपि लाभाद्बहुवचनोपपत्तिरिति भावः। दशदिशामवान्तरप्रदेशस्य च प्रागेवोक्तत्वात्पुनः सर्वपदवाच्यस्यान्यस्यायोगान्निगमनमित्युक्तम्॥ ५ ॥

**सत्य**–'अमूर्तस्थः स वायुस्तु' इत्यादि भाष्ये । 'तस्मान्मूर्तिरेव रयिः' इत्यादि श्रुतौ च । रयिप्राणयोर्मूर्तादिस्थत्वकथनमत्रासङ्गतम् । प्रजापतेः प्रजसर्गे तयोर्निमित्तत्वा-प्रतिपादनादित्यतः 'तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः' इत्यस्य अमूर्तस्थः स वायुस्तु इत्यादावनुवृत्त्या योज्यमित्याह– **तावाविश्येति सर्वत्र सम्बद्ध्यत इति** ॥ सर्वत्र संवत्सरस्थो भगवानित्यादौ सर्वत्रेत्यर्थः । उदयन्नुद्गच्छन्नित्यनेन श्रुतौ उदयन्निति अय पय गतावित्ययते रूपं नतु यातेः । तथात्वे उद्यन्निति श्रुतौ प्रयोगः प्रसज्येनेत्युक्तं भवति– **बहुवचनायोगादिति** ॥

अवान्तरदिशां प्रच्यादिशब्देन ग्रहणे तु 'सभार्यैः कोणपैः सार्धम्' इत्युक्तन्यायेन बहुवचनमुपपद्यत इति भावः ॥ **यत्सर्वमिति निगमनमिति** ॥ तेन आदित्य उदयन्नित्यादीनां न पौनरुक्त्यमिति भावः ॥ १-५ ॥

**श्रीनिवास**–अवान्तरदिशां आग्नेयादिकोणानाम् ॥ **बहुवचनेति** ॥ प्राच्यप्राणस्येन्द्रस्यैकत्वात् । तत्स्त्रीग्रहणेऽपि द्वित्वापत्त्या बहुवचनमयुक्तमित्यर्थः॥ १-५ ॥

**छलारी**–॥ **मूर्तं तेजोऽबन्नलक्षणमिति**॥ 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते' 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सद्' इति श्रुतिद्वयात्। तत्रान्तिमश्रुतौ पञ्चमहाभूतानां मध्य इति शेषोक्त्या मूर्तशब्दार्थभूतसच्छब्दस्य तेजोऽबन्नार्थकत्वेन मूर्तशब्दस्यापि तदर्थकत्वात्। अमूर्तशब्देन तेजोऽबन्नव्यतिरिक्तकारणप्रसङ्गात्। कारणत्वावच्छिन्नकारणमात्रं विवक्षितमिति भावेनाह– **अमूर्तं च प्रकृत्यादिकमिति॥ तस्माद्राशिद्वयात्प्रविभक्तेति**॥ तस्मादिति शब्देन मूर्तामूर्तराशिद्वयग्रहणात्पञ्चम्याश्च पञ्चमीविभक्तेरिति सूत्रेण जातत्वात्। अनया पञ्चम्या प्रकृतराशिद्वयमध्ये एकराशेः राश्यन्तरात्पृथक्करणरूपविभागबोधनात् मूर्तामूर्तराशिद्वयान्तर्गतामूर्तभिन्नं मूर्तं रयिरिति श्रुत्यर्थः। सूत्रार्थस्तु जात्यादिभिर्निर्धार्यमाणस्य पृथक्कारणे द्योत्ये पञ्चमी स्यादिति। उदाहरणं तु क्षत्रियाद् ब्राह्मणः पूज्य इति। उपक्रमानुरोधात् मूर्तिर्मूर्तमिति। सप्तम्यर्थे पञ्चमीति वा। तथाच तस्मात् तस्मिन् कारणसमुदायमध्ये मूर्तिर्मूर्तत्वगुणावच्छिन्नं तेजोऽबन्नाख्यं रयिः सरस्वत्यधिष्ठानमित्यर्थः। श्रुतौ न्यूनत्वशङ्काया व्यावृत्त्यर्थमाह– **अमूर्तं प्राण इति शेष इति**॥ तस्मादिति अत्रापि सम्बद्ध्यते। अर्थः पूर्ववदेव । समुदायार्थमाह– **प्रकृत्यादिष्विति** ॥ **सर्वत्र सम्बद्ध्यत इति**॥ मूर्तामूर्तस्थसरस्वतीवाय्वोः संवत्सरावयवदक्षिणोत्तरायणस्थसरस्वतीवाय्वोः मासावयवशुक्लकृष्णपक्षस्थवायुसरस्वत्योस्तदुत्तरमपीत्यर्थः। ननु आदित्य उदयन्नित्यादिनोक्तं प्रमेयं यत्सर्वमित्यनेन पुनः किमर्थमुच्यत इत्यत आह– **यत्सर्वमिति निगमनमिति** ॥ १-५ ॥

**ताम्रपर्णीय**–तस्मादिति पञ्चम्यपादाने विवक्षितेति व्याचष्टे– **तस्माद्राशिद्वयादिति**॥ **सप्तम्यर्थ इति** ॥ तस्मिन्राशिद्वये यन्मूर्तमित्यर्थः॥ **उदयन् उद्गच्छन्निति** ॥ अनेन श्रुतावुदयन्निति 'अय पय गतौ' इत्ययते रूपम्। नतु यातेः। तथात्वे उद्यन्निति श्रुतौ प्रयोगः प्रसज्येतेत्युक्तं भवति॥ **अन्यथेति**॥ अवान्तर-दिशां प्राच्यादिग्रहणेन ग्रहणे प्राच्यान् प्राणानिति बहुवचनं न सम्भवति। ग्रहणे तु 'सभार्याः कोणपैः सार्धं चत्वारो दिशि दिश्यपि' इत्युक्तरीत्या बहुवचनं युज्यत इति भावः॥ **यत्सर्वमिति निगमनमिति** ॥ तेन यत्प्राचीदिशं जयतीत्यादिनोक्तत्वात्पौनरुक्त्यमिति न शङ्कनीयमिति भावः॥ १-५ ॥

**मङ्गालीय**–रयिप्राणयोः सूर्याद्यधिष्ठानेन प्रजोत्पत्तिनिमित्तत्वस्योक्तत्वात्प्रकारान्तरेणेत्युक्तम्। वा इत्यस्य व्याख्यानं प्रमाणसिद्धमेतदिति। किं तत्सर्वमिति मूर्तिरिव रयिरित्यन्तस्यावतारिका॥ **मूर्तं तेजोऽबन्नलक्षणमिति** ॥ 'मूर्तं सदिति सम्प्रोक्तममूर्तमसदुच्यते' इति श्रुतौ मूर्तामूर्तशब्दयोः सदसच्छब्दपर्यायत्वोक्त्या 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सत्' इति सच्छब्दस्य पञ्चभूतानां मध्ये वाय्वन्तरिक्षातिरिक्ततेजोऽबन्नपरत्वकथनेन मूर्तं तेजोऽबन्नलक्षणमिति व्याख्यातम्। वाय्वन्तरिक्षपरेणामूर्तशब्देन कारणप्रसङ्गात्तेजोऽबन्नव्यतिरिक्तकारणत्वावच्छिन्नकारणमात्रं विवक्षितमिति भावेनाह– **अमूर्तं च प्रकृत्यादिकमिति** ॥ यन्मूर्तं चेति यच्छब्दस्य तस्मादित्युत्तरतच्छब्दान्वयं दर्शयति– **इति यदुपादानकारणं राशिद्वयमिति** ॥ तेजोऽबन्नलक्षणं तदतिरिक्तं प्रकृत्यादिकमिति यद्राशिद्वयं तस्मादित्यर्थः॥ **प्रविभक्ता या मूर्तिरिति** ॥ प्रविभक्तेति पञ्चम्यर्थकथनम्। 'पञ्चमी विभक्ते' इति सूत्रेण जात्यादिभिर्निर्धार्यमाणस्य पृथक्करणे द्योत्ये पञ्चमी स्यात्। यथा क्षत्रियाद् ब्राह्मणः पूज्य इत्यर्थकेन जातयाऽनया पञ्चम्या प्रकृतराशिद्वयमध्ये एकराशेः पृथक्करणरूपविभागबोधनात्। ततश्च मूर्तामूर्तराशिद्वयान्तर्गतामूर्तभिन्नं मूर्तं रयिरिति श्रुत्यर्थो भवति। उपक्रमानुरोधान्मूर्तिरित्यस्य मूर्तमिति व्याख्यानम्। नन्वनेन सूत्रेण पञ्चमी न युक्ता। निर्धार्यमाणस्य सामान्यशब्दोपात्तेन यत्र सामान्याकारेणापि अभेदो नास्ति

तत्रैवानेन पञ्चम्या विधानात्। यथा 'माधुराः पाटलिपुत्रेभ्य आढ्यतरा' इति 'गवां गोषु वा बहुक्षीरा कृष्णा' इतिवन्निर्धार्यमाणस्योपादानराशिद्वया-त्सामान्याकारेणाभेदस्यैव विद्यमानत्वात्। 'यतश्च निर्धारणम्' इत्यनेन षष्ठी-सप्तम्योरन्यतरस्या एव न्याय्यत्वादित्यस्वरसादाह– **सप्तम्यर्थे वा पञ्चमीति** ॥ तथाच तस्मान्मूर्तामूर्तरूपकारणसमुदायमध्ये मूर्तिर्मूर्तं रयिः सरस्वत्यभिमन्य-मानमित्यर्थ उक्तो भवति। श्रुतौ न्यूनतामाशङ्क्याह– **अमूर्तं प्राण इति शेष इति** ॥ तस्मादित्येतदत्रापि सम्बद्ध्यते। अर्थस्तु पूर्ववदेव। समुदायार्थमाह– **प्रकृत्यादिष्विति** ॥ 'अमूर्तस्थः स वायुस्तु' इत्यादिना भाष्ये 'तस्मान्मूर्तिरेव रयिः' इत्यादिना श्रुतौ च रयिप्राणयोर्मूर्तादिस्थत्वकथनमात्रमसङ्गतम्। प्रजापतेः प्रजासर्गे तयोर्निमित्तत्वाप्रतिपादनादित्यतः 'तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः' इत्येतदमूर्तस्थः स वायुरित्यादावनुवृत्त्या योज्यमित्याह– **तावा-विश्येति सर्वत्र सम्बद्ध्यत इति** ॥ सर्वत्र अत्र संवत्सरस्थो भगवानित्यादौ। भर्तृस्थः स स्वयं वायुरेवमित्यन्ते सर्वत्रेत्यर्थः ॥ **आदित्ये स्थित्वेति** ॥ आदित्यो ह वै प्राण इत्यत्रेत्यर्थः ॥ **तत्कथमित्युच्यत इति** ॥ तत्कथमित्यत उच्यत इत्यर्थः। उक्तविवरणत्वेऽथशब्दोऽनुपपन्न इत्यत आह– **अथशब्द इति** ॥ सन्निधत्त इत्येतदन्तर्णीतणिच्त्वमित्यभिप्रेत्य सन्निवेशयतीत्युक्तम् ॥ **इत्यादि योज्यमिति** ॥ यत्प्रतीचीं दिशं प्रविशति तेन प्रतीच्यान्प्राणान् स्वरश्मिषु सन्निधत्ते। यदधो दिशं प्रविशति तेनाधःस्थान्प्राणान् स्वरश्मिषु सन्निधत्ते। यदूर्ध्वं प्रविशति तेनोर्ध्वस्थान् प्राणान् स्वरश्मिषु सन्निधत्ते। यदन्तरा दिशः प्रविशति तेनान्तरास्थान् प्राणान् स्वरश्मिषु सन्निधत्त इति योज्यमित्यर्थः। आग्नेयादीनां दिशां अन्तरा दिश इत्यनेन ग्रहणं किं न स्यादित्यत आह— **अवान्तर-दिशामिति** ॥ नन्वथादित्य उदयन्नित्यादिनोक्तमेव प्रमेयं यत्सर्वमित्यादिना पुनः किमर्थमुच्यत इत्यत आह– **यत्सर्वमिति निगमनमिति** ॥ १-५ ॥

**अनन्तभट्टीय**–यन्मूर्तं चेति यच्छब्दस्य तस्मान्मूर्तिरिति तच्छब्देना-न्वयाद्रयिर्वा एतत्सर्वमित्येतच्छब्दस्य प्रमाणप्रसिद्धमित्यर्थ उक्तः। किं तत्सर्व-मिति मूर्तिरेव रयिरित्यन्तस्यावतारिका । उक्तविवरणत्वेऽथशब्दोनुपपन्न इत्यत

आह— **अथशब्द इति**॥ पौनरुक्त्याद्बिभ्यता यत्सर्वमिति वाक्यं ग्रन्थ-व्याख्येयमित्यत आह— **यत्सर्वमिति**॥ १-५ ॥

**खण्डार्थ**–प्रकारान्तरेण प्रजोत्पत्तिनिमित्तत्वमुच्यते– **रयिर्वा इत्यदिना** ॥ एतत्सर्वं रयिर्वै प्रमाणसिद्धमेतत्। किं तत्सर्वम्? तेजोबन्नलक्षणमूर्तममूर्तञ्च प्रकृत्यादिकमिति यदुपादानकारणराशिद्वयं तस्माद्राशिद्वयात् प्रविभक्ता या मूर्तिः यन्मूर्तं सैव रयिः । सप्तम्यर्थे चेयं पञ्चमी । अमूर्तं प्राण इति शेषः। रयि प्राणौ जगदुपादानेषु पञ्चभूतेषु प्रकृत्यादिषु च स्थित्वा तेषामुपादानत्वशक्तिं प्रेरयन्तौ प्रजापतेः प्रजोत्पत्तौ निमित्तं भवत इति यावत् । आदित्ये स्थित्वा प्राणः प्रजोत्पत्तिनिमित्तं भवतीत्युक्तं तत् कथमित्यत उच्यते– **अथेत्यादिना** ॥ अथशब्दः प्रकृतमूर्तादिप्रकारादर्थान्तरद्योतकः । आदित्यः आदित्यस्थः प्राणः उदयन् उद्गच्छन् प्राचीं दिशं प्रकाशेन प्रविशतीति यत्तेन प्राच्यान् प्राचीदिक्पालान् तद्दिग्गतप्राणिप्रणयनात् प्राणशब्दोदितान् सभार्येन्द्राग्निरूपांश्चतुरो देवान् रश्मिषु सन्निधत्त इत्यादि योज्यम्। यद्दक्षिणां प्रविशति तेन दक्षिणदिक्पालान् प्राणान् सभार्ययमनिर्ऋतिरूपांश्चतुरो देवान् रश्मिषु सन्निधत्ते। यत् प्रतीचीं प्रविशति तेन प्रतीच्यान् प्राणान् सभार्यवरुणवायुरूपचतुरो देवान् रश्मिषु सन्निधत्ते । यदुदीचीं प्रविशति तेनोदीच्यान् सभार्यसोमेशानरूपचतुरो देवान् रश्मिषु सन्निधत्ते । यदधः प्रविशति तेनाधस्तनान् सभार्यशेषमित्ररूपांश्चतुरो देवान् रश्मिषु सन्निधत्ते । यदूर्ध्वं प्रविशति तेनोर्ध्वान्प्राणान्सभार्यवीन्द्रकामरूपान् चतुरो देवान् रश्मिषु सन्निधत्ते । यदन्तरा दिशः दशदिशां मध्यं यत्प्रविशति तेन तत्रत्यान् प्राणान् रश्मिषु सन्निधत्ते। यदन्तरा दिश इति नावान्तरदिगुक्तिः, अग्न्यादिकोणपालानां प्राच्यादिग्रहणेनैव गृहीतत्वात् । तथोक्तं भाष्ये–

‘प्राच्याः प्राणास्तथेन्द्राद्या दक्षिणाश्च यमादयः ।
प्रतीच्या वरुणाद्यास्तु सोमाद्याश्चोत्तराः स्मृताः ।
शेषमित्राववाचीनौ वीन्द्रकामावुदक्तनौ ।
सभार्याः कोणपैः सार्धं चत्वारो दिशि दिश्यपि ॥’ इति ।

‘दिङ्मध्यस्था अपि केचिज्ज्ञातव्या’ इति टीकाकृतः । यत्सर्वमिति निगमनम्।

अनेनाशेषजगत्प्रकाशकतया प्रजोत्पत्तिनिमित्तत्वमुक्तम् ॥ १-५ ॥

**नर**–प्रकारान्तरेण तयोः प्रजोत्पत्तिनिमित्तत्वमुच्यते— **रयिर्वा इति** ॥ एतत्सर्वं रयिर्वै प्रमाणप्रसिद्धमेतत्। किं तत्सर्वं मूर्तं तेजोऽबन्नलक्षणम्। अमूर्तं प्रकृत्यादिकम्। परस्परसमुच्चये चशब्द इति यावत्। उपादानकारणं राशिद्वयं तस्माद्राशिद्वयाद्विभक्ता या मूर्तिः यन्मूर्तं सैव रयिः। निर्धारणसप्तम्यर्थे वा पञ्चमी। अमूर्तं प्राण इति शेषः। प्रकृत्यादिषु स्थित्वा तन्नामानौ तेषां उपादानत्वशक्तिं प्रेरयन्तौ प्रजापतेः प्रजोत्पत्तौ निमित्तौ भवत इति यावत्। तावाविश्य प्रजापतिः प्रजाः सृजति। आदित्ये स्थित्वा प्राणः प्रजोत्पत्तिनिमित्तं भवतीत्युक्तम्। तद्विशदयति– **अथेति** ॥ अथशब्दो मूर्तादिप्रसङ्गादर्थान्तरद्योतकः आदित्यः आदित्यस्थः प्राणः उदयन् उद्गच्छन् प्राचीं दिशं प्रकाशयति तत्प्रविशति यत् तेन प्रवेशेन प्राच्यान्सकोणपान् दिशि पालकत्वेन स्थितान्प्राणान् एतद्दिग्गत-प्राणिप्रणयनात् प्राणशब्दवाच्यान् इन्द्रतद्भार्याग्नितद्भार्याख्यान् चतुरः दिक्पालान् स्वरश्मिषु सन्निधत्ते सन्निवेशयति। एवमुत्तरत्रापि योज्यम्। अधो दिक्प्राणा-श्चत्वारः शेषमित्रतद्भार्याः, ऊर्ध्वदिक्प्राणाश्चत्वारः वीन्द्रकामतद्भार्याः, यदन्तरा दिशो दिशां मध्यं तत्रत्याश्चत्वारः प्राणाः तत्समीपवर्तिनः इन्द्राद्याः अन्ये केचिद्विघ्नेशविरिञ्चाद्या वा ज्ञातव्याः। सर्वमिति निगमनम्। अनेन अशेषजग-त्प्रकाशकतया प्रजोत्पत्तिनिमित्तकारणत्वमुक्तम्॥ १-५ ॥

**उदय**–प्रकारान्तरेण तयोः प्रजोत्पत्तिनिमित्तत्वमाह— **रयिर्वेति** ॥ एतत्सर्वं रयिर्वै प्रसिद्धमेतत्। किं तत्सर्वमित्यत आह— **यन्मूर्तमिति** ॥ वाय्वन्तरिक्षादन्य-द्यन्मूर्तं। अमूर्तं प्रकृत्यादिकञ्च । तस्मात् तस्मिन् । सप्तम्यर्थे पञ्चमी। मूर्तिः मूर्तं सैव रयिः। अमूर्तं प्राण इति शेषः। मूर्तामूर्तद्रव्येषु स्थित्वा तेषामुपादानत्वशक्तिं प्रेरयन्तौ रयिप्राणौ प्रजोत्पत्तौ निमित्तं भवत इत्यर्थः। आदित्ये स्थित्वा प्राणः प्रजोत्पत्तिनिमित्तं भवतीत्युक्तम्। तत्कथमित्यत आह– **अथेति** ॥ अथशब्दः प्रसङ्गविशेषसूचकः। आदित्यः आदित्यस्थः प्राणः उदयन् उद्गच्छन् "अय पय गतौ" इति धातोः शतृप्रत्ययः। इण्धातोर्वा। प्राचीं दिशं प्रकाशेन प्रविशति ।

तेन कारणेन प्राच्यान् प्राणान् दिक्पालान् इन्द्रादीन् रश्मिषु सन्निधत्ते सन्निवेशयति। स्वरश्मभिस्तान् प्राप्नोतीत्यर्थः। एवं दक्षिणां दिशं प्रविशति तेन वरुणादीन् सन्निवेशयति यदुदीचीं दिशं प्रविशति तेन सोमादीन् सन्निवेशयति। यदधोदिशं प्रविशति तेन शेषमित्रौ सन्निवेशयति। यदूर्ध्वादिदिशं प्रविशति तेन इन्द्रकामौ सन्निवेशयति। यद्दिशोऽन्तरा दिशां मध्ये प्रविशति तेन कोणपैः सार्धमिन्द्रादीन् सभार्यान् सन्निवेशयति। यत् सर्वं विश्वं प्रकाशयति तेन सर्वान् प्राणिसमूहान् सन्निवेशयति। अनेनाशेषजगत्प्रकाशकतया प्रजोत्पत्तिनिमित्तत्वं प्राणस्योक्तं भवति। एवमेव चन्द्रस्थिताया देव्या अपि सकलौषधिजननद्वारा प्रजोत्पत्ति-निमित्तत्वं ज्ञातव्यम्॥ १-५ ॥

उपनिषत्

**स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेत-दृचाऽभ्युक्तम् । विश्वरूपं करिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः॥ ६ ॥**

**टीका**—अनेनाशेषजगत्प्रकाशकतया प्रजोत्पत्तिनिमित्तत्वमुक्तम्। न केवलमेतावत्, किं नाम ? स एष आदित्ये स्थितो विश्वरूपः पूर्णरूपोऽदनादग्निः प्राणो वैश्वानरो विश्वनरसम्बन्धी तापनपाचनशोषणादिना सर्वप्रजोत्पत्तिहेतुः सन्नुदयते। 'आदित्यो हवै प्राणः' इति या प्रसिद्धिः सूचिता सोच्यते—**तदेतदिति**॥ यदुक्तं तदेतदृचा विश्वरूपमिति मन्त्रेणाभ्युक्तं स्पष्टमुक्तम्। अतो दृढतरं प्रतिपत्तव्यमिति। विश्वरूपं, कराः रश्मयोऽस्य सन्तीति करी तं करिणम्। जातवेदसं जातस्य सर्वस्य वेदितारम्। परायणं सर्वप्राणिनां परमाश्रयम्। एकं प्रधानम्। ज्योतिः प्रकाशकम्। तपन्तं तपनक्रियां कुर्वन्तम्। उपलक्षणं चैतत्। शोषणादिकं च कुर्वाणमादित्यमण्डलस्थं पुरुषं जानीयात्। किमिति? सहस्ररश्मिरनन्ततेजाः। शतधाऽनन्तरूपैः। सर्वप्राणिषु वर्तमानो यः प्राण एष प्रजानामुत्पत्तये सूर्ये स्थित्वोदयतीति। तदेतदाह— **आदित्यस्थ इति** ॥ प्राणान् प्राच्यादीनात्मनि

स्वरश्मिषु सन्नयेत् सन्निवेशयतीत्यर्थः। के ते प्राच्यादयः प्राणा इति। तत्तद्दिग्गतप्राणिप्रणयनादिन्द्रादयो दिक्पाला एवेत्याह– **प्राच्याः प्राणा इति**॥ तथाशब्दो वक्ष्यमाणदक्षिणादिसमुच्चयार्थः । कथं तेषु बहुवचनमित्यत आह– **सभार्या इति**॥ सभार्यैरग्न्यादिभिः कोणपैः सार्धमिन्द्रादय इत्यर्थः । यदध इत्यादौ नैतत्सम्बद्ध्यते, सभार्या इत्येव। अतस्तत्र बहुवचनसम्पादनाय शेषमित्रा-वित्यादिद्वयोरुक्तिः। दिङ्मध्यस्था अपि केचिज्ज्ञातव्याः। एवं चन्द्रमसि स्थिताया देव्या अप्योषधिजननादिद्वारेण प्रजोत्पत्तिनिमित्तत्वमुपपादनीयमिति॥ ६ ॥

**वामन**–स एष भगवान् विश्वनरस्थः पाचकोऽग्निश्च भवति। स एव प्राणस्थो विश्वरूपे स्थित उदयते प्रजानां प्रकाशते। मामभि मामभि इति प्रतिपुरुषे वर्तमानत्वात् विश्वरूपः सूर्यः। हरिणः स्वच्छवर्णः । जातं जातं वस्तुजातं च वेत्तीति जातवेदाः । 'प्राणो वै जातवेदाः स हि जातानां वेद' इति च श्रुतिः । पराणां ब्रह्मादीनां मुक्तानां वा मुख्याश्रयत्वात्परायणम्। दिवाकरस्तु परम-गतिमार्गत्वात् परायणमित्युक्तः। अत्र पुनः 'विश्वात्मानं परायणम्' इति शाखा-न्तरोक्तगुणानामनुकर्षणार्थं किल विभक्तिव्यत्यासः। सहस्ररश्मिः। अथ तेषु रश्मिषु प्रत्येकं शतधा वर्तमानरश्मिः । रश्मीनां शतशाखत्वात् । अथवा तद्रश्मीनामेव मूलभूता रश्मयः शतमेतेषु शतधा वर्तमानः। प्राणिनां प्रणेतृत्वात् सूर्योऽपि कथञ्चित् प्राणशब्दः। चक्षुरादिप्राणानां प्रणयनान्मुख्यवायुर्मुख्यत एव प्राण उक्तः। तस्यापि प्रणेतृत्वात् विष्णुरेव परममुख्यः प्राण उच्यते। सूरिभि-रीयमानत्वात् सूर्यान्तर्यामित्वाच्च विष्णुरेव प्रधानसूर्यः प्रजानामन्तर्बहिश्च प्रकाशते। 'उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति। तस्मादेनं प्राण इत्याचक्षते' इत्यत्राप्येत एव गौणमुख्यातिमुख्यतया प्रोच्यन्त इत्यविरोधः। सर्वभूतप्रणयनस्यापि यथायोग्यत्वात्॥ १-६ ॥

**प्रकाशिका**–'अनेन सकलजगत्प्रकाशकतया प्रजोत्पत्तिनिमित्तत्वमुक्तम्' इत्यत्र कृष्यादियोग्यप्रदेशादर्शने कृषिरेव कर्तुं न शक्यते। अतो नरादिस्थिर-जीवसृष्टौ प्रकाशस्योपयोगः। धनधान्यादीनामसङ्ग्रहे ग्रामान्तरगमनाभावे विवाहादिक्रियाऽपि न स्यात्। भोजनादिक्रियाऽपि न स्यात्। एवं चान्नपाना-

दीनामसम्भवे प्रजाजननोपयुक्तवीर्यसङ्ग्रहोऽपि न स्यात्। गर्भाधानोपयुक्त-भार्यासङ्ग्रहोऽपि न स्यात्। अतश्चराचरात्मकप्रजोत्पादनाय सूर्यादीनां प्रकाशोऽप्यवश्यं सहकारीति भावः। एवं 'सूर्यस्योष्णकिरणसम्बन्धाभावेऽङ्कुरादीना-मुपचयोऽपि 'दशवैद्यसमो वह्निर्दशवह्निसमो रविः' इति वचनाज्जनाना-मारोग्यादिकमपि न स्यात्। अतः सौरोष्णप्रकाशस्यान्नपानादीनां पाचनशोषणा-दिनाऽऽरोग्यजनकत्वेनापि प्रजोत्पत्तावुपयोगित्वं द्रष्टव्यमिति ज्ञेयम्॥ १-६ ॥

**सत्य**–॥ **दिङ्मध्यस्था अपि केचिज्ज्ञातव्या इति** ॥ अत्र भाष्ये प्रमाणान्तरे च दिङ्मध्याभिमानिनामनुक्तत्वात् केचिज्ज्ञातव्या इत्यनेनोक्तम् ॥ १-६ ॥

**श्रीनिवास**– नैतदिति ॥ कोणपैः सार्धमित्येतत्। इत्येवं सम्बद्ध्यत इत्यन्वयः। तर्हि सभार्यग्रहणे द्वयोरेव प्राप्त्या सभार्याश्चत्वार इति बहुवचनायोग इत्यत आह— अतस्तत्रेति ॥ १-६ ॥

**छलारी**–अभिप्रायमाह– **अनेनेति** ॥ अत्राशेषशब्देन वैषयिकाशेषस्य विवक्षितत्वान्नातिप्रसङ्गः॥ प्रजाशब्देन कार्यं गृह्यते। घटाद्युत्पत्तिं प्रति सौरालोकस्यापेक्षितत्वात्। विश्वरूप इत्यादेः साक्षात्प्रकृतोपयोगादर्शना-त्प्राणमाहात्म्यप्रतिपादकत्वेनोपयोगं दर्शयति– **न केवलमिति** ॥ **तदेतदिति**॥ कोणपैः सार्धमित्येतदित्यर्थः॥ **केचिदिति** ॥ विनायकः विवस्वान्नामसूर्यश्च एतत्पत्न्यौ चेति चत्वार इति सम्प्रदायः॥ १-६ ॥

**ताम्रपर्णी**–तापनपाचनशोषणादिनेत्यादिशब्देन प्रकाशनं गृह्यते।

तापिनी पाचिनी चैव शोषणी च प्रकाशिनी।
नैव राजन् रवेः शक्तिः शक्तिर्नारायणस्य च॥ इति वचनात्।

॥ **करा रश्मय इति**॥ प्राचीनटीकायां तु हरिणमिति पठितत्वाद्धरिणः स्वच्छवर्ण इति व्याख्यातम्। द्वितीयान्वयसिद्ध्यर्थं अध्याहरति– **जानीया-दिति**॥ प्राचीनटीकायां विभक्तिव्यत्ययेन प्रथमां व्याख्याय 'विश्वात्मानं परायणम्' इति शाखान्तरोक्तगुणानामनुकर्षणार्थं किल विभक्तिव्यत्यास इत्युक्तम्। सभार्याः कोणपैः सार्धमित्युक्तस्येन्द्रयमवरुणसोमाः सभार्याः

स्वस्वभार्यासहिताः सभार्यैरग्न्यादिकोणपैः सार्धं दिशि दिशि चत्वार इत्यर्थमभिप्रेत्याह– **सभार्यैरिति**॥ यद्वा इन्द्राद्याः कोणपैः सार्धं सभार्या दिशि दिशि चत्वार इत्यस्य तात्पर्यमाह– **सभार्यैरिति**॥ **सभार्या इत्येवेति**॥ यदधो यदूर्ध्वं यदन्तरा दिश इति त्रिषु स्थानेषु सभार्याश्चत्वारो वर्तन्त इत्येवं योज्यम्। तत्र कोणाभावात् कोणपैरिति न संयोज्यम्। तथात्वे अथादित्य उदयन् यदधो विशति। तेन अधस्थान्प्राणान् रश्मिषु सन्निधत्ते इति योजनायां बहुवचनं न सम्भवतीत्यतस्तत्र बहुवचनसम्पादनाय शेषवीन्द्रावित्यादिद्वयोक्तिरित्यर्थः॥ **दिङ्मध्यस्था अपि केचिदिति** ॥ अन्तरिक्षस्य दिङ्मध्यत्वात्तस्याकाशात्मकत्वात्तदभिमानिविघ्नेश इति सम्प्रदायविदः॥ १-६ ॥

**मङ्गालीय**–अभिप्रायमाह– **अनेनेति** ॥ अथादित्य उदयन्नित्यादिनेत्यर्थः। अत्राशेषशब्देन वैवक्षिकाशेषस्य विवक्षितत्वान्नातिप्रसङ्गः। प्रजाशब्देन कार्यं गृह्यते। घटाद्युत्पत्तिं प्रति सौरालोकस्यापेक्षितत्वाद्विश्वरूप इत्यादेरथादित्य इत्यादेरिव प्रकृतोपपादकत्वेनोपयोगादर्शनात्प्राणमाहात्म्यान्तरोपपादकत्वेनोपयोगं दर्शयति– **न केवलमिति** ॥ यद्वा सूर्ये स्थितस्य प्रजोत्पत्तिनिमित्तत्वमुक्त्वा 'स एष वैश्वानर' इति वाक्येऽग्निस्थस्याप्युच्यत इति प्रतीयतेऽतः पूर्वानुवादेनैतद्वाक्यमवतार्य व्याचष्टे– **अनेनेति** ॥ सूर्यस्थत्वस्यैव प्रतिज्ञानादुदाहरिष्यमाणमन्त्रेऽप्येवमेव प्रतीतेरित्यर्थः। विश्वनरसम्बन्धीत्यस्य विवरणं तापनेत्यादि॥ **जातस्येति** ॥ विद्यमानस्येत्यर्थः। 'प्राणो वै जातवेदाः स हि जातानां वेद' इति बृहद्ब्राह्मणवाक्यादेवं निर्वचनम्॥ **उपलक्षणं चैतदिति**॥ 'तापिनी पाचिका चैव शोषिणी च प्रकाशिनी' इत्युक्तत्वादिति भावः। सन्नयेदिति विध्यनुपयोगमाशङ्क्याह– **सन्निवेशयतीत्यर्थ इति** ॥ के ते प्राच्यादयः प्राणा इतीत्यनन्तरमाकाङ्क्षायामिति शेषः। सभार्या इत्येतत्तृतीयान्ततया विपरिणम्य कोणपैरित्यनेनापि सम्बद्ध्यते। तथाच दिशि दिशि चत्वार इत्येतदुपपद्यत इत्यभिप्रेत्याह– **सभार्यैरग्न्यादिभिः कोणपैरिति** ॥ इन्द्रयमवरुणसोमाः सभार्याः सभार्यैरग्न्यादिकोणपैः सार्धं शेषमित्रौ वीन्द्रकामावित्येते सभार्या दिशि दिशि प्राच्यादिदिक्षु अध ऊर्ध्वं च चत्वारो वर्तन्त इति

भाष्यवाक्यार्थः॥ **एतदिति** ॥ कोणपैः सार्धमित्येतदित्यर्थः। सभार्या इत्येव यदध इत्यादौ सम्बद्ध्यत इत्यन्वयः॥ **केचिज्ज्ञातव्या इति** ॥ अत्र भाष्ये प्रमाणान्तरे च दिङ्मध्याभिमानिनामनुक्तत्वात्केचिज्ज्ञातव्या इत्येवोक्तमिति केचिदाहुः। विनायकः, विवस्वान्नामा सूर्यः, एतत्पत्न्यौ चेति सम्प्रदाय इत्यपरे॥ १-६ ॥

**अनन्तभट्टीय**—सूर्ये स्थितस्य प्रजोत्पत्तिनिमित्तत्वमुक्त्वा स एष वैश्वानर इत्यग्निस्थस्यापि तदुच्यत इति प्रतीयते। अतः पूर्वानुवादेनैतद्वाक्यमवतार्य व्याचष्टे– **अनेनेति** ॥ सूर्यस्थस्यैव प्रतिज्ञानादुदाहरिष्यमाणमन्त्रेऽप्येवमेव प्रतीतेरित्यर्थः॥ **जातस्येति**॥ विद्यमानस्येत्यर्थः। "प्राणो वै जातवेदाः स हि जातानां वेद' इति बह्वृचब्राह्मणवाक्यादेवं निर्वचनम्॥ **उपलक्षणं चैतदिति**॥ "तापिनी पाचिका चैव शोषिणी च प्रकाशिनी" इत्युक्तेरिति भावः। इन्द्रवरुणसोमाः सभार्याः सन्तः दिशि दिशि प्राच्यादिचतुर्दिक्षु अध ऊर्ध्वं च चत्वारश्चत्वारो वर्तन्त इति भाष्यवाक्यार्थः॥ १-६ ॥

**खण्डार्थ**—न केवलमेतावत् । किं नाम स एष आदित्ये स्थितो विश्वरूपः पूर्णरूप अदनादग्निः प्राणो वैश्वानरो विश्वनरसम्बन्धी तापनपाचनशोषणादिना सर्वप्रजोत्पत्तिहेतुस्सन्नुदयते । 'आदित्यो ह वै प्राणः' इति या प्रसिद्धिः सूचिता सोच्यते— **तदेतदिति** । यदुक्तं तदेदृचा 'विश्वरूपं' इति मन्त्रेणाभ्युक्तं स्पष्टमुक्तम्। अतो दृढतरं प्रतिपत्तव्यमिति । विश्वरूपं, करा रश्मयोऽस्य सन्तीति करी तं करिणम् । जातवेदसं जातस्य सर्वस्य वेदितारम् । परायणं सर्वप्राणिनां परमाश्रयम्। एकं प्रधानम् । ज्योतिः प्रकाशकम् । तपन्तं तपनक्रियां कुर्वन्तम्। उपलक्षणमेतत्, शोषणादिकञ्च कुर्वाणमदित्यमण्डलस्थं पुरुषं जानीयात् । किमिति? सहस्र-रश्मिरनन्ततेजाः शतधाऽनन्तरूपैः सर्वप्राणिषु वर्तमानो यः प्राण एष एव प्रजानामुत्पत्तये सूर्ये स्थित्वोदयतीति । एवं चन्द्रमसि स्थिताया देव्या अप्योषधि-जननादिद्वारेण प्रजोत्पत्तिनिमित्तत्वमुपपादनीयमिति ॥ १-६ ॥

**नर**—न केवलमेतावत् । किन्नाम स एव आदित्ये स्थितो विश्वरूपः पूर्णरूपः

अदनादग्निः वैश्वानरः विश्वनरसम्बन्धी तापनपाचनशोषणादिना सर्वप्रजोत्पत्ति-निमित्तः सन्नुदयते। आदित्यो ह वै प्राण इति या प्रसिद्धिः सूचिता सोच्यते– **तदेतदिति** ॥ यदुक्तं तदेतदृचाभ्युक्तम्। विश्वरूपम्। कराः रश्मयोऽस्य सन्तीति करी तं करिणम्। जातवेदसं जातस्य सर्वस्य वेदितारम्। परायणं सर्वप्राणानां परमाश्रयं एकं प्रधानम्। ज्योतिः प्रकाशकम्। तपन्तं तपनक्रियां कुर्वन्तम्। उपलक्षणमेतत्। शोषणादिक्रियां कुर्वाणं आदित्यमण्डलस्थं पुरुषं जानीयात्। किमिति? सहस्ररश्मिः अनन्ततेजाः शतधा अनन्तरूपैः सर्वप्राणिषु वर्तमानः यः प्राणः एष वै प्रजानामुत्पत्तये सूर्यः सूर्ये स्थितः सन् उदयति। एवं चन्द्रमसि स्थिताया देव्या अपि ओषधिजननादिद्वारेण प्रजोत्पत्तिनिमित्तत्वं उपपादनीयम्॥ १-६ ॥

**उदय–**न केवलमेतावनस्य महिमा किन्नामान्योऽप्यस्तीत्याह– **स एष इति**॥ सः पूर्वोक्तमहिमावान् एषः आदित्यस्थः प्राणः विश्वरूपः सम्पूर्णरूपः। अदना-दग्निः। 'अद भक्षणे' इति धातोः रूपमेतत्। वैश्वानरः विश्वेषां सर्वेषां नराणां अयम्। 'तस्येदमित्यण्' छान्दसत्वाद्विश्वस्य दीर्घः। सर्वजनसम्बन्धितापन-पाचनशोषणादिना प्रजोत्पत्तिहेतुः सन्नित्यर्थः। उदयति उद्गच्छति। न केवलमस्माभिरेतत्कल्पितम्, किन्तु प्रसिद्धं चेत्याह– **तदेतदिति** ॥ तदेतत् प्राणस्यादित्यस्थत्वेन सर्वकर्तृत्वं ऋचा मन्त्रेणाभ्युक्तं स्पष्टमुक्तम्। अतो न कल्पितमिति भावः। वेदस्य स्वतःप्रमाणत्वेऽपि प्रमेयदार्ढ्यार्थं सम्मतिरूपां तां श्रुतिमेवाह– **विश्वरूपमिति**॥ विश्वरूपं पूर्णरूपम्। करिणं कराः रश्मयः अस्य सन्तीति करिणम्। जातवेदसं जातस्य सर्वस्य वेदितारम्। परायणं मुख्याश्रयम्। ज्योतिः प्रकाशात्मकम्। एकं मुख्यम्। तपन्तं तपनक्रियावन्तम्। आदित्यस्थत्वेन जानीयादिति शेषः। किमिति?। सहस्ररश्मिः अनन्ततेजाः शतधा वर्तमान अनन्तरूपैः सर्वप्राणिस्थैः एषः प्राणः सूर्यः सूर्ये स्थितः सन् प्रजानामुत्पत्तय इति शेषः। उदयति भगवत्सकाशाज्जायत इति। अतः प्रसिद्धतरत्वात्सूर्यस्थस्य प्राणस्य सर्वकर्तृत्वं युक्तमिति भावः॥ १-६ ॥

### उपनिषत्

**संवत्सरो वै प्रजापतिः । तस्यायने दक्षिणं चोत्तरं च। तद् ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते। त एव पुनरावर्तन्ते । तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष वै रयिर्यः पितृयाणः ॥ ७ ॥**

### भाष्यम्

**संवत्सरस्थो भगवान् वागीरावयनस्थितौ ॥ ७ ॥**

**टीका**—अथ सर्वोत्पत्तिनिमित्तकारणं संवत्सरादिलक्षणं कालं तदवान्तरभेदोत्तरायणाद्यधिष्ठातारौ रयिप्राणौ चाधिष्ठाय प्रजापतेः प्रजाकारणत्वमुच्यते— **संवत्सर इति**॥ प्रजापतिः संवत्सरो वै संवत्सरस्थः सन् प्रजा जनयतीति प्रसिद्धम्। तस्य संवत्सरस्य ये अयने सूर्यगतिविशेषोपलक्षितौ देवयानपितृयाणलक्षणदेवताविशेषाभिमतौ भागविशेषौ नामतो दक्षिणं चोत्तरं च तयोः रयिप्राणावधिष्ठाताराविति शेषः। कुत एतदित्युच्यते— **तद्य इत्यादि**॥ तत्तत्र साधकेषु ये ऋषयः प्रजाकामाः, मोक्षेतरफलकामाः सन्त इति यावत्, इष्टं यजनं पूर्तमन्नप्रदानादिकं कृतमन्यच्च कर्मेत्येतदुपासतेऽनुतिष्ठन्ति त एते दक्षिणं पितृयाणं प्रतिपद्यन्ते। प्रतिपन्नाश्च ते चान्द्रमसमेव लोकमभिजयन्ते प्राप्नुवन्ति। त एव पुनः स्वकर्मावसाने तस्माच्चन्द्रलोकादावर्तन्ते हवै। यत एवं पितृयाणेन गतानां पुनरावृत्तिमच्चन्द्रलोकप्राप्तिलक्षणं फलं प्रसिद्धम्, तस्माच्चन्द्राधिष्ठात्री रयिरेवैषः यः पितृयाणो वै पितृयाणाधिष्ठात्रीति गम्यते॥ ७॥

**वामन**—संवत्सरस्थो भगवानित्यादिना संवत्सरं वै प्रजापतिरित्यादेरभिप्रायमाह। संवत्सरादिशब्दैस्तत्स्थो विष्णुरेव मुख्यतयोच्यते 'तदधीनत्वादर्थवत्' इत्यादेः। अयनादिशब्दैस्तदनन्तरं वाक्प्राणावपि यथायोगमुच्येते। 'एष वै रयिर्यः पितृयाणः' इत्याद्युत्तरवचनात्। पितृयाणं दक्षिणायनं हि। तद्ये ह वै

तदित्यादेरयमर्थः। तयोरयनयोर्मध्ये तया दक्षिणायनदेवतया वाग्देव्या ये नरा इष्टापूर्तादिकर्मणा यज्ञं यजन्ते। ते चन्द्रलोकात् तत्फलं भुक्त्वा ततः पुनरिहावर्तन्ते। प्रजाकामाः पुनः प्रजननेन प्रजोत्पादनकामाः॥ १-७ ॥

**प्रकाशिका**–'तस्माच्चन्द्रधिष्ठात्री रयिः' इत्यत्र द्रव्यसाध्येष्ट्यादिकर्मफलदातृत्वेन रयिनाम्ना सूचितत्वाद्रयिश्चन्द्राधिष्ठात्रीति भावः॥ ७ ॥

**छलारी**–॥ **प्रजा जनयतीति प्रसिद्धमिति** ॥ संवत्सरो वै इति वैशब्दार्थोऽयम्॥ **देवयानपितृयाणदेवताविशेषाभिमन्यमानाविति** ॥ देवयानपितृयाणनामकदेवतयोरभिमन्यमानावित्यर्थः॥ **अनुतिष्ठन्तीति** ॥ कुर्वन्तीत्यर्थः। इष्टापूर्तादिकर्तारः प्रथमत एव चान्द्रमसलोकं प्राप्नुवन्तीत्यर्थनिरासाय वक्ष्यमाणमेव दक्षिणमित्यादि संयोजयति– **त एते दक्षिणं पितृयाणमिति**॥ अनेन

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥

इति भगवद्गीतोक्तमुपलक्षितं भवति। ते चान्द्रमसमिवेति कर्मिणः ज्ञानिवच्चन्द्रलोकप्राप्त्यनन्तरं वैश्वानरादिलोकं न प्राप्नुवन्तीत्यर्थः। तथाच ब्रह्मसूत्रचतुर्थाध्याये 'उभयव्यामोहात्तत्सिद्धेः' इति सूत्रे ज्ञानिनां अर्चिरादिमार्गक्रमप्रतिपादकं भाष्यं ब्रह्मतर्के च–

उत्क्रान्तस्तु शरीरात् स्वाद्गच्छत्यर्चिषमेव तु।
ततो हि वायोः पुत्रश्च योऽसौ नाम्नातिवाहिकः॥
ततो ह पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणश्चैव प्रजापं सूर्यमेव वा ॥
सोमं वैश्वानरश्चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥ इति ॥ १-७ ॥

**ताम्रपर्णीय**–कालभागयोरयनशब्दयोगः कथमित्यत आह– **सूर्यगतिविशेषोपलक्षिताविति**॥ कर्कटमासादिमासषट्के सूर्यस्थचक्रस्य मानसोत्तरे

किञ्चिद्दक्षिणाश्रितभागे मकरादिमासषट्के किञ्चिदुत्तराश्रितभागे गमनात् तदुपलक्षितत्वेनायनशब्दप्रयोग इति भावः। दक्षिणायनादिशब्देन न कालमात्रग्रहणं, किन्तु तदभिमानिदेवस्यापि। तदभिमानी च देवयानपितृयाणमार्गदेव एवेति भावेनोक्तम्॥ **देवयानेति**॥ अन्यथोपपादकग्रन्थे 'दक्षिणं प्रतिपद्यन्ते। अथोत्तरेण' इति वचनमननुगुणं स्यादिति ज्ञेयम्। तस्मादित्येतच्चन्द्रलोकादिति व्याख्यातम्। तस्मादेष वै रयिर्यः पितृयाण इत्युत्तरेणापि संयोज्यापि व्याचष्टे— **तस्माच्चन्द्रेति**॥ १-७ ॥

**मङ्कालीय**–अधिष्ठायेत्यनन्तरं प्रजापतिः प्रजाः सृजतीति शेषः। प्रजाकारणत्वं प्रजोत्पत्तिकर्तृत्वमिति वार्थः। इति प्रसिद्धमिति वैशब्दार्थकथनम्। सूर्यगतिविशेषोपलक्षितौ दक्षिणोत्तरदेशयोः सूर्यगमनविशेषेणोपलक्षितौ व्यावर्तितौ। देवयानपितृयाणदेवताविशेषाभिमतौ देवयानपितृयाणसंज्ञकमार्गद्वयाभिमानिदेवताविशेषाभिमन्यमानौ भागविशेषौ अंशविशेषौ ॥ **कुत एतदित्युच्यत इति** ॥ एतद्रयिप्राणयोर्भागविशेषाधिष्ठातृत्वं कुतः प्रतिपत्तव्यमित्याकांक्षायां तद्य इत्याद्युच्यत इत्यर्थः॥ **अनुतिष्ठन्तीति** ॥ कुर्वन्तीत्यर्थः। इष्टापूर्तादिकर्तारः प्रथमत एव चान्द्रमसं लोकं प्राप्नुवन्तीति भ्रान्तिनिरासाय वक्ष्यमाणं दक्षिणमित्येतदादौ योजयति– **त एते दक्षिणं पितृयाणमिति** ॥ अनेन 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम्' इति गीतोक्तमुपलक्षितं भवति॥ **चान्द्रमसमेवेति** ॥ कर्मिणो ज्ञानिवच्चन्द्रलोकप्राप्त्यनन्तरं वैश्वानरादिलोकं न प्राप्नुवन्तीत्यर्थः। पूर्ववाक्यार्थं 'एष वै रयिर्यः पितृयाणः' इत्यत्र हेतुतया योजयन् यदित्येतद्यत इत्यर्थकमिति व्याख्याति– **यत एवमिति** ॥ गम्यस्यैव स्वप्राप्तिमार्गतदभिमानिदेवतास्वाम्यस्य वक्तव्यत्वात्। चन्द्रान्तर्गतसरस्वत्याः स्वप्राप्तिहेतुभूतपितृयाणनामकमार्गाधिष्ठातृदक्षिणायनाभिमानिदेवतामधिष्ठाय तन्नियन्तृत्वे वक्तव्ये तदभिमन्यमानदक्षिणायननियन्तृत्वमपि वाच्यमिति तदधिष्ठातृत्वं सेत्स्यतीति भावः॥ १-७ ॥

**अनन्तभट्टीय**–यत एवमिति गम्यस्यैव स्वप्राप्तिसाधनमार्गतदभिमानिदेवतास्वाम्यस्य वक्तव्यत्वाच्चन्द्रान्तर्गतसरस्वत्याः स्वप्राप्तिहेतुभूतपितृयाण-

नामकमार्गाधिष्ठातृदक्षिणायनाभिमानिदेवानां अधिष्ठाय तन्नियन्तृत्वे वक्तव्ये तदभिमन्यमानदक्षिणायननियन्तृत्वमपि वाच्यमिति तदधिष्ठातृत्वं सेत्स्यतीति भावः। एवमुत्तरत्रापि ज्ञातव्यम्॥ १-७ ॥

**गूढकर्तृक**–'तस्यायने दक्षिणं चोत्तरं च' इत्यत्र न कालमात्रग्रहणम्। तथात्वे 'तद्यो ह वै तत्' इत्युपपादकग्रन्थासङ्गतेः। किन्तु तदभिमानिनोऽपि। सर्वदेयानादिदेवा एवेत्यभिप्रेत्य वक्ष्यमाणश्लोकानुगुण्याय दक्षिणायनादि-शब्दार्थमप्याह– **तस्येति** ॥ १-७ ॥

**खण्डार्थ**–अथ सर्वोत्पत्तिनिमित्तकारणं संवत्सरादिलक्षणं कालं तदवान्तर-भेदोत्तरायणाद्यधिष्ठातारौ रयिप्राणौ चाधिष्ठाय प्रजापतेः प्रजाकारणत्वमुच्यते– **संवत्सर इत्यादि** । प्रजापतिः संवत्सरो वै संवत्सरस्थः सन् प्रजा जनयतीति प्रसिद्धम्। तस्य संवत्सरस्यायने सूर्यगतिविशेषोपलक्षितौ देवयानपितृयाणलक्षण-देवताविशेषाभिमतौ भागविशेषौ नामतो दक्षिणश्चोत्तरश्च। तयोः रयिप्राणाव-धिष्ठाताराविति शेषः । कुत एतदित्यत उच्यते– **तद्ये ह वै तदित्यादि** ॥ तत् तत्र साधकेषु ये ऋषयः प्रजाकामाः, मोक्षेतरफलकामाः सन्त इति यावत्, इष्टं यजनं पूर्तमन्नदानादिकं कृतमन्यच्च कर्म इत्येतदुपासते अनुतिष्ठन्ति त एते दक्षिणं पितृयाणं प्रतिपद्यन्ते । प्रतिपन्नाश्च ते चान्द्रमसं लोकमभिजयन्ते प्राप्नुवन्ति। त एव पुनः स्वकर्मावसाने तस्माच्चन्द्रलोकादावर्तन्ते ह वै । यत एवं पितृयाणेन गतानां पुनरावृत्तिमच्चन्द्रलोकप्राप्तिलक्षणं फलं प्रसिद्धं, तस्माच्चन्द्रधिष्ठात्री रयिरेवैषो यः पितृयाणो वै पितृयाणाधिष्ठात्रीति गम्यते ॥ १-७ ॥

**नर**–प्रकारान्तरेण प्रजापतेः कारणत्वमाह– **संवत्सर इति** ॥ संवत्सरो वै सर्वोत्पत्तिनिमित्तकारणः संवत्सरादिकालाधिष्ठाता रयिप्राणगतः प्रजापतेः प्रजाजनकत्वं प्रसिद्धम्। तस्य संवत्सरस्य अयनेषु साधकेषु ये प्रजाकामाः मोक्षेतरफलकामाः सन्तः इष्टं यजनं पूर्तं अन्नप्रदानादिकं कृतमन्यच्च कर्म इत्येतदुपासते अनुतिष्ठन्ति। त एव दक्षिणं पितृयाणं प्रतिपद्यन्ते। प्रतिपन्नाश्च ते चान्द्रमसमेव लोकं अभिजयन्ते प्राप्नुवन्ति। त एव पुनः स्वकर्मावसाने

तस्माच्चन्द्रलोकादावर्तन्ते। तस्मात्पुनरावृत्तिमार्गत्वादेते ऋषयः कर्ममार्गज्ञाः प्रजाकामाः दक्षिणं प्रतिपद्यन्ते। यः पितृयाणः पैतृयाणाधिष्ठात्री एषा रयिर्वै प्रसिद्धम्।। १-७ ॥

**उदय**–अथ कालतदवान्तरभेदोत्तरायणाद्यधिष्ठातारौ रयिप्राणौ अधिष्ठाय प्रजापतेः कारणत्वमाह– **संवत्सर इति** ॥ प्रजापतिः वासुदेवाख्यो भगवान् संवत्सरः संवत्सरस्थः सन् प्रजाः जनयतीति वै प्रसिद्धम्। संवत्सरशब्दः कालविशेषवाची। तस्य संवत्सरस्य ये अयने गतिविशेषोपलक्षितपितृयाण-देवयानलक्षणभागविशेषौ। नामतो दक्षिणश्चोत्तरश्चेति। तदधिष्ठातारौ रयिप्राणाविति शेषः। कथमेतज्ज्ञायत इत्यत आह– **तद्य इत्यादिना** ॥ तत्र साधकेषु ये ऋषयः। हवै इति प्रसिद्धम्। ऋषयः प्रजाकामा इति वक्ष्यमाणमत्रापि सम्बद्ध्यते। मोक्षेतरफलकामाः सन्तः। तत् इष्टं यजनं पूर्तं अन्नप्रपादानादिकञ्च। "अन्येभ्योऽपि" इति दीर्घः। कृतं अन्यत्कर्म चेति उपासते अनुतिष्ठन्ति। त एते प्रजाकामा ऋषय दक्षिणं पितृयाणं प्रतिपद्यन्ते प्राप्नुवन्ति। प्राप्ताश्च ते चान्द्रमसमेव लोकं चन्द्रसम्बन्धिनं अभिजयन्ते प्राप्नुवन्ति। त एव पुनरावर्तन्ते। तस्मात्स्वकर्मावसाने तस्माच्चन्द्रलोकादौ वर्तन्ते॥ **'एष वै रयिर्यः पितृयाणः' इति**॥ तस्माच्चन्द्राधिष्ठात्री रयिरेव एषो यः पितृयाणः। पितृयाणाधिष्ठात्री वै इति। पितृयाणेन गतानां पुनरावृत्तिमच्चन्द्रलोकप्राप्तिर्भवतीति भावः॥ १-७ ॥

उपनिषत्

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययाऽऽत्मानम-न्विष्याऽदित्यमभिजयन्ते । एतद् वै प्राणानामायतनमेत-दमृतमभयमेतत् परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधः । तदेष श्लोकः । पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्॥ इति ॥ ८ ॥**

**टीका**—अथ ये मुमुक्षवस्तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चोत्तरेणगतास्त आदित्यमभिजयन्ते ततश्च परमं ब्रह्म। यस्मादेतद्वै देवयानेन प्राप्यं परं ब्रह्मैव प्राणानामिन्द्रादीनाम् । आयतनमाधारः। एतदेवामृतमभयं चैतदेव परायणं मुक्तानामप्याश्रयः । अत एतस्मान्न पुनारावर्तन्ते इति तस्मादपुनरावृत्त्य-योग्यानां मार्गनिरोधकत्वादेवैषः आदित्यो 'निरोधोऽविदुषाम्' इत्युच्यते श्रुत्यन्तर इति। यत एवमुत्तरायणेन गतानामपुनरावृत्त्याऽऽदित्यप्राप्तिलक्षणं फलं प्रसिद्धम्, तस्मादादित्याधिष्ठाता प्राण एवोत्तरायणाधिष्ठातेति ज्ञायत इति वाक्यशेषः । आदित्यं प्राप्तानामपुनरावृत्तिरित्यत्र श्रुत्यन्तरसम्मतिरुक्ता– **तदेष इति**।। यच्चोक्तं केचित् पितृयाणेन यान्ति केचिद्देवयानेनेति तत्रैष वक्ष्यमाणः श्लोको मन्त्रः सम्मतित्वेन भवति। हेमन्तशिशिरयोरैक्येन पञ्चर्तवस्तदभिमानिनः पादा अंशा यस्य तं पञ्चपादम्। पितरं प्रजानां पोषकम्। द्वादशमासाभिमानिदेवता आकृतयो रूपाणि, यस्य तं द्वादशाकृतिम्। विचक्षणं विवेकिनम् । सप्तचक्राणि, चङ्क्रम्यते रथ एभिरिति अश्वा यस्यासौ सप्तचक्रः तस्मिन् । षट्सङ्ख्याका अरा यस्यासौ षळरः तस्मिन् रथेऽर्पितं वर्तमानमादित्यं दिवोऽन्तरिक्षस्य परेऽन्यतरस्मिन् किञ्चिद्दक्षिणाश्रितेऽर्धे भागे गच्छन्तम्। पुरीषमुदकं तदस्यास्तीति तं पुरीषिणं वर्षणहेतुम् । तदुपलक्षितकालाभिमानिदेवतामार्गमिति यावत्, केचित्काम्य-कर्मिणः स्वप्राप्यमाहुः। अथ तेभ्योऽन्ये इमे ज्ञानिनः दिव उ परे परस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तमादित्यं तदुपलक्षितकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुरिति यावत्। तदेतदाह– **संवत्सरस्थ इति**।। ८।।

**वामन**—अथोत्तरायणदेवतया प्राणेन तपआद्यनुष्ठानपूर्वकं परमात्मानं विचार्य ज्ञात्वा तत्प्रसादात्तमेवादिपुरुषमभिसम्पद्यन्ते। एतत्परमात्माख्यमेव हि सर्व-प्राणानामायतनं परायतनं च। एतस्मान्न पुनरावर्तन्ते इति वचनात् एष निरोधः एष उत्तरायणस्थः संसृतेर्निरोधकृत् प्रभञ्जनः प्राण इत्यर्थः।

उक्तार्थं द्रढयतो मन्त्रवर्णश्लोकस्यायमर्थः। संवत्सरसंस्थस्य विष्णोः पञ्चर्तुसंस्था नारायणादिपञ्चमूर्तयः पञ्चपादा इत्युच्यन्ते। तस्य पुनर्द्वादश-मासस्थाः केशवादिमूर्तयो द्वादशाकृतयश्चोक्ताः। न चात्र 'षड्वा ऋतव' इति

श्रुतिविरोधः। 'द्वादशमासाः पञ्च ऋतवः' इति श्रुत्यन्तरात् । हेमन्तशिशिरयोः समासेन पञ्चर्तवः । 'संवत्सरः प्रजापतिः' इति श्रुतिः। मुख्यप्राणसंस्थस्य तु तदीयेषु प्राणादिपञ्चरूपेष्विन्द्रियदेवस्थेषु संस्थितास्ता एव पञ्चर्तवः पादाः आकृतय इति विशेषः। तस्य पुनः सूर्यसंस्थत्वेऽप्ययमेव न्यायः। अथ भगवतस्तेभ्यः पृथक्संस्थत्वापेक्षया स्वमूर्तयोऽपि पृथक्संस्था एव पादादयो वेदितव्याः। तमेतं जगत्पितरं विष्णुं द्युलोकात् परे विशिष्टे दूरस्थे वा समन्ताद् ऋद्धे वैकुण्ठलोके पुरीषिणं स्वपुर्यां निषीदन्तमाहुर्वेदविदः। अथ परे विशिष्टचेतने भक्त्यादिभिरासमन्तादृद्धे सति तस्मै पुरीषिणं स्वपुरं दातुमिच्छन्तमाहुरौपनिषदः । अपि च अपरे पुण्यकृत्पुरुषे द्युलोकादीषद्धोगर्द्धे पुरीषिणं तस्य पुनर्देहोत्पादनेच्छुमाहुर्ब्रह्मविदः। अथ मुख्यप्राणमपि पञ्चद्वादशरूपिणं शेषादिदेवपितरं सर्वजीवशरीरेषु नियन्तुं निषण्णं द्युदेव्याः परेऽर्धे दक्षिणभागे संस्थितमाहुः प्राणादिवादिनः । सूर्यं तपन्तं च दिगन्तरश्मिं द्वादशात्मानं दिवोर्ध्वभागे गगनमध्ये पुरोभागात् पुनः पुनरुदेष्यन्तमाहुर्ज्योतिर्वेदिनः 'तस्य ये प्राञ्चो रश्मयः' इत्यारभ्योर्ध्वं रश्मिपर्यन्ताः पञ्चविधा हि रश्मयः सूर्यस्योच्यन्ते । किञ्च पञ्चद्वादशाद्यनन्तरूपिणं ब्रह्मवाय्वोः पितरं नारायणं परायुषि काख्यब्रह्मणि ज्ञानकर्मभिः समृद्धे सति तस्य पुरीषिणमाहुर्वेदान्तिनः। 'अन्नं वा इषणम्' इति हि श्रुतिः। एवमादीनर्थविशेषान् सुबहूनाहुरधिदैवज्ञाः। अथ तेभ्योऽन्येऽध्यात्मज्ञा इमेऽस्मत्सखायः शतर्चिनः विचक्षणं विष्णुं उपरे शरीरे नियामकत्वेनार्पितं स्थितमाहुः। अथवा जीवेन स्वशरीरे हृदये ध्यानेन निहितमाहुः। समीपस्थं चेदं रमणस्थानं च दास्यतीत्युपरं शरीरम् । तदेतत्सप्तधातुरूपत्वात् सप्तचक्र-मित्युक्तम्। सप्तपादायामत्वाद्वा सप्तचक्रम् । चङ्क्रमणाच्च चक्रशब्दितं पदम्। अथ सप्तपादमानेन न्यग्रोधपरिमण्डलत्वाच्चक्रसमं चेदम्। अतः षडङ्गत्वात् षडरमित्युक्तम्॥ १-८ ॥

**प्रकाशिका**–'तस्मादादित्याधिष्ठाता प्राण एव' इत्यत्र 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति स्मृतेः, 'तत्पुरुषो मानवः स एनान् ब्रह्म गमयति' इति श्रुतेश्च प्राणस्य मोक्षदायकत्वादिति भावः। 'हेमन्तशिशिरयोरैक्येन' इत्यत्र

अभिमानिदेवतयोरभिमन्यमानकालयोश्च द्वित्वेऽपि कालगुणभूतहिमस्यैकत्वा-दभिमन्यमानयोरभिमानिनोश्चैकत्वोक्तिरिति ज्ञेयम्॥ ८ ॥

**छलारी–॥ तदुपलक्षितेति** ॥ अनेन उपलक्षणया वृत्त्या दक्षिणायनाभिमानि-देवताप्राप्तिकथनेन सूर्यप्राप्तिर्वारिता । एवमुत्तरत्र उत्तरायणदेवतोपलक्षणकथनेन तत्र सूर्यप्राप्त्यभावप्रतीतावपि तदुत्तरत्र पूर्वोक्तं 'प्रजापं सूर्यमेव च' इति प्रमाणानुसारेण सूर्यप्राप्तिर्ज्ञातव्या ॥ १-८ ॥

**ताम्रपर्णीय–॥ हेमन्तेति॥** 'द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन । तावान् संवत्सरः । संवत्सरः प्रजापतिः' । 'द्वादशमासाः पञ्चर्तवः' । हेमन्त-शिशिरयोः समासेन पञ्चर्तवः । तावान् संवत्सरः । संवत्सरः प्रजापतिः' इति श्रुतेरिति भावः। 'सप्त युञ्जन्ति रथमेकचक्रम्' इति श्रुत्यविरोधायार्थमाह– **सप्तचक्रणीति॥** किञ्चिद्दक्षिणाश्रितभागे विद्यमानमादित्यं काम्यकर्मिणः स्वप्राप्यमाहुरित्यसङ्गतम्। अस्य दक्षिणायनकालाभिमानिदेवतालोकद्वारेण चन्द्रलोकप्राप्तिरित्यत्रामानत्वादित्यत आह– **तदुपलक्षितेति** ॥ १-८ ॥

**मङ्कालीय–॥ उत्तरेणेति** ॥ उत्तरायणेन मार्गेण देवयानेनेत्यर्थः। एतदित्युत्तरत्रानुवादादाह– **ततश्च परमं ब्रह्मेति** ॥ प्राणानामायतनत्वादिक-मेतस्मान्न पुनरावर्तन्त इत्यत्र हेतुतयोक्तमित्यभिप्रेत्य योजयति– **यस्मादिति** ॥ एतद्वा इत्यत्र विद्यमानो वैशब्दोऽवधारणार्थ इत्यभिप्रेत्याह– **एतद्वै देवयानेन प्राप्यं परं ब्रह्मैवेति** ॥ इतीत्यनूद्य तस्मादिति व्याख्यातम्। तस्यैव विवरणम्– **अपुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेवेति** ॥ 'निरोधोऽविदुषाम्' इति च्छन्दोगश्रुतिवाक्यम्। 'एष वै रयिर्यः पितृयाणः' इतिवत् 'एष वै प्राणो यो देवयानः' इति 'एष निरोधः' इत्यनन्तरं श्रुतौ वक्तव्यस्यानुक्तेर्न्यूनतामाशङ्क्य पूर्ववाक्यार्थस्याध्याहरिष्यमाणवाक्यार्थे हेतुतामभिप्रेत्य हेतुहेतुमद्भावं व्यञ्ज-यन्नध्याहरति– **यत एवमिति** ॥ गम्यस्यैव स्वप्राप्तिमार्गतदभिमानिदेवता-स्वाम्यस्य वक्तव्यत्वादादित्यान्तर्गतप्राणस्य स्वप्राप्तिहेतुभूतदेवयाननामक-मार्गाधिष्ठात्रुत्तरायणाभिमानिदेवतामधिष्ठाय तन्नियन्तृत्वे वक्तव्ये तदभि-

मन्यमानोत्तरायणनियन्तृत्वमपि वाच्यमिति तदधिष्ठातृत्वं सेत्स्यतीति भावः। उक्तवक्ष्यमाणश्रुत्योर्विषयभेदप्रदर्शनायोक्तमनूद्य तदेष इति वाक्यं गृहीत्वा व्याचष्टे– **आदित्यमित्यादिना**॥ अंशाः प्रतिबिम्बाः रूपाणि प्रतिमाः। सूर्य-रथस्य 'सप्त युञ्जन्ति रथमेकचक्रम्' इति एकचक्रत्वात्सप्तचक्र इत्येतत्सप्त-चक्राणीत्यादिनाऽन्यथा व्याख्यातम्। पुरीषिणमिति विशेषणाद्दक्षिणाश्रितभाग इति सिद्ध्यति ॥ १-८ ॥

**अनन्तभट्टीय**–'निरोधोऽविदुषाम्' इति श्रुतिः छन्दोगश्रुतिवाक्यम्। उक्त-वक्ष्यमाणश्रुत्योर्विषयभेदेन दर्शनायोक्तमनूद्य तदेष इति वाक्यं गृहीत्वा व्याचष्टे– **आदित्यमित्यादिना**॥ **हेमन्तशिशिरयोरिति** ॥ 'द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन' इति ब्राह्मणवाक्यादिति भावः। अंशाः प्रतिबिम्ब-रूपाणि प्रतिष्ठाः। सूर्यरथस्य 'सप्त युञ्जन्ति रथमेकचक्रम्' इति एकचक्रत्वा-त्सप्तरथ इत्येतदन्यथाव्याख्यातम् । पुरीषिणमिति विशेषणात् दक्षिणाश्रिते भागे सिद्ध्यति॥ **तदुपलक्षित इति** ॥ दक्षिणभागगत्युपलक्षितो यः काल-स्तदभिमानिदेवतामार्गमित्यर्थः॥ १-८ ॥

**गूढकर्तृक**–सप्त युञ्जन्ति रथमेकचक्रमिति श्रुत्यनुसारेणार्थमाह– **सप्तेति**।। किञ्चिद्दक्षिणाश्रिते भागे विद्यमानमादित्यं काम्यकर्मिणः स्वप्राप्यमाहुरित्य-सङ्गतम्। अस्य दक्षिणायनाभिमानिदेवतालोकद्वारेण चन्द्रलोकप्राप्तिरित्यत्रा-मानत्वादित्यत आह– **तदुपलक्षितेति** ॥ १-८ ॥

**खण्डार्थ**–अथ ये मुमुक्षवस्तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चोत्तरायणेन गतास्त आदित्यमभिजयन्ते । ततश्च परमं ब्रह्म यस्मादेतद्दै देवयानेन प्राप्यं ब्रह्मैव प्राणानामिन्द्रादीनामायतनमाधारः । एतदेवामृतमभयं च। एतदेव परायणं मुक्तानामप्याश्रयः । अत एतस्मान्न पुनरावर्तन्त इति तस्माद पुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेव 'एष आदित्यो निरोधोऽविदुषाम्' इत्युच्यते श्रुत्यन्तर इति । यत एवमुत्तरायणेन गतानामपुनरावृत्तिमदादित्यलोकप्राप्तिलक्षणं फलं प्रसिद्धम्, तस्मादादित्याधिष्ठाता प्राण एवोत्तरायणाधिष्ठातेति ज्ञायत इति वाक्यशेषः।

आदित्यं प्राप्तानामपुनरावृत्तिरित्यत्र श्रुत्यन्तरसम्मतिरुच्यते । यदत्रोक्तं केचित्पितृयाणेन यान्ति केचिद्देवयानेनेति तत्रैष वक्ष्यमाणः श्लोको मन्त्रः सम्मतित्वेन भवति । हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः, तदभिमानिनः पादाः अंशा यस्य तं पञ्चपादम् । पितरं प्रजानां पालकम् । द्वादशमासाभिमानिदेवा आकृतयो रूपणि यस्य तं द्वादशाकृतिम् । विचक्षणं विवेकिनम् । सप्त चक्राणि, चङ्क्रम्यते रथ एभिरित्यश्वा यस्यासौ सप्तचक्रः। षट्सङ्ख्याकाः अराः यस्यासौ षळरः। तस्मिन्नर्पितं वर्तमानम् । आदित्यं दिवोऽन्तरिक्षस्य परेऽन्यतरस्मिन् किञ्चिद्दक्षिणा-श्रितभागे गच्छन्तम्। पुरीषमुदकं तदस्यास्तीति पुरीषिणम्। वर्षणहेतुं तदुपलक्षितकालाभिमानिदेवतामार्गमिति यावत् । केचित् काम्यकर्मिणः स्वप्राप्यमाहुः । अथ तेभ्योऽन्ये इमे ज्ञानिनो दिव उ परे परस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तमादित्यं तदुपलक्षितकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुरिति यावत् ॥ १-८ ॥

**नर**–अथ ये मुमुक्षवः तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चापरोक्षतः उत्तरेण गताः ते आदित्यमभिजयन्ते। ततश्च परब्रह्म प्राप्नुवन्ति। यस्माद्देवयानेन प्राप्यमेतत् परं ब्रह्मैव प्राणानां इन्द्रादीनां आयतनमाधारः। एतदेवामृतं अभयं चैतदेव परायणं मुक्तानामायतनमाश्रयः। अत एतस्माद्देव-यानगम्याः ब्रह्मणो न पुनरावर्तन्त इति हेतोः एष आदित्योऽयोग्यानां मार्गनिरोधकत्वादज्ञानां निरोध इत्युच्यते।

श्रुत्यन्तरे केचिदुत्तरायणेन केचिद्दक्षिणायनेन यान्तीत्यत्र एषः वक्ष्यमाणः श्लोकः मन्त्रः सम्मतित्वेन भवति। हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः तदभिमानिनः। पञ्च पादा अंशा यस्य तं पञ्चपादम् । पितरं प्रजानां पोषकम्। द्वादशमासाभिमानिदेवताः आकृतयो रूपाणि यस्य तं द्वादशाकृतिम् । विचक्षणं विवेकिनम् । चङ्क्रमत्येष रथ एभिरिति चक्राणि अश्वाः सप्त चक्राणि यस्यासौ सप्तचक्रः। षट्सङ्ख्याकाः अराः यस्यासौ षडरः। तस्मिन्रथे अर्पितं वर्तमानं आदित्यं दिवः अन्तरिक्षस्य परे अन्यतरस्मिन् किञ्चिद्दक्षिणाश्रितभागे गच्छन्तं पुरीषमुदकं अस्मिन् स्थितं पुरीषिणं वर्षणहेतुम् । आदित्यं तदुपलक्षित-

मन्यमानोत्तरायणनियन्तृत्वमपि वाच्यमिति तदधिष्ठातृत्वं सेत्स्यतीति भावः। उक्तवक्ष्यमाणश्रुत्योर्विषयभेदप्रदर्शनायोक्तमनूद्य तदेष इति वाक्यं गृहीत्वा व्याचष्टे– **आदित्यमित्यादिना**॥ अंशाः प्रतिबिम्बाः रूपाणि प्रतिमाः। सूर्यरथस्य 'सप्त युञ्जन्ति रथमेकचक्रम्' इति एकचक्रत्वात्सप्तचक्र इत्येतत्सप्तचक्राणीत्यादिनाऽन्यथा व्याख्यातम्। पुरीषिणमिति विशेषणाद्दक्षिणाश्रितभाग इति सिद्ध्यति ॥ १-८ ॥

**अनन्तभट्टीय**–'निरोधोऽविदुषाम्' इति श्रुतिः छन्दोगश्रुतिवाक्यम्। उक्तवक्ष्यमाणश्रुत्योर्विषयभेदेन दर्शनायोक्तमनूद्य तदेष इति वाक्यं गृहीत्वा व्याचष्टे– **आदित्यमित्यादिना**॥ **हेमन्तशिशिरयोरिति** ॥ 'द्वादशमासाः पञ्चर्तवो हेमन्तशिशिरयोः समासेन' इति ब्राह्मणवाक्यादिति भावः। अंशाः प्रतिबिम्बरूपाणि प्रतिष्ठाः। सूर्यरथस्य 'सप्त युञ्जन्ति रथमेकचक्रम्' इति एकचक्रत्वात्सप्तरथ इत्येतदन्यथाव्याख्यातम् । पुरीषिणमिति विशेषणात् दक्षिणाश्रिते भागे सिद्ध्यति॥ **तदुपलक्षित इति** ॥ दक्षिणभागगत्युपलक्षितो यः कालस्तदभिमानिदेवतामार्गमित्यर्थः॥ १-८ ॥

**गूढकर्तृक**–सप्त युञ्जन्ति रथमेकचक्रमिति श्रुत्यनुसारेणार्थमाह– **सप्तेति**।। किञ्चिद्दक्षिणाश्रिते भागे विद्यमानमादित्यं काम्यकर्मिणः स्वप्राप्यमाहुरित्यसङ्गतम्। अस्य दक्षिणायनाभिमानिदेवतालोकद्वारेण चन्द्रलोकप्राप्तिरित्यत्रामानत्वादित्यत आह– **तदुपलक्षितेति** ॥ १-८ ॥

**खण्डार्थ**–अथ ये मुमुक्षवस्तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चोत्तरायणेन गतास्त आदित्यमभिजयन्ते । ततश्च परमं ब्रह्म यस्मादेतद्वै देवयानेन प्राप्यं ब्रह्मैव प्राणानामिन्द्रादीनामायतनमाधारः । एतदेवामृतमभयं च। एतदेव परायणं मुक्तानामप्याश्रयः । अत एतस्मान्न पुनरावर्तन्त इति तस्माद पुनरावृत्त्ययोग्यानां मार्गनिरोधकत्वादेव 'एष आदित्यो निरोधोऽविदुषाम्' इत्युच्यते श्रुत्यन्तर इति । यत एवमुत्तरायणेन गतानामपुनरावृत्तिमदादित्यलोकप्राप्तिलक्षणं फलं प्रसिद्धम्, तस्मादादित्याधिष्ठाता प्राण एवोत्तरायणाधिष्ठातेति ज्ञायत इति वाक्यशेषः।

आदित्यं प्राप्तानामपुनरावृत्तिरित्यत्र श्रुत्यन्तरसम्मतिरुच्यते । यदत्रोक्तं केचित्पितृयाणेन यान्ति केचिद्देवयानेनेति तत्रैष वक्ष्यमाणः श्लोको मन्त्रः सम्मतित्वेन भवति । हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः, तदभिमानिनः पादाः अंशा यस्य तं पञ्चपादम् । पितरं प्रजानां पालकम् । द्वादशमासाभिमानिदेवा आकृतयो रूपणि यस्य तं द्वादशाकृतिम् । विचक्षणं विवेकिनम् । सप्त चक्राणि, चङ्कम्यते रथ एभिरित्यश्वा यस्यासौ सप्तचक्रः। षट्सङ्खयाकाः अराः यस्यासौ षळरः। तस्मिन्नर्पितं वर्तमानम् । आदित्यं दिवोऽन्तरिक्षस्य परेऽन्यतरस्मिन् किञ्चिद्दक्षिणा-श्रितभागे गच्छन्तम्। पुरीषमुदकं तदस्यास्तीति पुरीषिणम्। वर्षणहेतुं तदुपलक्षितकालाभिमानिदेवतामार्गमिति यावत्। केचित् काम्यकर्मिणः स्वप्राप्यमाहुः । अथ तेभ्योऽन्ये इमे ज्ञानिनो दिव उ परे परस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तमादित्यं तदुपलक्षितकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुरिति यावत् ॥ १-८ ॥

**नर**—अथ ये मुमुक्षवः तपआदिसाधनैः परमात्मानमन्विष्य विचार्य विदित्वा चापरोक्षतः उत्तरेण गताः ते आदित्यमभिजयन्ते। ततश्च परब्रह्म प्राप्नुवन्ति। यस्माद्देवयानेन प्राप्यमेतत् परं ब्रह्मैव प्राणानां इन्द्रादीनां आयतनमाधारः। एतदेवामृतं अभयं चैतदेव परायणं मुक्तानामायतनमाश्रयः। अत एतस्माद्देव-यानगम्याः ब्रह्मणो न पुनरावर्तन्त इति हेतोः एष आदित्योऽयोग्यानां मार्गनिरोधकत्वादज्ञानां निरोध इत्युच्यते।

श्रुत्यन्तरे केचिदुत्तरायणेन केचिद्दक्षिणायनेन यान्तीत्यत्र एषः वक्ष्यमाणः श्लोकः मन्त्रः सम्मतित्वेन भवति। हेमन्तशिशिरयोरैक्येन पञ्च ऋतवः तदभिमानिनः। पञ्च पादा अंशा यस्य तं पञ्चपादम् । पितरं प्रजानां पोषकम्। द्वादशमासाभिमानिदेवताः आकृतयो रूपाणि यस्य तं द्वादशाकृतिम् । विचक्षणं विवेकिनम् । चङ्क्रमत्येष रथ एभिरिति चक्राणि अश्वाः सप्त चक्राणि यस्यासौ सप्तचक्रः। षट्सङ्ख्याकाः अराः यस्यासौ षडरः। तस्मिन्रथे अर्पितं वर्तमानं आदित्यं दिवः अन्तरिक्षस्य परे अन्यतरस्मिन् किञ्चिद्दक्षिणाश्रितभागे गच्छन्तं पुरीषमुदकं अस्मिन् स्थितं पुरीषिणं वर्षणहेतुम् । आदित्यं तदुपलक्षित-

दक्षिणायनकालाभिमानिदेवतामार्गम्। केचित्काम्यकर्मिणः स्वप्राप्यमाहुः। अथ तेभ्यः अन्ये इमे ज्ञानिनः दिवः उ परे अपरस्मिन् किञ्चिदुत्तराश्रिते भागे गच्छन्तं आदित्यं तदुपलक्षितोत्तरायणकालाभिमानिदेवतामार्गं स्वप्राप्यमाहुः॥ १-८ ॥

**उदय**–देवयानगतानाह— **अथेत्यादिना**॥ अथेति पूर्वोक्ताद्विशेषं सूचयति। ये मुमुक्षवः तपसा ब्रह्मचर्येण । तपःसाधनभूतेन श्रद्धया आस्तिक्यबुद्ध्या । आत्मविद्यया परमात्मनः सर्वव्याप्तत्वसर्वोत्कृष्टत्वादिज्ञानेन । आत्मानं परमात्मानम् । अन्विष्य विचार्य विदित्वा च । उत्तरेण देवयानेन गतास्ते आदित्यमभिजयन्ते प्राप्नुवन्ति। ततः परं ब्रह्म एतद्देवयानप्राप्यं ब्रह्मैव । प्राणानामिन्द्रादीनां आयतनं मुख्याश्रयः। एतदमृतं मुक्तस्थानम् । अभयं निर्दोषं निर्भयञ्च। एतत्परायणं मुक्तानामाश्रयभूतम्। एतस्मान्न पुनरावर्तन्ते। संसारं प्रतीति शेषः । इति हेतोः एष आदित्यः निरोधः मार्गनिरोधकत्वादेव निरोध इत्युच्यत इत्यर्थः। ततः उत्तरायणेन गतानामपुनरावृत्त्या आदित्यप्राप्तिलक्षणं फल-मुक्तम् ।तस्मादादित्याधिष्ठाता प्राण एव उत्तरायणाधिष्ठातेति भावः।

आदित्यं प्राप्तानामपुनरावृत्तित्वे श्रुतिसम्मतिमाह वेदपुरुषः– **तदेष श्लोक इति**॥ तत् तत्र एषः श्लोकः मन्त्रः सम्मतित्वेन भवतीत्यर्थः। तां श्रुतिमेवाह– **पञ्चपादमित्यादिना** ॥ पञ्च ऋतवः हेमन्तशिशिरयोरैक्याभिप्रायेण पञ्चत्वम्। पादा अंशा यस्येति तम् । पितरं पोषकम् । द्वादशमासाभिमानिनो देवा आकृतयः रूपाणि यस्येति तम् । विचक्षणं विवेकिनम् । सप्तचक्रे सप्त चक्राणि चङ्क्रम्यते एभिरिति अश्वाः यस्य । षट् अरा यस्य षळरः डळयोरभेदात्। तस्मिन् रथे अर्पितं वर्तमानम् । आदित्यं दिवोऽन्तरिक्षस्य । परे अन्यतरस्मिन्नर्धे भागे दक्षिणाश्रिते । गच्छन्तम् । पुरीषमुदकमस्यास्तीति पुरीषिणम्। वर्षणहेतु-कालाभिमानिदेवतामार्गमिति यावत्। स्वप्राप्यमाहुः। काम्यकर्मिण इति शेषः। पितृयाणगतानामेतत्फलं भवतीत्यर्थः। अथानन्तरं तेभ्योऽन्ये इमे ज्ञानिनः। उ निश्चयेन । परे परस्मिन् किञ्चिदुत्तराश्रिते भागे । विचक्षणं गच्छन्तं आदित्यं कालाभिमानिदेवतामार्गं स्वप्राप्यमाहुः। देवयानेन गतानां परमात्मप्राप्तिर्भवतीति भावः॥ १-८ ॥

उपनिषत्

**मासो वै प्रजापतिः । तस्य कृष्णपक्ष एव रयिः । शुक्लः प्राणः । तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्ति। इतर इतरस्मिन् । अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते । ब्रह्मचर्यमेव तद् यद् रात्रौ रत्या संयुज्यन्ते ॥ ९ ॥**

भाष्यम्

**'मासस्थितः स भगवान् पक्षयोर्वाक् च मारुतः ।**
**अहोरात्रे तु भगवान् प्राणो ह्यहनि वाङ् निशि॥**
**दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती।**
**भर्तृस्थः स स्वयं वायुरेवं जानन्विमुच्यते॥'**

**इति प्रजापतिसंहितायाम्॥ ९ ॥**

**टीका**–किञ्च मासो वै प्रजापतिः। मासलक्षणं कालमधिष्ठाय प्रजाः सृजतीति यावत्। तस्य मासस्यावयवभूतः कृष्णपक्ष एव रयिः। शुक्लपक्षः प्राणः। पक्षद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावत्। कुत एतत्? यस्मात् खल्वादित्योत्तरायणाधिष्ठाता प्राणः शुक्लपक्षे स्थितः तस्मादेव ह्येते उत्तरायणेनाऽऽदित्यं जिगमिषन्तः ऋषयः शुक्लपक्षे इष्टिं यजनं निष्कामं प्राणपूजात्मकं कुर्वन्ति। यस्माच्चन्द्रदक्षिणायनाधिष्ठात्री रयिः कृष्णपक्षे स्थिता तस्मादेव हीतरे दक्षिणायनेन चन्द्रमसं प्रेप्सन्त ऋषय इतरस्मिन् कृष्णपक्षे काम्यां रयिपूजारूपामिष्टिं कुर्वन्तीति यावत्। तदेतदाह– **मासस्थित इति**॥ किं चाहोरात्रे इत्यादि पूर्ववद् व्याख्येयम्। तदिदमाह– **अहोरात्रे त्विति**॥ एकवद्भावस्य वैकल्पिकत्वेन श्रुतावहोरात्रे इति प्रथमा। भाष्ये तु सप्तमीति ज्ञातव्यम्। 'प्राणं वा' इत्यादिवाक्यं न साक्षात्प्रकृतेन सम्बध्यते। अतो मध्ये किमपि वक्तव्यं

तदाह– **दम्पत्योरिति**॥ एवं सति तदुपपादकत्वेनास्य सम्बन्धः। ये दिवा रत्या रतिहेतुभूतया स्त्रिया संयुज्यन्ते संयोगमाचरन्ति त एते प्राणं स्कन्दन्ति निर्गमयन्ति। यत्र क्वचन परित्यजन्ति। यद्रात्रौ रत्या संयुज्यते तदिदं ब्रह्मचर्यसममेवेति तावत्प्रसिद्धम्। तेन ज्ञायते रात्र्यधिष्ठात्री रयिः स्त्रियां वर्तते, अहरधिष्ठाता प्राणः पुंसीति। तथा हि। दिवा पुरुषरेतसि प्राणस्याधिकं सन्निधानम्। न तदा देव्याः स्त्रियां तावत्। ततश्च दिवा पुरुषरेतसि स्थिते प्राणे स्त्रियं प्राप्ते यत्र क्व चासावनेन त्यक्तो भवति। रात्रौ तु स्त्रियां देव्या अधिकं सन्निधानमिति। तदा प्राणः स्वभार्यामेव प्राप्तो वर्तत इत्युपपद्यत इति॥ ९॥

**वामन**–संवत्सरादिषु दम्पत्यन्तेषु स्थितो भगवानयनादिविभागस्थौ वाक्प्राणा-वाविश्य तद्द्वारा रेतो रक्तं च जनयति। तत्संयोगादिमाः प्रजाः प्रजायन्ते। एवं रयिप्राणावाविश्य विष्णुः स्वयमेव सर्वसृष्टिं करोति। नच सर्वनियन्तुर्विष्णोः कुतश्चिदुत्पत्तिः शङ्क्या। नित्यमुक्तत्वश्रुतेः। अत्राप्यज इति दत्तोत्तरत्वात्। एवम्भूतं भगवन्तं जानन् विमुच्यते॥ १-९ ॥

**सत्य– एकवद्भावस्य वैकल्पिकत्वेनेति** ॥ समासान्तविधेरनित्यत्वादिति भावः ॥ १-९ ॥

**छलारी–॥ पूर्ववद् व्याख्येयमिति**॥ अहोरात्र्याख्यकालमधिष्ठाय प्रजापतिः प्रजाः सृजति। तस्यावयवभूतं अहरेव प्राणः रात्रिरेव रयिः । अहोरात्रभागद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावदिति पूर्ववदित्यर्थः। नचाहोरात्र इत्यत्र अहश्च रात्रिश्चेति विग्रहे प्राणितुर्याद्यन्तर्गतत्वाभावात्समाहारद्वन्द्वासम्भवः। इतरेतरयोगे तु द्विवचनेन भाव्यम्। नचेष्टापत्तिः। अहः पूर्वकरात्रिशब्दात् 'अहः सर्वैकदेशसङ्ख्यातपुण्याच्च रात्रेः' इति सूत्रेण समासान्ते टचि 'यस्येति च' इति टिलोपे 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' इति वार्तिकेन अहन्शब्दनकारस्य कत्वे हशि चेत्युत्वे गुणे च निष्पन्नादकारान्तादहोरात्रशब्दात्प्रथमाद्विवचनस्य 'नपुंसकाच्च' इति स्यादेशे गुणे अहोरात्र इति रूपसिद्धेरिति वाच्यम्। श्रुतौ संवत्सरो वै प्रजापतिरिति प्रथमान्तोपक्रमात्प्रथमाद्विवचनोपपत्तावपि भाष्ये

संवत्सरस्थो भगवानित्यादिपूर्वग्रन्थानुसारेण सप्तम्यन्तत्वस्यापेक्षितत्वेन तत्र सप्तमीद्विवचने अहोरात्रयोरिति स्यादित्यत आह– **एकवद्भावस्य वैकल्पिकत्वेनेति** ॥ सर्वो द्वन्द्वो विभाषयैकवद्भवतीति परिभाषयेति शेषः। प्रथमाद्विवचनं इतरेतरयोगस्याश्रवणादिति भावः॥ **भाष्ये त्विति** ॥ अहोरात्रशब्दस्य समाहारार्थकत्वेन समाहारस्यैकत्वात्। सप्तम्यैकवचने द्वौ गुणे च अहोरात्रे इति रूपमिति भावः। ननु दम्पत्योरिति भाष्यस्योपनिषदर्थप्रतिपादकत्वाभावादसङ्गतत्वप्रतीतिं वारयितुं भाष्यं सङ्गमयति– **प्राणं वा इत्यादिवाक्यमिति** ॥ **न साक्षात्प्रकृतेनेति** ॥ प्राणस्याहरभिमानित्वकथनेन सरस्वत्या रात्रिस्वामित्वकथनेन च सम्बन्धाभावादिति भावः॥ **एवं सतीति** ॥ अहोरात्राभिमानिप्राणसरस्वत्योर्भर्तृभार्यादेवतात्वे सति तदुपपादकत्वेन प्राणसरस्वत्योरहोरात्रदेवतात्वोपपादकत्वेन प्राणं वा एते प्रस्कन्दन्तीति वाक्यस्येत्यर्थः। उपपादकत्वप्रकारं दर्शयति— **दिवा रत्येत्यादिना** ॥ १-९ ॥

**ताम्रपर्णीय**–अहोरात्र इति न प्रथमाद्विवचनम्। समाहारद्वन्द्व एकवद्भावविधानात्। नापि सप्तमी। प्रायपाठविरोधादित्यत आह– **एकवद्भावेति** ॥ 'सर्वेऽपि विधयः छन्दसि विकल्प्यन्त' इति वैकल्पिकत्वेनेत्यर्थः। समासान्तविधेरनित्यत्वादेकवद्भावस्य वैकल्पिकत्वमिति केचित्॥ **न साक्षादिति** ॥ रयिप्राणयोर्भार्याभर्त्रन्तर्गतत्वं विना साक्षात्केवलं तयोरहोरात्रान्तर्गतत्वोपपादकतया न सम्बद्ध्यत इत्यर्थः॥ **तदुपपादकत्वेनेति** ॥ रात्र्यधिष्ठात्री रयिः स्त्रियां वर्तत इत्याद्युपपादकत्वेनेत्यर्थः। ननु रयिप्राणयोः सदापि स्त्रीपुरुषयोः सन्निहितत्वाद्दिवा रतावपि न प्राणस्यान्यत्र परित्याग इत्याशङ्कां प्रस्कन्दतीति वचनस्वारस्यकथनपूर्वकं परिहरति– **तथाहीति** ॥ **अधिकमिति** ॥ रात्र्यपेक्षयेत्यर्थः। तदा दिवा तावत्प्राणसन्निधानं पुंसि दिवा यावत्तावदित्यर्थः॥ **अधिकमिति**॥ अहरपेक्षयाधिकमित्यर्थः। ननु रात्र्यां स्त्रियां देव्या अधिकं सन्निधानं न तदा प्राणस्य पुंसि तावत्ततश्च रात्र्यां स्त्रियां विद्यमानायां देव्यां पुरुषं प्राप्तायां यत्र क्वचासौ देव्यनया त्यक्ता भवतीति दोषसाम्यमेवेति चेन्न। रात्र्यां प्राणस्य पुंसि दिवा सन्निधानापेक्षया सन्निधानस्याल्पत्वेऽपि रात्र्यां स्त्रियां

देवीसन्निधानापेक्षयाल्पत्वाभावेनोक्तदोषानवकाशात्। अत एव टीकायां न तदा देव्यां स्त्रियां तावदित्युक्तिवत् न तदा प्राणस्य पुंसि तावदिति नोक्तदोष इति ध्येयम्। तथेति पाठेऽपि तथाहीत्येवार्थः। यथा पुरुषे तथा पुरुषरेतसीति वा ॥ १-९ ॥

**मङ्गालीय**–'संवत्सरो वै प्रजापतिः' इत्युक्तत्वात्तत्समुच्चयार्थं किञ्चे-त्युक्तम्॥ **कुत एतदिति** ॥ रयिप्राणयोः कृष्णशुक्लपक्षस्थितत्वं कस्मा-त्प्रमाणात्प्रतिपत्तव्यमित्यर्थः । रयिप्राणयोः कृष्णशुक्लपक्षस्थितत्वस्य लाभाय तस्मादेत इत्यत्रैवकारमध्याहृत्य व्याख्याति– **तस्मादेव हीति** ॥ 'मासो ह वै प्रापतिः' इत्युक्तत्वात् किञ्चेत्युक्तम् । न केवलमेतावदिति तस्यार्थः॥ **पूर्ववद्व्याख्येय-मिति** ॥ अहोरात्रकालमधिष्ठाय प्रजापतिः प्रजाः सृजति। तस्यावयवभूतमहरेव प्राणो रात्रिरेव रयिः। अहोरात्राख्यभागद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावदिति पूर्ववदित्यर्थः। ननु श्रुतौ 'संवत्सरो वै मासौ वै' इत्यादिप्रथमान्तोपक्रमादहोरात्रमिति प्रथमान्ते वक्तव्ये कथं सप्तमीनिर्देश इत्यत आह– **एकवद्भावस्येति** ॥ अयं भावः। श्रुतावहोरात्रे इति इतरेतरयोगद्वन्द्वाश्रयणेन प्रथमाद्विवचनमेव। एकवद्भावस्य 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इति परिभाषया वैकल्पिकत्वादिति। एवमेव भाष्ये प्रथमाद्विवचनमिति न भ्रमितव्यमित्याह– **भाष्ये त्विति** ॥ एकवद्भावेनाहोरात्र इति सप्तम्येकवचनमेव। अह्नि निशीति सप्तम्यन्तप्रायपाठादित्यर्थः। ननु–

दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती।
भर्तृस्थः स स्वयं वायुः................॥

इति भाष्यमुपनिषदर्थाप्रतिपादकत्वादसङ्गतमिति प्रतीतिं वारयितुं सङ्गमयति– **प्राणं वा इत्यादि वाक्यमिति** ॥ **न साक्षात्प्रकृतेनेति** ॥ प्राणस्याहरभिमानित्वकथनेन सरस्वत्या रात्रिस्वामित्वकथनेन च साक्षा-त्सम्बन्धाभावादिति भावः। न सम्बद्ध्यत इत्यनन्तरमत इति शेषः॥ **एवं सतीति** ॥ अहोरात्राभिमानिप्राणसरस्वत्योर्भर्तृभार्यादेवतात्वे सतीत्यर्थः। तदुपपादकत्वेन अहोरात्राधिष्ठातृप्राणसरस्वत्योर्भर्तृभार्यादेवतात्वोपपादक-

त्वेन। अस्य 'प्राणं वा एते प्रस्कन्दन्ति' इत्यादिवाक्यस्येत्यर्थः। तदुपपादकत्वप्रकारं दर्शयति– **ये दिवा रत्येति** ॥ ननु यद्दिवा स्त्रीसङ्गस्यायोग्यदेशे मुख्यप्राणनिर्यापनप्रत्यवायहेतुत्वं, यच्च रात्रौ स्त्रीसङ्गस्य ब्रह्मचर्यसमपुण्यापादकत्वं तदन्यथानुपपत्त्या प्राणसरस्वत्योर्न साक्षादहोरात्रगतत्वं सेत्स्यति। किन्नाम भर्तृभार्यागतत्वमेवेति यदुक्तं तदयुक्तम्। वाक्प्राणयोः स्त्रीपुरुषस्थितत्वस्योक्तप्रमेयोपपादकत्वे सत्येव तत्सिद्ध्येत्। नच तदस्ति। तयोः सर्वदा स्त्रीपुरुषयोः सन्निधानात्। दिवासङ्गस्यापि पापापादकत्वायोगात्। एवमपि पापहेतुत्वे रात्रावपि तत्प्रसङ्गेन ब्रह्मचर्यसाम्यानुपपत्तेश्च। किञ्च प्राणस्य पुंस्थितत्वमात्रेणाहरधिष्ठातृत्वं भारत्याश्च स्त्रीगतत्वमात्रेण रात्र्यधिष्ठातृत्वं कथं सिद्ध्येदित्यतोऽभिप्रायमाविष्करोति– **तथाहीत्यादिना** ॥ न वयं प्राणं प्रस्कन्दन्तीत्याद्युपपत्त्या तयोर्दम्पतीगतत्वमात्रं ब्रूमः। किन्तु तत्तत्काले तत्र तत्र विशेषतः सन्निधानं च। यस्मादहरधिष्ठाता प्राणः पुंसि वर्तते तस्मादेव स स्वाभिमन्यमाने काले तत्र विशेषतः सन्निधत्ते। यस्माद्रात्र्यधिष्ठात्री रयिः स्त्रियां वर्तते तस्मादेव सा स्वाभिमन्यमाने काले तत्र विशेषतः सन्निधत्त इति। अतो न काचिदनुपपत्तिरिति भावः। रात्रौ स्त्रियां सरस्वत्या यावदधिकसन्निधानं तदनुगुणं पुरुषे प्राणस्यापि सन्निधानं विद्यते। दिवा तु प्राणस्य पुंसि ततोऽप्यधिकं सन्निधानमित्यत उक्तमुपपद्यते॥ १-९ ॥

**अनन्तभट्टीय**–ननु यद्दिवा स्त्रीसंयोगस्यायोग्यदेशे मुख्यप्राणनिर्यापणेन प्रत्यवायहेतुत्वम्। यच्च रात्रौ स्त्रीसंयोगस्य ब्रह्मचर्यसमपुण्यापादकत्वं, तदन्यथानुपपत्त्या प्राणसरस्वत्योर्न साक्षादहोरात्रगतत्वं सेत्स्यति। किन्नाम भर्तृभार्यागतत्वमेवेति यदुक्तं तदप्ययुक्तम्। वाक्प्राणयोः स्त्रीपुरुषस्थितत्वस्योक्तप्रमेयोपपादकत्वे ह्येतत्सिद्ध्येत्। नच तदस्ति। तयोः सर्वदा स्त्रीपुरुषसन्निधानाद्दिवासङ्गस्यापि पापापादकत्वायोगात्। एवमपि पापहेतुत्वे रात्रावपि तत्प्रसङ्गेन ब्रह्मचर्यसाम्यानुपपत्तेश्च। किञ्च प्राणस्य पुंसि स्थितत्वमात्रेणाहरधिष्ठातृत्वं वा कथं सिद्ध्येदित्यत आशयमाविष्करोति– **तथाहीत्यादिना**॥ न केवलं प्राणं स्कन्दतीत्याद्यनुपपत्त्या तयोस्तयोर्दम्पतीगतत्वमात्रमुच्यते। किन्तु

तत्तत्काले तत्र तत्र विशेषसन्निधानं चैवमेवोपपद्यते। यस्मादहरधिष्ठाता प्राणः पुंसि वर्तते तस्मादेव सः स्वाभिमन्यमानकाले तत्र विशेषतः सन्निधत्ते। एवं रात्र्यधिष्ठात्री रयिरपीति। अतो न काचिदनुपपत्तिरिति भावः। रात्रौ स्त्रियां सरस्वत्या यावदधिकसन्निधानं तदनुगुणं पुरुषे प्राणस्यापि । दिवा तु प्राणस्यात्यधिकं पुंसीत्यत उक्तमुपपद्यते॥ १-९ ॥

**गूढकर्तृक**–अहोरात्र इति न प्रथमाद्विवचनं, एकवद्भावविधानात्। नापि सप्तमी। प्रायपाठविरोधादित्यत आह– **एकवद्भावेति** ॥ परित्यागशब्द-स्वारस्याय रयिप्राणयोः सदापि स्त्रीपुरुषयोः सन्निहितत्वात्परित्याग एव न सम्भवतीति शङ्कापरिहाराय चोपपादयति– **तथाहीति** ॥ प्राणस्य दिवारात्रौ च पुरुषे सन्निधानमिति रात्रौ रय्या संयोगे भारतीप्रस्कन्ददोष इति न चोद्या-वकाशः। ननु न प्राणस्य रात्रौ विशेषसन्निधानं दिवा पुरुषरेतसि प्राणस्याधिकं सन्निधान-मित्युक्तम्। अल्पसन्निधानं तु स्त्रियां देव्यां दिवाप्यस्ति न तदा देव्याः स्त्रियां तावदित्युक्तेः। तत्कथमिदं वैषम्यमिति चेत्, रयिप्राणयोर्दिवारात्रौ च स्त्रीपुरुषयोर्यद्यप्यल्पं सन्निधानं तथापि विशेषतः दिवा रयिसन्निधानाल्पता-निरूपकं प्राणसन्निधानं अत एव तावदित्युक्तम्। रात्रौ प्राणसन्निधानाल्पता-निरूपकं तु न रयिसन्निधानं किन्तु दिवाप्राणसन्निधानमेव। अत एव दिवापुरुषरेतसि प्राणस्याधिकं सन्निधानमित्युक्तम् । तथाच रात्रौ प्राण-सन्निधानस्य दिवा सन्निधानापेक्षयाल्पत्वेपि स्त्रियां भारतीसन्निधानादनूनत्वान्न भारतीप्रस्कन्ददोष इति। तथेति पाठे यथा पुरुषे सन्निधानं तथा रेतसीति व्याख्येयम्। नचोभयत्र सन्निधानकथनं व्यर्थम्। प्रस्कन्दतीत्यत्र द्वेधा विव-क्षितम्। प्राणस्यान्यभार्यया सह रतिं सम्पादयन्तीति। यत्र क्वचन परित्यजन्तीति च तदुभयलाभार्थमवैय्यर्थ्यादिति॥ १-९ ॥

**खण्डार्थ**–किञ्च मासो वै प्रजापतिः मासलक्षणकालमधिष्ठाय प्रजाः सृजतीति यावत् । तस्य मासस्यावयवभूतः कृष्णपक्ष एव रयिः, शुक्लपक्षः प्राणः । पक्षद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवत इति यावत्। कुत एतत्? यस्मात् खल्वादित्योत्तरायणाधिष्ठाता प्राणः शुक्लपक्षे स्थितस्तस्मादेव ह्येते

उत्तरायणेनाऽदित्यं जिगमिषन्तः शुक्लपक्ष इष्टिं यजनं निष्कामं प्राणपूजात्मकं कुर्वन्ति । यस्माच्चन्द्रदक्षिणायनाधिष्ठात्री रयिः कृष्णपक्षे स्थिता तस्मादेव हीतरे दक्षिणायनेन चन्द्रमसं प्रेप्सन्त ऋषयः । इतर इतरस्मिन् कृष्णपक्षे काम्यां रयिपूजारूपामिष्टिं कुर्वन्तीति । किञ्च 'अहोरात्रे' इत्यादि पूर्ववद्व्याख्येयम्। एकवद्भावस्य वैकल्पिकत्वेन श्रुतावहोरात्र इति प्रथमा । मासो वा इत्यादि-प्रायपाठात् । प्राणं वेत्यादिवाक्यं न साक्षादहरेव प्राण इत्यनेन सम्बद्ध्यते। अतो मध्ये 'दम्पती वै प्रजापतिः । पतिरेव प्राणो जायैव रयिः' इत्यध्याहार्यम्। एवं सति तदुपपादकत्वेनास्य सम्बन्धः । ये दिवा रत्या रतिहेतुभूतया स्त्रिया संयुज्यन्ते संयोगमाचरन्ति त एते प्राणं प्रस्कन्दन्ति निर्गमयन्ति । यत्र क्वचन परित्यजन्ति । यद्रात्रौ रत्या संयुज्यन्ते तदिदं ब्रह्मचर्यसममेवेति प्रसिद्धम् । तेन ज्ञायते रात्र्यधिष्ठात्री रयिः स्त्रियां वर्ततेऽहरधिष्ठाता प्राणः पुंसीति । तथा हि–दिवा पुरुषरेतसि प्राणस्यधिकं सन्निधानं, न तदा देव्यास्स्त्रियां तावत् सन्निधानम्। तथा च दिवा पुरुषरेतसि स्थिते प्राणे स्त्रियं प्राप्ते यत्र क्वचनासावनेन त्यक्तो भवति । रात्रौ तु स्त्रियां देव्या अधिकं सन्निधानमिति तदा प्राणः स्वभार्यामेव प्राप्तो भवति इत्युपपद्यत इति ॥ १-९ ॥

**नर**–किञ्च मासौ वै प्रजापतिः मासलक्षणकालमधिष्ठाय प्रजापतिः प्रजाः सृजतीति यत् तस्य मासस्य अवयवभूतः कृष्णपक्ष एव रयिः, शुक्लपक्षः प्राणः। पक्षद्वये स्थित्वा प्रजापतेः प्रजोत्पत्तौ निमित्तीभवतीति यावत्। कुत एतत्? यस्मत्खल्वादित्यो दक्षिणोत्तरायणयोरधिष्ठाता प्राणः शुक्लपक्षे स्थितः तस्मादेव ह्येते उत्तरायणेनादित्यं जिगमिषन्तो ऋषयः शुक्लपक्षे इष्टिं यजनं निष्कामं प्राणनाथपूजात्मकं कर्म कुर्वन्ति। यस्माच्चन्द्रः दक्षिणाधिष्ठात्री रयिः कृष्णपक्षे स्थित्वा तस्मादेव हीतरे दक्षिणायनेन चन्द्रमसं जिगमिषन्तः ऋषयः इतरस्मिन् कृष्णपक्षे काम्यां रयिगतभगवत्पूजारूपामिष्टिं कुर्वन्ति। किञ्चाहोरात्रे प्रजापतिः इत्यादि पूर्ववद्व्याख्येयम्। एकवद्भावस्य वैकल्पिकत्वादहोरात्रे इति प्रथमो-पपत्तिः। अह्नः प्राणस्य रात्र्याः भारत्याः अधिष्ठातृत्वमुपपादयति– **ये दिवेति**॥ तस्य सम्यगुपपादकत्वसिद्धये पतिर्वै प्रजापतिः तस्य द्वन्द्वस्य पतिरेव प्राणो जाया

रयिरिति ये दिवेत्यतः प्राक् शेषः । तथाच ये दिवेत्येतत् शेषस्याप्युपपादकं ज्ञातव्यम्। दिवा प्राणाधिष्ठाता । अह्नि प्राणाधिष्ठिताः पतयः रत्या रतिहेतुभूतया स्वस्त्रिया संयुज्यन्ते संयोगमाचरन्ति। त एव प्राणं प्रस्कन्दन्ति। स्वशरीरान्निर्गमयन्ति अल्पायुषो भवन्तीत्यर्थः। रात्रौ भारत्यधिष्ठितायां निशि ये रत्या संयुज्यन्त इति यावत्। तद्ब्रह्मचर्यसममेव॥ १-९ ॥

**उदय**–प्रकारान्तरेण प्रजापतेः प्रजासर्जनमाह– **मास इत्यादिना** ॥ मासः मासलक्षणकालमधिष्ठाय प्रजापतिर्भगवान् प्रजाः सृजतीति शेषः। वै प्रसिद्धमेतत्। तस्य मासस्यावयवभूतः कृष्णपक्ष एव रयिः शुक्लःशुक्लपक्षः प्राणः मुख्यः पक्षद्वये स्थित्वा प्रजोत्पत्तौ प्रजापतेः निमित्तीभवत इत्यर्थः। कथमेतत् ज्ञायत इत्यत आह– **तस्मादित्यादिना** ॥ यस्मात् आदित्योत्तरायणाधिष्ठाता प्राणः शुक्लपक्षे स्थितः। तस्मादेवैते ऋषयः ज्ञानिनः । उत्तरायणेन आदित्यं जिगमिषन्तः शुक्लपक्षे इष्टिं निष्कामयजनं प्राणपूजात्मकं कर्म कुर्वन्ति। इतरे काम्यकर्मिणः, इतरस्मिन् । चन्द्रदक्षिणायनाधिष्ठात्री रयिः कृष्णपक्षे स्थिता । अतो सकामां रयिपूजारूपां इष्टिं कुर्वन्तीत्यनुषङ्गः। प्रकारभेदेन प्रजापतेः प्रजासर्जनमाह– **अहोरात्र इति** ॥ एकवद्भावस्य वैकल्पिकत्वात् प्रथमाद्विवचनम्। प्रजापतिर्भगवान् वासुदेवाख्यः अहोरात्रे वै अहोरात्रलक्षणं कालमधिष्ठाय। प्रजाः सृजतीति शेषः। वै प्रसिद्धम्। तस्य प्रजापतेः अहरेव दिनमेव प्राणः मुख्यः । रात्रिरेव रयिः भारती। अहोरात्रे स्थित्वा प्रजोत्पत्तौ निमित्तीभवत इत्यर्थः। भारतीप्राणयोः अहोरात्राभिमानित्वेन तदानीं कर्तव्याकर्तव्यपुरःसरं दम्पतीस्थितत्वमप्यनयोरस्तीत्याह– **प्राणं वा एत इति** ॥ एनं प्राणं प्रस्कन्दन्ति यत्र कुत्रचित्परित्यजन्ति। यद्यस्मात् रात्रौ रत्या रतिसाधनभूतया स्त्रिया संयुज्यन्ते संयोगं कुर्वन्ति । तत्कर्म ब्रह्मचर्यमेव ब्रह्मचर्यसममेव । अहरधिष्ठातुः प्राणस्य पुंसि स्थितत्वं रात्र्यधिष्ठात्र्याः भारत्याः स्त्रियां स्थितत्वं चोक्तं भवति। अतो दिवा भार्यायां भारतीसन्निधानाभावात् पुरुषरेतःस्थितस्य प्राणस्य त्यागः यत्र कुत्रचित् कृते भवतीति दिवासंयोगो निषिद्ध इति भावः। रात्रौ तु देव्याः स्त्रियां वर्तमानत्वात् प्राणः स्वभार्यामेव

गत इति तद् ब्रह्मचर्यमेवेति। तदेतत् भाष्यकृतोक्तं 'भार्यास्था तु सरस्वती' इत्यादि ॥ १-९ ॥

उपनिषत्

**अन्नं वै प्रजापतिस्ततो हैतद् रेतः । तस्मादिमाः प्रजाः प्रजायन्त इति । तद् ये हैतत् प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १० ॥**

भाष्यम्

**.................. एवं जानन्विमुच्यते ॥**

**टीका**–किञ्चान्नं वै प्रजापतिः। कथमन्ने स्थितस्य प्रजापतेः प्रजाजनकत्वमिति? ततोऽन्नात् खल्वेतद्रेतो जायते। किं चातः? तस्माद्रेतसो हीमा मानुषादिप्रजाः प्रजायन्त इति। अन्ने स्थित्वा तत् रेतोरूपेण परिणाम्य तदुपादानीकृत्य प्रजापतिः प्रजाः सृजतीति यावत्। एवं परमेश्वरो निमित्तोपादानभूतान् पदार्थान् द्वारीकृत्य प्रजाः सृजतीति विदुषां फलमुच्यते– **तदित्यादिना**॥ तत्तत्र प्रजासु ये खलु पुरुषास्तदेतद्यथोक्तं प्रजापतेर्व्रतं कर्म चरन्ति जानन्ति ते मिथुनमुत्पादयन्ते साध्वपत्या भवन्ति। तेषामेवैषः सत्याख्यो ब्रह्मलोकः प्राप्यो भवति। येषां तपो ब्रह्मचर्यं चास्ति, येषु सत्यं सत्यवचनं प्रतिष्ठितं नियमेन स्थितम्। न केवलमेतावत्। किन्तु यावद् ब्रह्मलयं तत्र स्थितानामेव तेषामसौ विरजोऽप्राकृतो ब्रह्मलोको वैकुण्ठादिः प्राप्यो भवति। येषु जिह्मं कौटिल्यमनृतमसत्यवचनं माया विप्रलिप्सेत्येवमादिदोषा न सन्ति तेषामिति सम्बन्धः। सत्यवचनादिगुणाभिधानेन सिद्धस्याप्यनृतादिदोषाभावस्योक्तिरादरार्थेति। तदिदमाह– **एवमिति**॥ १०॥

**वामन**–अत्र पुनः साधनविशेषात्फलविशेषोऽस्तीत्याह– **तद्ये हैतदित्यादिना** ॥ तत्र यथा भगवतोत्पादितेषु जन्तुषु ये जनाः प्राजापत्यं व्रतं चरन्ति।

तद्यथा ऋग्विधानोक्तभङ्ग्या शंनःपुरुषसूक्तयोः सम्पुटहोमशेषप्राशनपूर्वकं विष्णुर्योनिसूक्तेनोपस्थाय प्रजापतिं प्रार्थयन्ति। ते तत्प्रसादात् सदपत्य-मुत्पादयन्ते। अथ एषां तपोब्रह्मचर्यादिगुणा बहवो भवन्ति। तेषामेवैष सत्याख्यो ब्रह्मलोको भवति। ब्रह्मचर्यादिगुणेष्वपि येषु सत्याख्यं ब्रह्म प्रकर्षेण स्थितं तेषां ह्यसौ विरजो जन्ममृत्यादिदोषहीनो वैकुण्ठाख्यः परब्रह्मलोको भवति। अथ येषु प्रारब्धकर्मविनाशेन जिह्मानृतादिदोषाणां कात्स्न्र्येनाभावः स्यात्। तेषामेवासौ लोकः स्यादिति भावः। जिह्म व्याजः । अनृतमसत्यवचनम् । 'माया त्वविद्यमानार्थप्रकटनम्' इति पिप्पलादः कबन्धिने प्रश्नपरिहारमुप-सञ्जहार॥ १-१० ॥

**छलारी–**किञ्च 'अन्नं वै प्रजापतिः' इति उपक्रमे प्राणरय्यधिष्ठानेन प्रजासृष्टेः प्रतिज्ञातत्वादत्रान्नेऽपि रयिप्राणाधिष्ठानेनैव प्रजासृष्टिर्ज्ञातव्या॥ **सत्यं सत्यवचन-मिति**॥ सज्जनानामुपकारकं वचनमित्यर्थः। 'सतां येनोपकारः स्यात्तत्सत्यमिति गीयते' इति वचनात्। प्रतिष्ठितमित्यत्र प्रतिशब्दार्थो नियमेनेति। माया चेत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वमित्यभिप्रेत्याह– **एवमादिदोषा इति** ॥ १-१०॥

**मङ्कालीय–**एकेन प्रकारेणोपादानत्वस्य यन्मूर्तं चेत्यादावुक्तत्वादन्नं वा इत्येतत्किञ्चेत्यवतारितम्। प्रजाजनकत्वमितीत्यनन्तरमाकाङ्क्षायामाहेति शेषः। पितामहादिवत्परम्परया जनकत्वोपचार इति प्रतीतिनिरासायाह– **अन्ने स्थित्वेत्यादि** ॥ **चरन्ति जानन्तीति** ॥ चर गतिभक्षणयोरिति धातुव्याख्याना-द्गत्यर्थानामवगत्यर्थत्वमिति भावः। मिथुनोत्पादनस्याज्ञानिसाधारण्यादाह– **साध्वपत्या इति** ॥ तेषामेवैष इत्यादिवाक्यद्वयं भिन्नविषयत्वप्रतीतिनिरासाय व्याचष्टे– **तेषामेवैष इति** ॥ प्रतिष्ठितमित्यत्र प्रतिशब्दार्थो नियमेनेति। माया चेत्यत्र चशब्दस्यानुक्तसमुच्चायकत्वमभिप्रेत्याह– **एवमादिदोषा इति** ॥ १-१० ॥

**अनन्तभट्टीय–**एकेन प्रकारेणोपादानत्वस्य यन्मूर्तञ्चेत्यत्रोक्त्वा किञ्चे-त्यवतारितम्। पितामहत्वादिवत्परम्परया जनकत्वोपचार इति प्रतीति-

निरासायान्ने स्थित्वेत्यादि ॥ **चरन्ति जानन्तीति** ॥ चर गतिभक्षणयोरिति धातुव्याख्यानादूत्यर्थानामवगत्यर्थत्वादिति भावः। तेषामेवैष इत्यादि वाक्यद्वयं भिन्नविषयकत्वप्रतीतिनिरासाय व्याचष्टे– **तेषामेवैष इत्यादि**॥ १-१० ॥

**खण्डार्थ–**किञ्चान्नं वै प्रजापतिः । कथमन्नेऽवस्थितस्य प्रजाजनकत्वमित्यत उच्यते - ततोऽन्नात् खल्वेतद्रेतोऽभिजायते । किं ततः? तस्माद्रेतसो हीमा मनुष्यादिप्रजाः प्रजायन्त इति । अन्ने स्थित्वा तद्रेतोरूपेण परिणाम्यैतदुपादानी-कृत्यापि प्रजापतिः प्रजाः सृजतीति यावत् । एवं परमेश्वरो निमित्तोपादानभूतान् पदार्थान् द्वारीकृत्य प्रजाः सृजतीति विदुषः फलमुच्यते– **तदित्यादि** । तत् तत्र प्रजासु ये खलु पुरुषाः तदेतद् यथोक्तं प्रजापतेर्व्रतं कर्म चरन्ति जानन्ति ते मिथुनमुत्पादयन्ते साध्वपत्या भवन्ति । तेषामेवैष सत्याख्यो ब्रह्मलोकः प्राप्यो भवति येषां तपः ब्रह्मचर्यं चास्ति, येषु सत्यं सत्यवचनं च प्रतिष्ठितं नियमेन स्थितम् । न केवलमेतावत् किन्तु यावद् ब्रह्मलयं तत्र स्थितानां तेषामेवासौ विरजोऽप्राकृतो ब्रह्मलोको वैकुण्ठादिः प्राप्यो भवति । येषु जिह्मं कौटिल्यमनृतमसत्यवचनं माया विप्रलिप्सा इत्येवमादिदोषाः न सन्ति तेषामिति सम्बन्धः । सत्यवचनादिगुणाभिधानेन सिद्धस्याप्यनृतादिदोषाभावस्योक्ति-रादरार्थेति ॥ १-१० ॥

**नर–**अन्नं वै प्रजापतिः कथमित्यत आह– **तत इति** ॥ ततोऽन्नात्खल्वेतद्रेतो जायते ततो रेतसो हि मानुषादिप्रजाः प्रजायन्त इति। अन्ने स्थित्वा तद्रेतोरूपेण परिणाम्य तदुपादानीकृत्य प्रजापतिः प्रजाः सृजतीति यावत्। एवंवेत्तुः फलमाह– **तदिति**॥ तत् तत्र प्रजासु खलु पुरुषास्तदेतद्यथोक्तं प्रजापतेर्व्रतं कर्म चरन्ति जानन्ति। साध्वपत्या जायन्ते। तेषामेवैष सत्याख्यो ब्रह्मलोकः प्राप्यो भवति। येषु जिह्मं कौटिल्यम् । अनृतं असत्यवचनम् । मायादिविप्रलिप्सा-दिदोषाः न सन्ति तेषामसौ प्रसिद्धः विरजः प्रकृतिबन्धरहितः ब्रह्मलोकः पर-ब्रह्मलोकः प्राप्यो भवति॥ १-१० ॥

**उदय–**विधान्तरेण प्रजासृष्टिमाह– **अन्नं वै इत्यादिना** ॥ प्रजापतिर्भगवान्

अन्नं वै अन्नमधिष्ठाय प्रजाकारीति शेषः। अन्नाधिष्ठातुर्भगवतो कथं प्रजोत्पादकत्व-मित्यत आह– **ततो ह वै इत्यादिना** ॥ ततः अन्नात्, हवा खलु । एतद्रेतो । जायत इति शेषः। तस्माद्रेतसो इमाः मानुषादिप्रजाः प्रजायन्ते उत्पन्नाः भवन्तीति। अन्ने स्थित्वा तद्रेतोरूपेण परिणाम्य उपादानीकृत्य च भगवान् प्रजाः सृजतीत्यर्थः। अतो निमित्तोपादानभूतान् पदार्थान् द्वारीकृत्य भगवान् प्रजासर्जक इति भावः। परमात्मनः एतादृशमुत्कृष्टत्वं वेत्तुः फलमाह– **तद्ये हवा इति** ॥ तत् तत्र प्रजासु ये ह वा खलु पुरुषाः। एतत् पूर्वोक्तं प्रजापतिव्रतं परमात्मनः व्रतं जगत्सर्जनरूपम्। चरन्ति जानन्ति। ते पुरुषाः मिथुनमुत्पादयन्ते। साध्वपत्या भवन्तीत्यर्थः। तेषां पुंसां एषो ब्रह्मलोकः सत्याख्यः चतुर्मुखलोकः । प्राप्यो भवतीति शेषः। ते के । येषां पुंसां तपः आलोचनम्। कृच्छ्रचान्द्रायणादिब्रह्मचर्यं वेदाभ्यासव्रतं वा । येषु सत्यं भगवद्विषयकं वचनं प्रतिष्ठितम् । स्थितं भवतीति शेषः। एतावत्फलप्राप्त्या न पुरुषार्थ इत्यतो विशेषफलश्चाह– **तेषामिति** ॥ तेषां तत्र स्थितानां असौ विरजो ब्रह्मलोकः दोषरहितः अप्राकृतो वैकुण्ठादिलोकः । प्राप्यो भवतीति शेषः। येषु जिह्मं कौटिल्यमनृतं असत्यवचनम् । माया विप्रलिप्सेति एवमादयो न सन्ति तेषां स लोको भवतीति पूर्वेण सम्बन्धः। अतोऽखिलगुणगणपरिपूर्णस्य परमात्मनो जिज्ञासा कर्तव्येति भावः॥ १-१०॥

॥ इति प्रथमः प्रश्नः ॥ १ ॥

# अथ द्वितीयः प्रश्नः

उपनिषत्

**अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन् कत्येव देवाः प्रजा विधारयन्ते । कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति ॥ १ ॥**

**टीका**–'अथ हैनं भार्गवः' प्रश्नार्थस्योक्तानन्तर्यसूचकोऽथशब्दः। उक्तं परमेश्वरस्य सकलप्रजाजनकत्वम्। लब्धजन्मनः स्थित्यादीति तदनन्तरं स्थितिज्ञानहेतुत्वं वक्तव्यम्। प्राक्प्राणस्य वरिष्ठत्वमभिप्रेतम्। तच्चोपपादनीयमिति तदर्थमुत्तरो ग्रन्थः। भगवन्, कत्येव कियत्सङ्ख्याकाः कतरे च देवाः प्रजा विधारयन्ते? कति कतरे च देवा एवद्विषयजातं प्रकाशयन्ते? कान्निमित्तीकृत्य परमेश्वरः प्रजानां स्थितिं विषयप्रकाशं च करोतीति यावत्। एषां धारणप्रकाशहेतूनां देवानां मध्ये को वा वरिष्ठोऽतिशयेन वरः॥ २-१ ॥

**सत्य**–॥ **स्थितिज्ञानहेतुत्वमिति** ॥ स्थितिहेतुत्वं ज्ञानहेतुत्वञ्चेत्यर्थः । अत एव प्राक् स्थित्यादीत्युक्तम् ॥ **अभिप्रेतमिति** ॥ स मिथुनमुत्पादयत इति प्रथममुत्पत्तिकथनेन प्राणस्य वरिष्ठत्वमभिप्रेतमित्यर्थः ॥ २-१ ॥

**छलारी**–ननु कात्यायनप्रश्नप्रतिवचनानन्तरं सुकेशादिप्रश्नप्रतिवचनानि विहाय भार्गवप्रश्नप्रतिवचनमेव कुत इत्याशङ्कापरिहारायोक्तमथशब्दं व्याचष्टे— **प्रश्नार्थस्येति** ॥ **लब्धजन्मन इति** ॥ जगत इति शेषः। स्थित्यादीत्यतः परं सम्भवतीति शेषः। तदनन्तरं सृष्टिकथनानन्तरम्॥ **प्राक्प्राणस्य वरिष्ठत्वमिति**॥ एतौ बहुधा प्रजाः करिष्यत इति प्रजापतेस्तपःप्रकारप्रदर्शनवाक्ये बहुधा प्रजाकरणवचनात् ॥ **कत्येव कियत्सङ्ख्याका इति**॥ 'किमः सङ्ख्यापरिमाणे डति च' इति सूत्रेण किंशब्दात् सङ्ख्यापरिमाणविशेषकप्रश्नार्थात् डतिप्रत्यय-विधानादित्यर्थः॥ **कतरेति** ॥ के च देवा इत्यर्थः। 'किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' इति सूत्रेण किंशब्दान्निर्धारणार्थे डतरच्प्रत्यय इति भावः। विषयप्रकाशनं

शब्दादिविषयज्ञापनार्थमित्यर्थः॥ **अतिशयेन वर इति** ॥ वरशब्दादतिशयार्थे 'अतिशायने तमाबिष्ठनौ' इति इष्ठन्प्रत्ययः॥ २-१ ॥

**ताम्रपर्णीय**–स्थित्यादीत्यादिनोक्तं विवृणोति स्थितिहेतुत्वं **ज्ञानहेतुत्वमिति**॥ **अभिप्रेतमिति**॥ **स मिथुनमुत्पादयत इति**। प्रथममुत्पत्तिकथनेनेत्यर्थः॥ **उपपादनीयमिति** वक्ष्यमाणान्वयव्यतिरेकाभ्यामित्यर्थः। स कतीति सङ्ख्याप्रश्न एव न भवति। किन्तु स्वरूपप्रश्नोऽपीति भावेनोक्तम्– **कतरे च देवा इति**। कतर इत्यत्र सङ्ख्याप्रश्नोऽपि विवक्षितमित्युक्तम्– **कति कतरे चेति** ॥ २-१ ॥

**मङ्गालीय**–॥ **अथ हैनं भार्गवः**॥ ननु कात्यायनप्रश्नप्रतिवचनानन्तरं सुकेशादिप्रश्नप्रतिवचनानि विहाय भार्गवप्रश्नप्रतिवचने कुतो वक्तव्ये इत्याशङ्कापरिहारायोक्तमथशब्दं व्याचष्टे– **प्रश्नार्थस्योक्तानन्तर्यसूचकोऽथशब्द इति** ॥ स्थित्यादीत्यतःपरं सम्भवतीति शेषः। तदनन्तरं सृष्टिकथनानन्तरम्।। **स्थितिज्ञानहेतुत्वमिति** ॥ स्थितिहेतुत्वं ज्ञानहेतुत्वञ्चेत्यर्थः। अत एव प्राक्स्थित्यादीत्युक्तम्॥ **अभिप्रेतमिति** ॥ 'स मिथुनमुत्पादयते' इति प्रथममुत्पत्तिकथनेन 'एतौ मे बहुधा प्रजाः करिष्यतः' इति प्रजापतेस्तपःप्रकारप्रदर्शकवाक्ये बहुधा प्रजाकरणवचनेन वा प्राणस्य वरिष्ठत्वमभिप्रेतमित्यर्थः॥ **कत्येव कियत्सङ्ख्याका इति** ॥ 'किमः सङ्ख्या परिमाणे डति च' इति सूत्रेण किंशब्दात्सङ्ख्यापरिमाणविशेषप्रश्नार्थाड्डतिप्रत्ययविधानादिति भावः॥ **कतरे चेति** ॥ के च देवा इत्यर्थः। 'किं यत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' इति सूत्रेण किंशब्दान्निर्धारणार्थे डतरच्प्रत्यय इति भावः। विषयजातं शब्दादिसमूहम्।

ननु परं ब्रह्मान्वेषमाणा इत्युक्तत्वात्परब्रह्मजिज्ञासुना भार्गवेण धारकादिदेवताविषयकप्रश्नः कथं क्रियत इत्यतः प्रश्नतात्पर्यमाह– **कान्निमित्तीकृत्येति** ॥ 'एतावदेवाहमेतद्ब्रह्म वेद' इत्युपसंहारवाक्येन परिहारवाक्यस्यापि भगवद्विषयकत्वावगमाच्चैतदेव प्रश्नतात्पर्यमित्यवधेयम्। अत एव पूर्वखण्डेऽपि

'तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः' इति भाष्ये प्रश्नतात्पर्यमुक्तम्॥ **अतिशयेन वर इति** ॥ वरशब्दादतिशयार्थे 'अतिशायने तमबिष्ठनौ' इति इष्ठन्प्रत्यय इत्यर्थः॥ २-१ ॥

**अनन्तभट्टीय–**॥ **अथ हैनं भार्गवः** ॥ ननु परं ब्रह्मान्वेषमाणा इत्युक्तत्वात्परब्रह्मजिज्ञासुना भार्गवेण धारकादिदेवताविषयः प्रश्नः कथं क्रियत इत्यतस्तत्तात्पर्यमाह– **कान्निमित्तीकृत्येति**॥ 'एतावदेवाहं परं ब्रह्म वेद' इत्युपसंहारवाक्येन परिहारवाक्यस्यापि भगवद्विषयत्वावगमाच्चैतदेव प्रश्नतात्पर्यमित्यवसेयम्। अत एव पूर्वखण्डे यत्र भगवत्परत्वं न प्रतीतं तत्र 'तावाविश्य स्वयं विष्णुः सर्वसृष्टीः करोत्यजः' इति भाष्ये तात्पर्यमुक्तम्॥ २-१ ॥

**खण्डार्थ–**॥ **अथ हैनं भार्गवः** ॥ प्रश्नार्थस्य उक्तानन्तर्यसूचकोऽथशब्दः। उक्तं परमेश्वरस्य सकलप्रजाजनकत्वम्। लब्धजन्मन एव स्थित्यादीति स्थितिज्ञानहेतुत्वं वक्तव्यम्। प्राक् प्राणस्य वरिष्ठत्वमभिप्रेतं तच्चोपपादनीयमिति तदर्थमुत्तरग्रन्थः। भगवन् कत्येव कियत्सङ्ख्याका देवाः प्रजा विधारयन्ते? कतरे देवाः एतद्विषयजातं प्रकाशयन्ते? कान् निमित्तीकृत्य परमेश्वरः प्रजानां स्थितिं विषयप्रकाशं च करोतीति यावत्। एषां धारणप्रकाशहेतूनां देवानां मध्ये को वरिष्ठोऽतिशयेन वरः? ॥ २-१ ॥

**नर–**द्वितीयप्रश्नप्रतिवचनमारभते– **अथेति** ॥ प्रष्टव्यार्थस्यानन्तर्यसूचकोऽथशब्दः। उक्तं परमेश्वरस्य सर्वप्रजाजनकत्वम्। लब्धजन्मनः चेतनस्य स्थित्यादीति तदनन्तरं स्थितिहेतुत्वं वक्तव्यम्। प्राक्प्राणस्य वरिष्ठत्वमभिप्रेतम्। तच्चोपपादनीयम्। तदर्थमुत्तरो ग्रन्थः। भगवन् कत्येव कियत्सङ्ख्याकाः कतरे के च देवाः प्रजाः विधारयन्ते। कति कतरे च देवाः एतद्विषयजातं प्रकाशयन्ते भगवन् कान् कियत्सङ्ख्याकान् देवान्निमित्तीकृत्य धारणप्रकाशने करोतीति यावत्। एषां मध्ये कः पुनः को वा देवो वरिष्ठः अतिशयेन वरः ॥ २-१॥

**उदय–**एवं कबन्धिकात्यायनस्योक्तप्रतिवचनं सकलजगज्जन्मकारणरूपं भगवतः श्रुत्वा ज्ञातस्य स्थितिरावश्यकीति सा कस्याधीना। किञ्च प्राणस्येतर-

देवताधिक्यमुपपादितम् । तत्कथमित्यभिप्रेत्य भार्गवो वैदर्भिः पप्रच्छ प्रश्नं कृतवान्। प्रश्नमेवाह। हे भगवन् पूज्य कत्येव कियत्सङ्ख्यकाः देवाः प्रजाः लोकान् विधारयन्ते आश्रयभूताः भवन्ति। कतरे च देवाः एतद्विषयजातं प्रकाशयन्ते प्रकाशं कुर्वन्ति। को देवः पुनरेषां वरिष्ठः श्रेष्ठः। आश्रयप्रकाशहेतूनां देवानां मध्ये को श्रेष्ठ इत्याशयेन प्रश्नः। सर्वेषामादावुत्पत्तिमत्त्वात्प्राणस्य श्रेष्ठत्वमर्थतः सिद्धमपि स्फुटं नोक्तमित्यभिप्रायेण पुनः श्रेष्ठत्वे प्रश्नः॥ २-१ ॥

### उपनिषत्

**तस्मै स होवाच । आकाशो ह वा एष देवो वायुरग्निरापः पृथिवीवाङ्मनश्चक्षुःश्रोत्रं च ते प्राकाश्या अभिवदन्ति । वयमेतद् बाणमवष्टभ्य विधारयाम इति ॥ २ ॥**

### भाष्यम्

**वायुरग्निरित्यत्र भूतवायुरुच्यते। प्राणशब्देन प्रधानवायुः॥ २ ॥**

**टीका**–पूर्वोक्तरीत्या प्राणेन भाव्यम्। तत्कथमित्येवं पृष्टवते तस्मै स होवाच। एष आकाश आकाशाभिमानी देवो ह वै यस्त्वया धारकः पृष्टः। एवं वायुरग्निरित्यादि। अत्रोपलक्षणत्वेन पृथिवी च पृथिवीमात्रा चेत्यादिवक्ष्यमाणाः सर्वेऽपि तत्त्वदेवा ग्राह्याः। तेषु चक्षुरादयः प्रकाशहेतवोऽन्ये स्थितिहेतव इति ज्ञातव्यम्। उक्तमात्रग्रहणे कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यात्। तत्र वायुशब्दस्य प्रधानाप्रधानवायुसाधारण्यादुभयोरपि वक्तव्यत्वात् कोऽत्राभिप्रेत इति चिन्तायामाह– **वायुरिति**॥ भूतप्रकरणत्वादिति भावः। वायाविन्द्र इत्यादाविवात्र प्रधानवायुः किं न स्यात्तस्यापि वक्तव्यत्वादित्यत आह– **प्राणशब्देनेति**॥ तान् वरिष्ठः प्राण उवाचेत्युत्तरत्र प्रधानवायुः प्राणशब्देन परामृश्यते। यद्यत्रासौ वायुशब्देन प्रकृतो न स्यात् कथं तर्हि प्राणशब्देन परामृश्येत। नह्येवं बाधकमन्तरेण क्वचिदुपलब्धम्। लक्षणयाऽपि तस्य ग्रहणसम्भवादिति भावः। नच वाच्यमुभयोरपि वाचकोऽस्त्विति। उक्तादेव हेतोः। नह्येवं वक्तव्यं सर्वमप्युक्तं स्यात्। येन सकृदुच्चरितस्य शब्दस्यार्थद्वयं प्रतिपद्येमहीति।

एतेषाञ्च प्राणस्य वरिष्ठत्वावधारणायाऽख्यायिकोच्यते— **ते प्राकाश्या इत्यादि**॥ त एते धारकाः प्रकाशकाश्च देवाः प्राकाश्याः प्रकाशवन्तः, अभि अभितः उच्चैरिति यावत्, अभिवदन्ति कदाचिदन्योन्यं स्पर्धयैवाभ्यवदन्। किमिति? वयमेतद् बाणं शरीरमवष्टभ्याऽश्रित्य विधारयामः प्रकाशयामश्चेति। अहमेव स्वातन्त्र्येण देहधारको न त्वमपि धारकः, अहमेव स्वातन्त्र्येण विषयप्रकाशको न त्वमपि प्रकाशक इति यावत्॥ २॥

**वामन**–आकाशो ह वा एष देवो वायुरग्निराप इत्यादिना वैदर्भिप्रश्नपरिहारः क्रियते। अत्र वायुरिति शब्देन भूतवायुरुच्यते। भूतप्रकरणत्वात्। तान्वरिष्ठः प्राण उवाचेत्यत्र प्राणशब्देन प्रधानवायुः। वरिष्ठ इति विशेषणात्। अत्रेदमाकूतम्। अयमाकाशदेवो वाय्वादीनाञ्चाभिमानिनो ये देवास्ते प्रधानवायुना प्रजानां तत्त्वप्रकाशनाय हि युक्ताः। तथाप्येवं विवदन्ति वयमेवैतासां प्रजानां बाणं शरीरमवष्टभ्य विधारयाम इति। 'ब कामन' इति धातोः कामाणनहेतुत्वात् बाणशब्देन शरीरमुच्यते॥ २-२ ॥

**प्रकाशिका**–'उक्तमात्रग्रहणे' इत्यत्र उक्तमात्रग्रहणे पञ्चदेवतामात्रग्रहणे शब्दादितन्मात्रादेवतानाञ्चाग्रहणे वायोः सर्वदेवोत्तमत्वासिद्ध्या 'कस्स्विद्देवतानां वरिष्ठः' इति प्रश्नो न स्यात्। 'लक्षणयाऽपि तद्ग्रहणसम्भवात्' इत्यत्र गवां मध्ये कृष्णा गौर्विशिष्टेत्यादाविवोत्कृष्टतया वक्तव्यप्राणस्यापि निर्धारणीयमध्ये प्रवेशावश्यम्भावादसावावश्यकः। प्राणस्यापि वायुशब्देनोक्तौ वायोरप्यभिमानित्वाविशेषात्साम्यशङ्का स्यात्। कस्यायं परामर्श इति च न निश्चेतुं शक्यते। तस्मादुपलक्षणयोभयोर्ग्रहणमिति भावः। 'नह्येवं वक्तव्यं सर्वमप्युक्तं स्यात्' इत्यत्र एवं सति मुख्यवाच्यानामेवालाभेन भूतपञ्चकवाचक-पदैरप्यनुक्तानामपीन्द्रियाभिमानिदेवतानामसङ्ग्रहप्रसङ्गेन प्राणादवरत्वेन वक्तव्यं सर्वमुक्तं न स्याद्धि। अतो लक्षणैवाश्रयणीयेति भावः। 'प्रकाशवन्तः' इत्यत्र प्राकाश्याः वक्ष्यमाणप्रमेयस्य सर्वेषां प्रकाशने योग्या इत्यर्थः। तस्याभिप्रायमाह– **उच्चैरिति यावदिति**॥ २-२ ॥

**सत्य**– ननु कः पुनरेषां वरिष्ठ इति श्रुतौ धारकाणां प्रकाशकानां देवानां मध्ये को वरिष्ठ इति प्रश्नो न युज्यते । उत्तरत्र परिहारे अयं वरिष्ठ इत्यकथनात् । किन्तु तान् वरिष्ठः प्राण उवाचेति प्राणस्य वरिष्ठत्वमनूद्यत एव । नचासिद्धस्यानुवादो भवतीत्यतः प्रागुक्तरीत्या मुख्यप्राणस्य वरिष्ठत्वे सिद्धवत्कृत्य प्रकारप्रश्न एव । नतु वरिष्ठस्वरूपप्रश्न इति प्रश्नाभिप्रायमाह– **एवं वायुरित्यादीति** ॥ यस्त्वया धारकः पृष्टः स वायुरग्निरित्यादि योजनीयमित्यर्थः । लक्षणहेतुमुख्यार्थानुपपत्तिं दर्शयति– **उक्तमात्रग्रहणे इति ॥ कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यादिति** ॥ येषां धारकाणां प्रकाशकानां तत्त्वाभिमानिनां सर्वेषां मध्ये को वा वरिष्ठ इति प्रश्नस्य तान् वरिष्ठः प्राण उवाचेति परिहारोऽननुगुणः स्यात् । उक्तानामाकाशादीनां नवानां देवानां मध्ये मुख्यप्राणस्यानुक्तत्वेन तदपेक्षया वरिष्ठत्वकथनस्यानन्वितत्वात्। तस्मात् प्रश्नप्रतिवचनानुगुण्यायोक्तेषु प्राणोऽवश्यं लक्षणीयः । तथाच किमर्धजरतीयेन प्राणावसितसर्वदेवोत्तमत्वलाभाय लक्षणया वक्ष्यमाणसर्वतत्त्वदेवानां ग्रहणे तु तन्मध्ये मुख्यप्राणस्य वरिष्ठत्वेन कः पुनरेषां वरिष्ठ इति निर्धारणषष्ठ्याः सम्भवेन चतुर्थप्रश्ने वक्ष्यमाणसर्वतत्त्वदेवानां लक्षणया ग्रहणं युक्तमित्यर्थः ।

वायुरग्निरित्यत्र भूतवायुरुच्यत इति मूलहेतोरनुक्त्या न्यूनतेत्यतः मूलाभिप्रायहेतुमाह– **भूतप्रकरणत्वादिति भाव इति** ॥ यथाह जैमिनिः 'विशये प्रायदर्शनाद्' इति। वत्समालभेतेत्यत्र आलम्भनं हिंसा उत स्पर्श इति विशये गोदोहनप्रकरणत्वात् स्पर्श एवेति ।

ननु प्राणशब्देन प्रधानवायुरुच्यत इत्युत्तरं भाष्यं व्यर्थम् । तान् वरिष्ठः प्राण उवाचेत्यत्र वरिष्ठत्वविशेषणादेव प्राणशब्दस्य प्रधानवायुपरत्वनिश्चयेन पूर्वत्र वायुशब्द इव इह सन्देहाभावेन प्राणशब्दस्य व्याख्येयत्वात् । तथाचोत्तरभाष्यं व्यर्थमित्याशङ्क्य नेदं शब्दं प्राणशब्दव्याख्यानार्थं प्रवृत्तम् । येनोक्तदोषः स्यात् । किन्तु पूर्वत्र वायुशब्देन भूतायुरुच्यते भूतप्रकरणत्वादित्युक्तम् । तत्र प्रकरणमुल्लङ्घ्य वायुशब्देन प्रधानवायोरेव ग्रहणे बाधकं प्रदर्शयितुमिति भावेन तद्भाष्यमवतारयति– **वायाविन्द्र इत्यादाविति** ॥ 'भूतेषु तच्छ्रुतेः' इत्यधिकरणे

आकाशादिभूतेषु देवानां लयकथनावसरे 'वायाविन्द्रः सोम आदित्ये बृहस्पतिः' इत्युदाहृतवाक्ये इन्द्रादिलयाधिकरणत्वलिङ्गेन भूतप्रकरणं बाधित्वा वायुशब्देन भूतवायुं परित्यज्य यथा मुख्यवायुर्गृह्यते । तद्वदत्रापि भूतप्रकरणं बाधित्वा वायुशब्देन प्रधानवायुः किन्न गृह्यत इत्यर्थ इति रहस्यम् ।

तत्र लिङ्गवदत्र प्रकरणबाधकं किमित्यत आह– **तस्यापि वक्तव्यत्वादिति** ॥ तस्याप्यवश्यवक्तव्यत्वेनान्यथानुपपत्त्या प्रकरणबाधो युक्त इति भावः । वायुरग्नि-रित्यत्र वायुशब्देन प्रधानवायुग्रहणे बाधकप्रदर्शनपरमुत्तरभाष्यं यथास्यात्तथा योजयति ॥ **तान् वरिष्ठ इति** ॥ **परामृश्यत इति** ॥ वरिष्ठः प्राण उवाचेति सिद्धवन्निर्देशेन परामर्श इति ज्ञायते इत्यर्थः ॥ **यद्यसाविति** ॥ नह्यप्रकृतस्य परामर्शो युज्यत इति पूर्वं वायुशब्देन प्रकृतः प्रधानवायुः प्राणशब्देन परामृश्यत इति वक्तव्यम् । नच तथा युज्यते, कुत इत्यत उक्तम्– **यदीति** ॥ यद्यसौ प्राणः पूर्ववाक्ये वायुशब्देन प्रकृतः स्यात् कथं तर्हि प्राणशब्देन परामृश्यते । शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शस्यायुक्तत्वात् । ननु 'आत्मन आकाशः सम्भूतः' इत्यत्र 'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दः प्रयुज्य च' इत्यनुव्याख्यानोक्तरीत्या 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मशब्देन प्रकृतस्यात्मशब्देन परामर्शस्य 'स वा एषः' इत्यन्यप्रारम्भादिति भाष्योक्तरीत्या आत्मशब्दोदितस्य पुरुषशब्देन 'स वा एष पुरुषोऽन्नरसमयः' इति परामर्शस्य दर्शनात् । कथं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शो नोपलभ्यत इत्यत उक्तम्– **न ह्येवं बाधकमन्तरेणेति** ॥ एवं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण ग्रहणं बाधकमन्तरेण कुत्रचिदुपलब्धम् । येनात्र वायुशब्देन प्रकृतस्य प्राणशब्देन ग्रहणं युज्यते, बाधकाभावात् । पुरुषादि-शब्दे तु रसशब्देन विशेषणादिकं बाधकमित्यर्थः । नन्वप्रसक्तपरामर्शायोगेन प्रधानयोरपि प्रागवश्यं वक्तव्यत्वं बाधकमित्यत आह– **लक्षणयापि तस्य वायोः ग्रहणसम्भवादिति** ॥ **नचेति** ॥ लक्षणापेक्षया मुख्यवृत्तेर्ज्यायस्त्वेन वायुशब्द एव प्रधानाप्रधानयोरुभयोरपि वाय्वोर्वाचकोऽस्त्वित्यर्थः ॥ **उक्तादेवेति** ॥ नह्येवं बाधकमन्तरेण क्वचिदुपलब्धमित्युक्तादेवेत्यर्थः । ननु यथाकथञ्चिदुपलक्षणापेक्षया मुख्यवृत्तिर्ज्यायसीत्यत आह– **नह्येवं वक्तव्यं सर्वमिति** ॥ किञ्च कथं सकृदुक्तस्य

वायुशब्दस्य अर्थद्वयमङ्गीकृत्य मुख्यप्राणग्रहणेऽप्यत्र वक्तव्यं सर्वतत्त्वाभिमानिदेवताजातमुक्तं भवति । अतः इतरदेवानां ग्रहणाय लक्षणा अवश्यमङ्गीकार्या। तयैव मुख्यप्राणस्यापि ग्रहणसम्भवे किमर्थं सकृदुक्तस्यार्थद्वयमङ्गीकार्यमिति रहस्यार्थः । अत्र क्वचित्पुस्तके यद्यसौ वायुशब्देन प्रकृतो न स्यादित्यपि पाठो दृश्यते । तत्र पूर्वोत्तरवाक्यानां अलग्नता स्फुटैवेति असाम्प्रदायिकपाठ इति ज्ञेयम्। अत एव क्वचिन्नञः शोधो दृश्यत इति ।

ननु ते धारकाः प्रकाशका देवा वदन्ति अवदन् । प्राकाश्याः प्रकाशवन्तः अभि अभितः इत्यनयोः क्वोपयोगः अर्थविशेषालाभादित्यतः तात्पर्यमाह– **उच्चैरिति यावदिति** ।। तस्यापि तात्पर्यम्– **स्पर्धयेति** ।। **बाणं शरीरमिति** ।। 'शान्तिं निर्वाणपरमाम्' इत्यादौ निर्वाणशब्दस्य प्रकृतशरीरराहित्येन निमित्तेन मोक्षे प्रयोगात् । वबयोरभेदेन बाणशब्दोऽपि शरीरवाचीत्यर्थः । वयमेतत् बाणमिति सामान्येनो-क्तस्य बहुवचनस्य विविच्य इतरप्रतिषेधपूर्वकं तात्पर्यमाह– **अहमेव स्वातन्त्र्येणेति** ।।

**श्रीनिवास–** ।। **उक्तमात्रेति** ।। सर्वतत्त्वदेवाननुपलभ्य 'एष आकाशः' इत्युपनिषदुक्तानामेव ग्रहण इत्यर्थः ।। **अननुगुणेति** ।। तत्र सर्वदेवानामुक्तेरित्याशयः ।। **भूतप्रकरणत्वादिति** ।। भूतप्रकरणत्वादित्यनेन भाष्यस्य न्यायगर्भत्वमुपपादितं ज्ञेयम् । तथाच वायुरग्निरित्यत्र वायुशब्देन प्रधानवायुग्रहणं न सम्भवतीति भावः । ननु भूतप्रकरणत्वेऽपि वायाविन्द्र इत्यादौ इन्द्रलयाधिकरणत्वेन यथा वायुशब्देन प्रधानवायुग्रहणमेवं किं न स्यादित्याशङ्कते– **वायाविन्द्र इत्यादाविति** ।। **वक्तव्यत्वादिति** ।। सर्वेषां मध्ये वरिष्ठतमत्वनिर्धारणार्थमिति भावः।। **परामृश्यत इति** ।। तथाच पूर्वमपि प्रधानवायुः प्रसक्तः। अप्रकृतस्य परमार्शायोगादिति भावः ।। **यद्यत्रासाविति** ।। असौ प्रधानवायुः । अत्र वायुरग्निरित्यत्र ।। **नह्येवमिति** ।। तत्रान्नरसमयत्वादिबाधकवदत्र तदभावादित्यर्थः । नन्वस्त्यत्रापि प्राणशब्देन मुख्यप्राणग्रहणबाधकम् । तथाहि– यदि पूर्वं वायुशब्देन भूतवायुरुच्यते तर्हि मुख्यप्राणस्य पूर्वमप्रकृतत्वात् अत्र प्राणशब्देन कथमप्रकृतमुख्यप्राणस्य परामर्शः । पूर्वप्रकृतस्यैव परामर्शदर्शनादित्यत आह–

**लक्षणयापीति** ॥ **तदिति** ॥ मुख्यप्राणेत्यर्थः । तथाच पूर्वं 'एष देवो वायुः' इत्यादौ उपलक्षणेन वक्ष्यमाणा ग्राह्याः । सर्वेऽपि तत्त्वदेवाः इत्युक्तत्वेन प्राणस्यापि तत्र ग्रहणसम्भवेन प्रकृतत्वादत्र प्राणशब्देन युक्तस्तत्परामर्श इत्यर्थः। ननु मुख्यप्राणस्य परामर्शार्थं लक्षणा किमिति कार्या। वायुशब्द एव भूतमुख्य-वायुरूपोभयोरपि वाचकोऽस्त्वित्याशङ्कते– **नचेति** ॥ कुतो न वाच्यमित्यत आह– **उक्तादेवेति** ॥ यद्यसौ वायुशब्देन प्रकृतः स्यात्कथं तर्हि प्राणशब्देन परामृश्यते इत्युक्तादेव हेतोरित्यर्थः। किञ्च वायुशब्द उभयोरपि वाचक इति पक्षमङ्गीकृत्यापि एष आकाश इति वाक्ये कश्चिदेषां वरिष्ठ इति प्रश्नाननुगुण्याय वक्ष्यमाण-सर्वतत्त्वदेवोपलक्षणं तावदावश्यकमेव। लक्षणामकृत्वा वायुशब्देनोभयोर्वाच्यतया ग्रहणेऽपि वक्तव्यं सर्वतत्त्वाभिमानिदेवताजातं न ह्युक्तं भवति। यद्युक्तः स्यात्तर्हि सर्वदेवा उक्ता एको मुख्यप्राण एव नोक्त इति भावेन सकृदुक्तस्य वायुशब्दस्यो-भयवाचकत्वं वाच्यं स्यात्। नह्येवं वक्तव्यं सर्वमुक्तम्। अतस्तदर्थं वायुशब्दस्यो-भयवाचकत्वमङ्गीकृत्यापि सर्वदेवलक्षणाया अवश्यकार्यत्वाल्लक्षणयैव मुख्य-प्राणोऽपि कस्मान्न गृह्यते। तथाच लक्षणया प्राणस्यापि पूर्वप्रकृतत्वात्प्राणशब्दस्य पूर्वप्रकृतपरामर्शकत्वं सम्भवतीत्यभिप्रेत्याह– **न ह्येवमित्यादिना** ॥

ननु उत्तरत्र प्राणशब्देन परमार्शान्यथाऽनुपपत्त्या यदि पूर्वं प्रधानवायुः प्रकृतः तर्हि वायुशब्देन प्रकृत इति मन्तव्यम्। नच तत्सम्भवति। एकेन शब्देन प्रकृतस्य शब्दान्तरेण परामर्शायोगात्। नच सवा एष पुरुषोऽन्नरसमय इत्यादावात्मशब्देन प्रकृतस्यापि पुरुषशब्देन परामर्शदर्शनादत्रापि तथा सम्भवतीति वाच्यम्। बाधकभावाभावाभ्यां तदुपपत्तेरित्याशङ्क्य भाष्याभिप्रायमाह– **यद्यसाविति** ॥ असौ प्रधानवायुः अत्र वायुरग्निरित्यत्र **लक्षणयापीति** ॥ नात्र वायुशब्देन प्रधानवायुः प्रकृतः। येन तादृशी शङ्का स्यात्। किन्तु पृथिवी च पृथिवीमात्रा चेत्यादि वक्ष्यमाणानां देवानां यथा लक्षणया ग्रहणं एवं प्रधानवायोरपि लक्षणया ग्रहणं सम्भवतीत्याशयः॥ **उभयोरपीति** ॥ प्रधानाप्रधानवायोरपि वायुशब्द एव वाचकोऽस्त्वित्यर्थः ॥ **उक्तादेव हेतोरिति** ॥ भूतप्रकरणत्वादित्युक्तादेव हेतो-रित्यर्थः॥ **एवमिति** ॥ एवमपीत्यर्थः। तथाच वायुशब्दस्य उभयवाचकत्वेऽपि

वक्तव्यं सर्वं पृथिवी च पृथिवीमात्रा चेत्यादिकं नह्युक्तं स्यादित्यर्थः॥ **प्रतिपद्ये-महीति** ॥ तथाच लक्षणाङ्गीकार एव साधुरिति भावः॥ २-२ ॥

**छलारी–॥ पूर्वोक्तरीत्येति॥** प्रजापतिना स्वेन सृष्टिकरणकाले प्राणस्य सृष्टौ मुख्यनिमित्तत्वोक्तेरित्यर्थः॥ **एवं वायुरग्निरित्यादीति॥** यस्त्वया जगद्धारकः पृष्टः स वायुः अग्निरापःपृथिवी तथा प्रकाशहेतुत्वेन यः पृष्टः स वाक् मनश्चक्षुः श्रोत्रं चेति ज्ञेयम्। ननु चतुर्थप्रश्ने धारकाणां प्रकाश्यानां च बहूनामित्युक्तत्वा-न्नवानामेवात्र कथमुक्तिरित्यत आह– **अत्रोपलक्षणत्वेनेति** ॥ अत्र धारक-प्रकाशकानां सङ्कलय्योक्तेस्तत्र विवेकमाह– **तेषु चक्षुराद्या इति** ॥ अन्ये पृथिव्यादयः। उपलक्षणप्रयोजनमाह– **उक्तमात्रग्रहण इति** ॥ **प्रश्नाननुगुणः परिहार इति॥** कति कतरेति पदाभ्यां धारकत्वप्रकाश्यत्वावच्छिन्नानां पृष्टत्वा-च्चतुर्थप्रश्नप्रतिवचनपर्यालोचनया बहूनां धारकप्रकाश्यानां प्रतीतेस्तत्रोक्तपृथिवी-मात्रादिदेवान् विहायात्रोक्तनवमात्रग्रहणे सर्वधारकप्रकाश्यानुक्तेरिति भावः॥ **वायाविन्द्र इत्यादाविवेति॥** 'नैकस्मिन् दर्शयतो हि' इति सूत्रस्थभाष्योदाहृतायां 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनौ अग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिः' इति श्रुतौ लयप्रकरणादिन्द्रस्य प्रवहे लयासम्भवेन भूतप्रकरणेऽपि मुख्यवायुग्रहणादिति भावः॥ **तस्यापि वक्तव्यत्वादिति॥** मुख्यवायोरपि धारकत्वादिति भावः॥ **प्राणशब्देन परामृश्यत इति॥** मुख्यप्राणस्य 'आकाशो ह वै एष देवः' इति धारकप्रकाश्यदेवताप्रतिपादकवाक्ये मुख्यप्राणस्यानुक्तौ धारकत्वप्रकाश्यत्वाप्रतीतेः 'तान्वरिष्ठः प्राण उवाच' इत्यत्र धारकप्रकाश्यैर्विवाद-कारणासम्भवेन तत्र प्रतिपादितत्वज्ञापनार्थं अत्र परामृश्यत इत्युक्तम्। तदेवोपपादयति– **यद्यसावित्यादिना** ॥ ननु वायुशब्देन मुख्यप्राणग्रहणे धारका-दिषु मुख्यप्राणाप्रसक्तेः तान्वरिष्ठः प्राण उवाचेत्यत्र धारकादिभिर्विवादकारणा-सङ्गतेरित्यत आह– **लक्षणयापीति** ॥ आकाशादिशब्दैरुपलक्षणयेत्यर्थः॥ **उक्तादेव हेतोरिति॥** वायुशब्देन प्रकृतस्य प्राणशब्देन परामर्शायोगादित्युक्त-हेतोरित्यर्थः। युक्त्यन्तरञ्चाह– **नहीति** ॥ एवं वायुशब्देन मुख्यप्राणग्रहणेऽपि सर्वं पृथिवीमात्रादिकम्। ननु लक्षणया मुख्यप्राणग्रहणापेक्षया वायुशब्देन

मुख्यत्वाद्वचनवृत्त्या मुख्यप्राणग्रहणमुचितमित्यत आह– **येनेति** ॥ सकृदुच्चरित-शब्दस्य सकृदर्थप्रत्यायकत्वनियमात्। शब्दश्रवणानन्तरं तदर्थसमयस्मरणस्य क्रमिकत्वेन एकदानेकार्थसमयस्मरणानुपपत्तेरिति भावः ॥ **त एते धारका इति** ॥ अयं तच्छब्दः पूर्वोक्तधारकपरामर्शकः। नतु प्रकाश्यविशेषणमिति भावः। अत एव समुच्चयार्थकचशब्दोऽप्यर्थेनाध्याहृतः। प्रकाश्या इत्यत्र नायं ण्यत्प्रत्ययः। प्रकाशशब्दान्मत्वर्थे यत्प्रत्यय इति भावेनाह– **प्रकाशवन्त इति** ॥ ज्ञानजनका इत्यर्थः। 'संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादयः' इत्युक्तेः। जन्यजनक-भावलक्षणसंसर्गोऽत्र विवक्षितः। भूमनिन्दाप्रशंसासु इति मतुबादीनां भूमार्थस्या-प्युक्तेस्तदाश्रित्याह– **उच्चैरिति यावदिति** ॥ अभिवदतीत्यत्र अभिशब्दस्या-व्ययत्वेनानेकार्थत्वात् स्पर्धार्थकत्वमभिप्रेत्याह– **वदन्तीति** ॥ लटः 'व्यत्ययो बहुलम्' इति वचनात् अतीतार्थकत्वमिति भावेनाह– **अभिवदन्ति कदाचिद-न्योन्यस्पर्धयैवावदन्निति** ॥ धारकप्रकाश्यदेवानां स्पर्धयाभिवदनप्रकारमाह— **अहमेवेति** ॥ २-२ ॥

**ताम्रपर्णीय–**॥ **वक्ष्यमाण इति**॥ चतुर्थप्रश्ने 'प्राणश्च धारयितव्यश्च' इत्यन्तेन वक्ष्यमाणा इत्यर्थः॥ **चक्षुरादय इति**॥ यद्यपि वाङ्मनश्चक्षुरिति मनसः प्रथमग्रहणं तथापि चतुर्थप्रश्ने "चक्षुश्च द्रष्टव्यश्च" इत्यत्र चक्षुष आदित्वेन ग्रहणात्तदनुसारेणेयमुक्तिः। यद्यपि वागादिकर्मेन्द्रियाणां द्रव्यादिविषयाणां च न ज्ञानहेतुत्वम्। तथापि तेषां स्थितिहेतुत्वं बोध्यम्। लक्षणाबीजमुख्यार्थानुपपत्तिं दर्शयति– **उक्तमात्रेति** ॥ अत्रोक्तानां देवानामेव धारकत्वेन प्रकाशकत्वेन च ग्रहणे एषां धारकाणां प्रकाशकानां च को वरिष्ठ इति प्रश्नस्य तान्वरिष्ठः प्राण इति परिहाराऽनुगुणः स्यात्। उक्तेषु तस्याप्रविष्टत्वेन तेषां मध्ये वरिष्ठः प्राण इति वक्तुमशक्यत्वात्। लक्षणया सर्वतत्त्वदेवानां ग्रहणे तन्मध्ये मुख्यप्राणस्य वरिष्ठत्वेन कः पुनरेषां वरिष्ठ इति निर्धारणषष्ठ्याः सम्भवेन तेषां मध्ये प्राणो वरिष्ठ इति परिहारोऽनुगुणः स्यादिति भावः॥ **कोऽत्रेति**॥ न तावदुभयग्रहणं युक्तं सकृदुक्तशब्दस्यार्थद्वयायोगात्। अतः कोऽत्राभिप्रेत इत्यर्थः। प्रवह इत्याद्यनुक्त्वा भूतवायुरिति भूतग्रहणसूचितं हेतुमाह– **भूतप्रकरणत्वादिति**॥

यद्यपि प्रधानवायुरपि भूताभिमानी तथाप्यल्पाभिमानिप्रकरणत्वान्न महाभिमान्युपस्थितिरनेनेति भावः।

ननु तान्वरिष्ठः प्राण इति वरिष्ठत्वविशेषणादेव प्राणस्य प्रधानत्वप्रतीतेर्भाष्यं व्यर्थमित्यतः पूर्वोक्तानुपपत्तिपरिहारकत्वेनाऽवतारयति– **वायाविन्द्र इति**॥ 'नैकस्मिन् दर्शयतो हि' इति सूत्रोदाहृतश्रुतौ 'पृथिव्यामृभवो वरुणेऽश्विनौ। अग्नावग्नय इति भूतप्रकरणत्वेऽपि वायाविन्द्र सोम आदित्यो बृहस्पतिः' इत्यत्र वायुशब्दस्य प्रकरणबाधेन मुख्यवायुपरत्वात्प्रकृतेऽप्युपपद्यत इति भावः॥ ननु तत्रेन्द्रलयाधिकरणत्वलक्षणयुक्तिबलेनाल्पभूताभिमानिप्रकरणबाधोऽङ्गीकृतः। यथोक्तमनुव्याख्याने– 'प्रधानवायुस्त्विह वायुनामा भूतेष्विति प्रोक्तगतोऽपि युक्त्या' ॥ इति॥

नचात्र बाधकं किञ्चिदस्ति। येन प्रकरणबाध इत्यत उक्तम् – **तस्यापीति** ॥ परमात्मद्वारतया जगद्धारकत्वेन प्रकाशकत्वेन चावश्यं वक्तव्यत्वात्। अन्यथानुपपत्त्या प्रकरणबाधो युक्त इति भावः। वायुरग्निरित्यत्र प्रधानवायोः प्रस्तुतत्वमङ्गीक्रियत एव। अन्यथा तस्यापि वक्तव्यत्वादिति त्वदुक्तयुक्तिविरोधात् युक्त्यन्तरस्य सत्वाच्च वायुशब्देन वचनवृत्त्यैव प्रकृतत्वं तु नाङ्गीक्रियते युक्तिविरोधादित्येवं परतया भाष्यं योजयति– **तानिति**॥ अत्रैवं योजना। तान्वरिष्ठः प्राण उवाचेत्युत्तरत्र प्रधानवायुः प्राणशब्देन परामृश्यते। यद्यसावत्र वायुरग्निरिति वाक्ये प्रकृतो न स्यात्कोऽयं तर्हि प्राणशब्देन परामृश्यते। तेषां मध्ये प्राणो वरिष्ठः स उवाचेत्युक्त्ययोगात्। अतः प्रकृतत्वं तावत्सिद्धम्। यदि चासौ वायुशब्देनैव वचनवृत्त्या प्रकृतः स्यात्तर्हि कथं प्राणशब्देन परामृश्येत। शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शस्यायुक्तत्वादिति। एवं यद्यसौ वायुशब्देन प्रकृतोऽत्र न स्यादिति नञ्घटितपाठमाश्रित्य नञन्वयेन तदनन्वयेन च द्वेधा व्याख्यातम्। यद्यसौ वायुशब्देन प्रकृतो न स्यादित्येव क्वचित् कोशेषु पाठः । तदा वायुशब्देन मुख्यवायुग्रहणे बाधकप्रदर्शनमात्रपरत्वेन भाष्यं टीकायां व्याख्यातं बोध्यम्। केचित्तु प्रकृतोऽत्र न स्यादिति पाठः साम्प्रदायिकः। अत एव क्वचिन्नञःशोधो दृश्यते इत्याहुः। ननु 'ब्रह्मविदाप्नोति परम्' इति

ब्रह्मशब्देन प्रकृतस्य 'आत्मन आकाशः सम्भूतः' इत्यात्मशब्देन परामर्शो 'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च' इत्यनुव्याख्यान एव व्याख्यातः। कथं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्श इत्यत आह– **नहीति**॥ एवं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण ग्रहणं बाधकमन्तरेण क्वचिन्नोपलब्धम्। तत्र तु ब्रह्मणोऽन्यस्य जगत्कर्तृत्वायोगेन ब्रह्मशब्दोदितस्यैवात्मशब्देन परामर्श इति भावः। ननु तस्यापि वक्तव्यत्वयुक्तिबाधेनाप्रसक्तपरामर्शायोगेन च तत्र प्रधानवायोरपि ग्रहणं कार्यमित्यत आह– **लक्षणयेति**॥ उभयोः प्रधानाप्रधान-वाय्वोः। लक्षणापेक्षया वचनवृत्तेर्ज्यायस्त्वादिति भावः॥ **उक्तादेवेति**॥ शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शायोगादित्युक्तादेवेत्यर्थः। चतुर्थप्रश्ने 'प्राणश्च विधारयितव्यं च' इति वक्ष्यमाणस्य प्राणस्य 'पिता त्वं मातरिश्वनः' इति वक्ष्यमाणप्रकारेण **पितापुत्रभावसम्बन्धेन** वायुशब्देन लक्षणायां तु वायुपितृत्वेन प्राणतया प्रकृतस्यैव प्राणपदेन परामर्शो युक्त इति भावः। ननु मुख्यस्य वायुशब्देन वचनवृत्त्या ग्रहणे प्राणशब्दपरामर्शानुपपत्तिः। लक्षणया ग्रहणे मुख्यवृत्तित्याग इति दोषसाम्यम्। वस्तुतत्त्वविचारे मुख्यवृत्त्यनुसरणमेव गुण इत्यत आह– **नहीति**॥ एवमपि शब्दान्तरेण परामर्शं स हीत्यत्रापि मुख्यवायुमात्रस्य वायुशब्देन ग्रहणेऽपि वक्तव्यं वायुमात्रादिकं सर्वं तत्त्वजातमुक्तं न स्यात्। उक्तं न भवति किल। न सर्वस्यापि वचनवृत्त्या लब्धत्वे मुख्यमात्रस्योर्वरितत्वेन तन्मात्रलाभार्थं मुख्यवृत्तिसम्भवे लक्षणा जघन्येति सकृदुच्चरितशब्दस्य मुख्यामुखार्थद्वयं प्रतिपद्येम। अतस्तदर्थं वाय्वादिशब्दानां वायुमात्रादिलक्षकत्वं स्वीकार्यम्। तथाच मुख्यवृत्तेस्त्यागे विवक्षिते मुख्य-प्राणोऽपि लक्ष्यतामिति भावः। नच वायुशब्देन मुख्यप्राणस्य लक्षणायां सकृदुच्चरितशब्दस्य वृत्तिद्वयविरोधः। वायुमात्रादिलक्षणापक्षेऽपि तौल्यात्। नच तत्र काकेभ्यो दधि रक्षतामित्यत्रैवाजहल्लक्षणाश्रयणं तदावश्यकवक्तव्यत्वो-पाधिना मुख्यस्य लक्ष्यत्वं स्वीकृत्य जहल्लक्षणैव ज्यायसीति। नचैवं लक्षणापेक्षेऽप्यर्थद्वयस्यावकाशः। वायुशब्देनावश्यवक्तव्यत्वोपाधिना एकाव-च्छेदकेन ग्रहणात्। दध्युपघातकत्वलक्षणैकावच्छेदकेन

काकप्रभृतीनामेकार्थवदिति सङ्क्षेपः॥

ते प्राकाश्या इत्यत्र तच्छब्देन धारकमात्रपरामर्शो न सम्भवतीत्युभयोरपि परामर्शासम्भवे धारकाणां तच्छब्देन प्रकाशकानां पदान्तरेण ग्रहणायोगाच्च त इत्यस्य प्राकाश्यविशेषणत्वे धारकानुक्तिर्दोषः। प्राकाश्यशब्दस्य प्रकाशविषयप्रजावाचि-त्वेनासङ्गतिश्चेत्यतो व्याचष्टे– **त इति**॥ **स्पर्धयैवेति**॥ 'ते जानमाना अपि निर्णयाय' इति भगवत्पादोक्तेः स्पर्धाभावेऽपि स्पर्धयैवेति भावः॥ २-२ ॥

**मङ्गालीय**—ननु कः पुनरेषां वरिष्ठ इति वरिष्ठत्वमनूद्यते नचासिद्धस्यानुवादो भवतीत्यतः प्रागुक्तरीत्या मुख्यप्राणस्य वरिष्ठत्वं सिद्धवत्कृत्य प्रकारप्रश्न एव नतु वरिष्ठस्वरूपप्रश्न इति प्रश्नाभिप्रायमाह– **पूर्वोक्तरीत्येति** ॥ पूर्वखण्डे मुख्य-प्राणस्याशेषप्रजोत्पत्तौ मुख्यद्वारत्वमुक्तम्। अतः स्थित्यादावपि स एव मुख्यहेतुरिति वाच्यम्। यतो महाराजत्वमिव युवराजत्वमपि अखण्डं लोके दृश्यते। तत्र किम्प्रमाणकं किम्प्रकारकं वा वरिष्ठत्वमिति प्रश्नार्थः। यथाश्रुते प्रश्नस्य सिद्धार्थत्वप्रसङ्गात्परिहाराननुगुण्याच्चेति भावः॥ **एष आकाशा-भिमानीति** ॥ आकाश इत्यस्य व्याख्या आकाशाभिमानीति। यस्त्वया धारकः पृष्ट एष आकाशाभिमानी देवो हवा इत्यन्वयः॥ **एवं वायुरग्निरित्यादीति** ॥ यस्त्वया धारकः पृष्टः स वायुरग्निरित्यादि। तथा प्रकाशहेतुत्वेन यः पृष्टः स मनश्चक्षुरादीति योजनीयमित्यर्थः। ननु चतुर्थखण्डे धारकाणां प्रकाशकानाञ्च बहूनां वक्ष्यमाणत्वान्नवानामेवात्र कथं कथनमित्यत आह– **अत्रोपलक्षण-त्वेनेति** ॥ आकाशादिभूतवाचकशब्दपञ्चकेन पञ्चतन्मात्राः वाक्शब्देन कर्मेन्द्रियाणि तद्विषयाश्च चक्षुःश्रोत्रमनःशब्दैर्ज्ञानेन्द्रियाणि तद्विषयाः तत्र देवा-काशादिसर्वधारको मुख्यप्राणश्चेत्येते सर्वेऽपि तत्त्वदेवा इत्यर्थः। धारकाणां प्रकाशकानाञ्च सङ्कलय्योक्तेस्तत्र विवेकमाह– **तेषु चक्षुरादय इति** ॥ ''चक्षुश्च द्रष्टव्यञ्च'' इति चक्षुष एवादावुत्तरत्रोक्तेश्चक्षुरादय इत्युक्तम्। अन्ये पृथिव्यादयः। लक्षणाहेतुं मुख्यार्थानुपपत्तिं दर्शयति– **उक्तमात्रग्रहण इति** ॥ **कः पुनरेषां**

**वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यादिति** ॥ एषां धारकाणां प्रकाशकानाञ्च तत्त्वाभिमानिनां सर्वेषां मध्ये को वा वरिष्ठ इति प्रश्नस्य तान्वरिष्ठः प्राण उवाचेति परिहारोऽननुगुणः स्यात्। उक्तानामाकाशादीनां नवानां देवानां मध्ये मुख्यप्राणस्यानुक्तत्वेन तदपेक्षया वरिष्ठत्वकथनस्यानन्वितत्वात्। तस्मात्प्रश्नप्रतिवचनानुगुण्यायोक्तेषु प्राणोऽवश्यं लक्षणीयः। तथाच किमर्धजरतीयन्यायेन प्राणावसितसर्वदेवोत्तमत्वलाभाय लक्षणया वक्ष्यमाणसर्वतत्त्वदेवानां ग्रहणे तन्मध्ये मुख्यप्राणस्य वरिष्ठत्वेन कः पुनरेषां वरिष्ठ इति निर्धारणषष्ठ्याः सम्भवेन चतुर्थप्रश्ने वक्ष्यमाणसर्वदेवानां ग्रहणं युक्तमित्यर्थः॥ **तत्रेति** ॥ उपलक्षणया सर्वदेवानां ग्रहणे सतीत्यर्थः। ननु यस्य वक्तव्यत्वं स एव गृह्यतामित्यत आह– **उभयोरपीति** ॥ वचनवृत्त्योभयोर्ग्रहणे वक्ष्यमाणबाधकप्राप्त्या एकस्यैव वचनवृत्त्या ग्रहणे कर्तव्ये को वा वचनवृत्त्या ग्राह्य इति चिन्तायामित्यर्थः। वायुरग्निरित्यत्र भूतवायुरुच्यत इति मूले हेतोरनुक्त्या न्यूनतेत्यतो मूलाभिप्रेतं हेतुमाह– **भूतप्रकरणत्वादिति भाव इति** ॥ यथाह जैमिनिः 'विशये प्रायदर्शनात्' इति। वत्समालभेतेत्यत्रालम्भनं हिंसोत स्पर्श इति विशये गोदोहनप्रकरणात्स्पर्श एवेति। ननु प्राणशब्देन प्रधानवायुरुच्यत इत्युत्तरभाष्यं व्यर्थम्। तान्वरिष्ठः प्राण उवाचेत्यत्र वरिष्ठत्वविशेषणादेव प्राणशब्दस्य प्रधानवायुपरत्वनिश्चयेन पूर्वत्र वायुशब्द इव सन्देहाभावेन प्राणशब्दस्याव्याख्येयत्वादित्याशङ्क्य नेदं भाष्यं प्राणशब्दस्य व्याख्यानार्थं प्रवृत्तं येनोक्तदोषः स्यात्। किन्तु पूर्वत्र वायुशब्देन भूतवायुरुच्यते भूतप्रकरणत्वादित्युक्तम्। तत्र प्रकरणमुल्लङ्घ्य वायुशब्देन प्रधानवायोरेव ग्रहणे बाधकं दर्शयितुमिति भावेन तद्भाष्यमवतारयति– **वायाविन्द्र इत्यादाविवेति** ॥ 'भूतेषु तच्छ्रुतेः' इत्यधिकरणे। आकाशादिभूतेषु देवानां लयकथनावसरे 'वायाविन्द्रः सोम आदित्यो बृहस्पतिः' इत्यादिवाक्ये इन्द्रादिलयाधिकरणत्वेन लिङ्गेन भूतप्रकरणं बाधित्वा वायुशब्देन भूतवायुं परित्यज्य यथा मुख्यवायुर्गृह्यते। तद्वदत्रापि भूतप्रकरणं बाधित्वा वायुशब्देन प्रधानवायुः किं न गृह्यत इत्यर्थः। ननु भूताभूतसाधारणो यः शब्दो भूतप्रकरणे श्रूयते स भूतपर

एव। यः साधारणः शब्दो यत्प्रकरणे पठ्यते स तत्पर इति व्याप्तेः। वायुशब्दस्य प्रधानवायुपरत्वेन व्यभिचारचोदनं न युक्तम्। भूतेषु तच्छ्रुतेरित्येतद्विवरणात्मके 'नैकस्मिन् दर्शयतो हि' इत्यत्र सूत्रे उदाहृतस्यास्य वाक्यस्य भूतपरत्वेन प्रधानवायोरपि भूतत्वस्यैवाङ्गीकर्तव्यत्वात्। अत एव 'प्रधानवायुस्त्विह भूतनामा' इत्याद्यनुव्याख्याने प्रधानवायोर्भूतत्वमुक्तम्। तस्मादत्रापि वायुशब्दस्य भूतपरत्वात्कथं व्यभिचारः। पूर्वं प्रधानवायुव्यावृत्त्यर्थं भूतप्रकरणत्वादिति हेतूक्तिश्चायुक्तेति चेन्न। भूतप्रकरणे श्रुतो वायुशब्दः 'खं वायुर्ज्योतिरापः' 'आकाशाद्वायुः' इत्यादौ नियमेनावान्तराभिमानिपर एव दृश्यते। अतोऽत्रापि स एवोच्यते न प्रधानवायुरित्याशयेनोक्तावियमाशङ्कोदेतीत्यङ्गीकारात्। नन्वत्र प्रधानवायुपरत्वज्ञापकाभावे सतीति विशेषणमभिप्रेतम्। वायाविन्द्र इत्यत्र इन्द्रलयाधिकरणत्वं ज्ञापकमस्तीति विशेषणाभावान्न व्यभिचार इत्यत आह– **तस्यापि वक्तव्यत्वादिति** ॥ तर्ह्यवश्यवक्तव्यत्वं मुख्यपरत्वज्ञापकमत्राप्यस्तीति विशेषणासिद्धिरिति भावः। केचित्तु तत्र लिङ्गवदत्र प्रकरणबाधकं किमित्यत आह– **तस्यापीति** ॥ तस्याप्यवश्यवक्तव्यत्वान्यथानुपपत्त्या प्रकरणबाधो युक्त इति व्याचक्षते। प्राणशब्देन प्रधानवायुरित्यत्रोच्यत इत्यनुवृत्तौ सत्यां नैतच्छङ्कापरिहारकमेतद्वाक्यं स्यादतोऽध्याहृत्य योजयति– **तान्वरिष्ठ इति** ॥ ततश्चैवं भाष्याशयः। मुख्यप्राणस्य 'आकाशो ह वा एष देवः' इति धारकप्रकाशकदेवप्रतिपादकवाक्येऽनुक्तौ धारकत्वप्रकाशकत्वाप्रसक्तेः 'तान्वरिष्ठः प्राण उवाच' इत्यत्र धारकप्रकाशकैर्धारणप्रकाशनविषये विवादकरणासम्भवेन 'कः पुनरेषां वरिष्ठः' इति निर्धारणषष्ठीबलेन च पूर्वोक्त एव प्राणोऽत्र वरिष्ठत्वावधारणाय परामृश्यत इति वाच्यम्। यदि स वायुशब्देनोक्तः स्यान्न तर्हि प्राणशब्देन परामृश्येत। शब्दान्तरेण प्रस्तुतस्य शब्दान्तरेण परामर्शस्य बाधकं विनाऽदर्शनात्। तथाच प्राणशब्देन परामर्शानुपपत्त्या प्रतिहतशक्तिकमवश्यवक्तव्यत्वं वायुशब्दस्य प्रधानवायुपरत्वमवगमयितुं नालमिति। केचित्तु 'वरिष्ठः प्राण उवाच' इति सिद्धवन्निर्देशेनैव परामर्श इति ज्ञायत इत्याहुः॥ **शङ्कते यद्यत्रेति** ॥ वायुशब्देनाप्रकृतत्वे

तद्वाचकपदान्तराश्रवणात्प्रकृतत्वमेव न स्यात्। तथाचाप्रकृतपरामर्शादर्शनात्प्राणपदेन परामर्श एव न स्यादिति प्रतितर्कविरुद्धशक्तिस्तर्को न परबाधनायालमिति भावः। ननु क्वचिद्बुद्धिप्रकृतस्यापि परामर्शो दृश्यते। तत्कथमेतदित्यत आह– **नहीति** ॥ उत्तरमाह– **लक्षणयापीति** ॥ नहि शक्त्यैव प्रकृततया भवितव्यमिति नियमः। 'तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति' इत्यादौ लक्षणया गृहीतानामपि चक्षुरादीनां परामर्शदर्शनादिति भावः। यद्यत्रासौ वायुशब्देन प्रकृतः स्यादिति नञ्विना कृतपाठः क्वचिद्दृश्यते। तस्यैवं योजना। न ह्यप्रकृतस्य परामर्शो युज्यत इति पूर्वं वायुशब्देन प्रकृतः प्रधानवायुः प्राणशब्देन परामृश्यत इति वक्तव्यम्। नच तथा युज्यते। कुत इत्यत उक्तम्– **यदीति** ॥ यद्यसौ प्राणः अत्र पूर्ववाक्ये वायुशब्देन प्रकृतः स्यात्। कथं तर्हि प्राणशब्देन परामृश्येत। शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शस्यादर्शनेनायोगात्। ननु 'आत्मन आकाशः सम्भूतः' इत्यत्र 'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च' इत्यनुव्याख्यानोक्तरीत्या 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मशब्देन प्रकृतस्यात्मशब्देन परामर्शस्य 'स वा एषः' इत्यन्यप्रारम्भादिति भाष्योक्तरीत्या आत्मशब्दोदितस्य पुरुषशब्देन 'स वा एष पुरुषोऽन्नरसमयः' इति परामर्शस्य च दर्शनात्। कथं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण परामर्शो नोपलभ्यत इत्यत उक्तम्॥ **नह्येवं बाधकमन्तरेणेति** ॥ एवं शब्दान्तरेण प्रकृतस्य शब्दान्तरेण ग्रहणम्। अग्रहणे बाधकमन्तरेण कुत्रचिदुपलब्धम्। येनात्र वायुशब्देन प्रकृतस्य प्राणशब्देन ग्रहणं युज्येत। अग्रहणेऽपि बाधकाभावात्। आत्मशब्देनापरामर्शे उत्तरवाक्यस्य पूर्ववाक्यप्रपञ्चकत्वानुपपत्तिरूपबाधकसत्त्वात् ब्रह्मशब्दोदितस्यापि आत्मशब्देन परामर्शोऽभ्युपगतः। पुरुषादिशब्दे तु रसशब्देन विशेषणादिकं बाधकमित्यर्थः। नन्वप्रसक्तपरामर्शायोगेन प्रधानवायोरपि प्रागवश्यं वक्तव्यत्वमत्रापि बाधकमित्यत आह– **लक्षणयापीति** ॥ तस्य मुख्यवायोः॥ **ग्रहणसम्भवादिति**॥ नन्वेवं वायाविन्द्र इत्यादाविवात्र बाधकाभावाद्भूतप्रकरणत्वेन लिङ्गेन भूतवायुरुच्यतां नाम। तथापि मुख्यवायावपि मुख्यवृत्तिसद्भावात्तां परित्यज्य

तस्य प्रकृतत्वलाभाय जघन्यवृत्त्यङ्गीकारो जघन्यः। सुरसरिति निवसतः पुरुषस्य जललाभार्थं कूपखननन्यायसाम्यादित्याशङ्क्य परिहरति– **नच वाच्यमिति** ॥ **उक्तादेवेति** ॥ वायुशब्देन प्रकृतत्वे प्राणशब्देन न परामृश्येतेत्युक्तादेव हेतोरित्यर्थः। बाधके सति मुख्यं परित्यज्य जघन्यवृत्त्यङ्गीकारो युक्त एव। 'तस्यान्ते सुषिरं सूक्ष्मम्' इत्यत्र सर्वपदवाच्येऽपि ब्रह्मणि सुषिरपदलक्षणाया दृष्टत्वादिति भावः। ननु बाधके सति शब्दान्तरेण प्रस्तुतस्य शब्दान्तरेण परामर्शोऽस्ति। अत्रापि परामर्शान्यथानुपपत्त्या पूर्वप्रकृतत्वे वाच्ये लक्षणया च तदङ्गीकारे वृत्तिद्वयमङ्गीकरणीयमिति गौरवमेव बाधकमस्ति। तस्माद्भूते क्लृप्तया शक्त्यैव मुख्योऽप्युच्यत इत्यङ्गीकरणमेव वरमित्याशङ्क्य विपक्षे ततोऽपि गौरवमाह– **न ह्येवमिति** ॥ वाचकत्वाङ्गीकारेऽपीत्यर्थः। यथा नानार्थेषु गवादिशब्देषु घटत्वपृथिवीत्वादिप्रवृत्तिनिमित्तनानात्वेन शक्तिरपि नाना। तथाभूते वायौ मुख्ये च शक्तिर्भिन्नैवेत्यङ्गीकर्तव्यम्। धारणप्रकाशनहेतुतया क्लृप्ताशेषतत्त्वदेवोपलक्षणं च कार्यम्। एवञ्च वृत्तित्रयमङ्गीकार्यमिति लक्षणा-मनङ्गीकुर्वन् चोरभयाद्धोरमृगाकीर्णं गहनं वनं प्रविष्ट इवापद्यते। तस्मा-द्वक्ष्यमाणतत्तद्देवतात्वावच्छेदेन लक्षणायां तत्र प्राणस्यापि प्रविष्टत्वेन सोऽपि तयैव गृह्यत इति न तदर्थं पुनः प्रयत्नान्तरमिति लक्षणापक्ष एव लाघवमिति भावः॥ **येनेति** ॥ सकृदुच्चरितशब्दस्य सकृदेवार्थप्रत्यायकत्वनियमात्। शब्दश्रवणानन्तरं तत्तदर्थशक्तिस्मरणस्य क्रमिकत्वेनैकदा अनेकार्थस्मरणा-नुपपत्तेरिति भावः॥ **एतेषाञ्चेति** ॥ वाय्वादीनां देवानां मध्य इत्यर्थः॥ **त एते धारका इति** ॥ अयं तच्छब्दः पूर्वोक्तधारकपरामर्शकः। नतु प्राकाश्य-विशेषणमिति भावः। अत एव समुच्चायकः चशब्दोऽप्यध्याहृतः। प्राकाश्य-शब्दस्य प्रकाशका इति कथं व्याख्या इत्याशङ्क्य ण्यत्प्रत्ययोऽयं प्रकाश-शब्दान्मत्वर्थे इति भावेनाह– **प्राकाश्याः प्रकाशवन्त इति** ॥ प्रकाशजनका इत्यर्थः। 'संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः' इत्युक्तेर्जन्यजनकभाव-लक्षणसंसर्गोऽत्र विवक्षित इति भावः। यद्वा त इति तच्छब्दः पूर्वोक्तानां धारकाणां प्रकाशकाञ्चोभयेषां परामर्शक इत्यभिप्रेत्य त एते धारकाः

प्रकाशकानाश्च देवा इत्युक्तम्। तर्हि प्राकाश्या इत्यधिकमित्याशङ्क्य तच्छब्दोक्तानां तेषां विशेषणमित्यभिप्रेत्य प्राकाश्याः प्रकाशवन्त इति व्याख्यातम्। ननु ते धारकाः प्रकाशकाश्च देवा वदन्ति अवदन्नित्येव वक्तव्ये प्राकाश्याः प्रकाशवन्तः अभि अभित इत्यनयोः क्वोपयोगः। अर्थविशेषा-लाभादित्यतस्तयोस्तात्पर्यमाह– **उच्चैरिति यावदित्यादि** ॥ लडर्थस्य बाधादवदन्नित्युक्तम्। अभिवदन्तीत्यत्राभिशब्दस्याव्ययत्वेनाने-कार्थत्वमभि-प्रेत्याभि उच्चैरिति यावदित्युक्तमिति केचित्। अत्राभि उच्चैरिति क्वचित्पाठः॥ **बाणं शरीरमिति** ॥ 'शान्तिं निर्वाणपरमाम्' इत्यादौ निर्वाणशब्दस्य प्राकृतशरीरराहित्येन निमित्तेन मोक्षे प्रयोगात् वबयोरभेदेन बाणशब्दोऽपि शरीरवाचीत्यर्थः। वयमेतद्बाणमिति सामान्येनोक्तस्य बहुवचनस्य विविच्येतरप्रतिषेधपूर्वकं तात्पर्यमाह– **अहमेव स्वातन्त्र्येणेति** ॥ २-२ ॥

**अनन्तभट्टीय–**॥ **पूर्वोक्तरीत्येति**॥ पूर्वखण्डे प्राणस्याशेषप्रजोत्पत्तौ मुख्यद्वारत्वमुक्तमतः स्थित्यादावपि स एव मुख्यहेतुरिति वाच्यम्। यतो महाराजत्वमिव युवाधीशत्वमप्यखण्डं लोके दृश्यते । तत्र किं प्रमाणं वरिष्ठत्व-मिति प्रश्नाशयः इत्यर्थः। यथाश्रुते प्रश्नस्य सिद्धार्थताप्रसङ्गात्तत्परिहारा-ननुगुण्याच्चेति भावः॥ **अत्रोपलक्षणत्वेनेति**॥ आकाशादिभूतवाचकशब्द-पञ्चकेन पञ्चतन्मात्राः। वाक्शब्देन कर्मेन्द्रियाणि तद्विषयाश्च, चक्षुःश्रोत्र-शब्दाभ्यां ज्ञानेन्द्रियाणि तद्विषयाश्च, अन्तःकरणपञ्चकवाचिमनःशब्देन तद्विषया इत्येवं सर्वे तत्त्वदेवा, आकाशादिसर्वधारको मुख्यप्राणश्च चतुर्थखण्डे वक्ष्यमाणा उपलक्ष्यन्त इत्यर्थः। ननूक्तमात्रग्रहणेनैव वाक्यार्थोपपत्तेः किं लक्षणया सर्वदेवताग्रहणेनेत्यतो लक्षणा तावदावश्यकीत्याह– **उक्तमात्रेति**॥ उक्तमात्रे ग्रहणे सति तेषु रुद्राण्याः पठितत्वेनैषां मध्ये को वरिष्ठ इति प्रश्नस्येदमुत्तरं न स्यात्। तस्मात्प्रश्नप्रतिवचनानुगुण्यायोक्तेषु प्राणोऽवश्यं लक्षणीयः। तथाच किमर्धजरतीयेन प्रमाणावसितसर्वदेवोत्तमत्वलाभाय सर्वोप-लक्षणमेव हि न्याय्यमित्यर्थः। वायुशब्दस्य भूतवायुवाचकत्वस्य स्फुटत्वा-त्कस्मादयं व्याख्यायत इत्यतस्तद्बीजमाह– **तत्र वायुशब्दस्येति**॥ कुत इत्यतो

वायुरग्निरिति मूलसूचितं हेतुमाह– **भूतेति**॥ ननु प्रथमखण्डमारभ्य सर्वत्र प्राणशब्दस्यासाधारणलिङ्गैः प्रधानवायुपरत्वावगमेन वरिष्ठताविशेषणेन च सन्देहानवकाशात्तद्व्याख्यानमयुक्तमित्यतो नेदं वाक्यं तद्व्याख्यानार्थं प्रवृत्तं किन्तु वायुशब्दव्याख्यानसमर्थनायैवेत्यवतारयति– **वायाविन्द्र इति**॥ ननु भूताभूतसाधारणो यःशब्दो भूतप्रकरणे श्रूयते स भूतपर एव । यःसाधारणः शब्दो यत्प्रकरणे पठ्यते स तत्पर एवेति व्याप्तेः। 'पृथिव्यामृभवो विलीयन्ते' इत्यादिना भूतप्रकरणत्वेनावसिते 'वायाविन्द्रः सोम आदित्यो बृहस्पतिः' इति वाक्ये श्रूयमाणवायुशब्दस्य प्रधानवायुपरत्वाद्व्यभिचारो ह्यत्र चोद्यते। नचेयं चोदना युक्ता। 'भूतेषु तच्छ्रुतेः' इति भूतेषु सर्वेषां लयं प्रस्तुत्य तद्विवरणात्मके 'नैकस्मिन्दर्शयतो हि' इति सूत्रे सूत्राहृतमिदं वाक्यम्। तस्मात्प्रधानवायोरपि भूतत्वमेवाङ्गीकार्यम्। अत एवोक्तमनुव्याख्याने। 'प्रधानवायुस्त्विह भूतनामा भूतेष्विति प्रोक्तगतोऽपि युक्त्या' इत्यादि। तस्मादत्रापि वायुशब्दस्य भूतपरत्वात्कथं व्यभिचारः। प्रधानवायुव्यावृत्त्यर्थं भूतप्रकरणत्वादिति हेतूक्तिश्चायुक्तेति चेदुच्यते। भूतप्रकरणे श्रुतो वायुशब्दो नियमेनावान्तराभिमानिपर एव दृश्यते। 'खं वायुर्ज्योतिरापः' 'आकाशाद्वायुः' इत्यादौ। अतोऽत्रापि स एवोच्यते, न प्रधान इत्याशयेनोक्तावियमाशङ्कोदेतीत्यतोऽज्ञानविजृम्भितमेवैतद्दूषणाभिधानमिति॥ नन्वत्र प्रधानवायुपरत्वज्ञापकाभावे सतीति विशेषणमभिप्रेतम्। वायाविन्द्र इत्यत्र इन्द्रियाधिकरणत्वज्ञापकमस्तीति विशेषणाभावान्न व्यभिचार इत्यत आह– **तस्यापीति**॥ तर्ह्यवश्यवक्तव्यत्वं मुख्यवायुपरताज्ञापकमत्राप्यस्तीति विशेषणसिद्धिरिति भावः। प्राणशब्देन प्रधानवायुरित्यत्रोच्यत इत्यनुवृत्तौ सत्यां नैतच्छङ्कापरिहारक्षममेतद्वाक्यं स्यादतोऽध्याहृत्य योजयति– **तान्वरिष्ठ इति**॥ ततश्चैवं भाष्याशयः। कः पुनरेषां वरिष्ठ इति प्रश्नात्पूर्वोक्त एव प्राणेऽत्र वरिष्ठत्वावधारणाय परामृश्यत इति वाच्यम्। यदि च वायुपदेनोक्तं स्यान्न तर्हि प्राणपदेन परामृश्येत। शब्दान्तरेण प्रस्तुतस्य शब्दान्तरेण परामर्शस्य बाधकं विनाऽदर्शनात्। ततश्च प्राणशब्देन परामर्शानुपपत्त्याप्रतिहतशक्तिकमवश्यवक्तव्यत्वं वायुशब्दस्य प्रधानपरत्वमवगमयितुं

नालमिति शङ्कते– **यद्यत्रेति**॥ वायुशब्दस्य प्रकृतत्वे तद्वाचकपदान्तराश्रवणात्प्रकृतत्वमेव तस्य न स्यात्। तथाचाप्रकृतपरामर्शादर्शनात् प्राणपदेन प्रकृतत्वमेव न स्यादिति तर्कादवरुद्धशक्तिस्तर्को न परबाधनायालमिति भावः। ननु क्वचिद्बुद्धिप्रकृतस्यापि परामर्शो दृश्यते तत्कथमित्यत आह– **नहीति**॥ उत्तरमाह– **लक्षणयेति**॥ नहि शक्त्यैव प्रकृततया भाव्यमिति नियमः। 'तस्मा एतत्प्रोवाच अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति' इत्यादौ लक्षणया गृहीतानामपि चक्षुरादीनां परामर्शदर्शनादिति भावः। यद्यसौ वायुशब्देन प्रकृतः स्यादिति नञ् विनाऽपि क्वचित्पाठः दृश्यते। तदेदं वाक्यमुक्तरीत्या भाष्यतात्पर्यकथनपरमवसेयम्। ननु 'ब्रह्मविदाप्नोति परम्' इति ब्रह्मशब्देन प्रस्तुतस्य 'तस्माद्वा एतस्मादात्मन आकाशः' इति शब्दान्तरेण परामर्शो दृश्यते। यथोक्तम्–'ब्रह्मशब्दोदिते तस्मिन्नात्मशब्दं प्रयुज्य च' इति। तत्कथमुच्यते वायुशब्देन प्रकृतत्वे प्राणशब्देन परामर्शो न स्यादितीत्याक्षेपपरिहाराय नहीति वाक्यं प्रवृत्तम्। उत्तरवाक्यस्य पूर्ववाक्यप्रपञ्चकत्वेन तत्र गत्यन्तरं नास्ति। न ह्यत्र तथाविधं बाधकं किञ्चिदिति तात्पर्यम्। तर्हि परामर्श एव न स्यादिति बाधकमिति बहिरेवाक्षेपे तत्परिहाराय लक्षणयापीति वाक्यमिति ज्ञेयम्। नन्वेवं वायाविन्द्र इत्यादाविवात्र बाधकाभावाद्भूतप्रकरणत्वेन लिङ्गेन भूतवायुरुच्यतां नाम। तथापि मुख्यवायावपि मुख्यवृत्तिसद्भावात्तां परित्यज्य तस्य प्रकृतबलायातजघन्यवृत्त्यङ्गीकारो जघन्यः। सुरसरिति निवसतः पुरुषस्य जललाभार्थं कूपखननव्यापारसाम्यादित्याशङ्क्य परिहरति– **नच वाच्यमिति**॥ वायुशब्देन प्रकृतत्वे प्राणशब्देन न परामृश्यते, उक्तादेव हेतोरित्यर्थः। बाधके सति मुख्यं परित्यज्यापि जघन्याङ्गीकारो युक्त एव। 'तस्यान्ते सुषिरं सूक्ष्मं' इत्यत्र सर्वपदवाच्येऽपि ब्रह्मणि सुषिरपदलक्षणाया दृष्टत्वादिति भावः। बाधके सति शब्दान्तरेण प्रस्तुतस्य परामर्शोऽप्यस्ति। अत्रापि परामर्शान्यथानुपपत्त्या पूर्वप्रकृतत्वे वाच्ये लक्षणया च तदङ्गीकारे वृत्तिद्वयमङ्गीकरणीयमिति गौरवबाधकमस्ति। तस्माद्भूते क्लृप्तया शक्त्यैव मुख्योऽप्युच्यत इत्यङ्गीकरणमेव वरमित्याशङ्क्य विपक्षे ततोऽपि गौरवमित्याह– **नह्येवमिति**॥

वाचकत्वाङ्गीकारेऽपीत्यर्थः। यथा नानार्थेषु गवादिशब्देषु धेनुत्वपृथिवीत्वादिप्रवृत्तिनिमित्तनानात्वेन शक्तिरपि नाना, तथा भूतवायौ मुख्ये च शक्तिर्भिन्नेत्यङ्गीकार्यम्। धारणप्रकाशहेतुतया क्लृप्ताशेषदेवोपलक्षणं च कार्यम्। एवं प्रवृत्तित्रयमङ्गीकार्यमिति लक्षणामनङ्गीकुर्वन् चोरभयाद्घोरमृगाकीर्णं गहनं प्रविष्ट इवापद्यते। तस्माद्वक्ष्यमाणतत्त्वदेवतात्वावच्छेदेन लक्षणायां तत्र प्रमाणस्यापि पृष्टत्वेन सोऽपि तयैव गृह्यत इति न तदर्थं प्रयत्नान्तरमिति लक्षणापक्ष एव लाघवमिति भावः। प्राकाश्याः प्रकाशहेतव इति व्याख्याने विधारयाम इति वचनमनुपपन्नम्। अतः सर्वसङ्ग्रहाय प्रकाशवन्त इति व्याख्यातम्॥ २-२ ॥

**खण्डार्थ**–पूर्वोक्तरीत्या प्राणेन भाव्यम्। तत्कथमित्येवं पृष्टवते तस्मै स होवाच । एष आकाशाभिमानी देवः ह वै यस्त्वया धारकः पृष्टः एवं वायुः भूतवायुर्देवतेत्यादि । अत्रोपलक्षणत्वेन पृथिवी च पृथिवीमात्रेत्यादिवक्ष्यमाणाः सर्वे मुख्यप्राणसहितास्तत्त्वदेवा ग्प्रह्याः । तेषु चक्षुरादयः प्रकाशहेतवः, अन्ये स्थितिहेतव इति ज्ञातव्यम् । उक्तमात्रग्रहणे कः पुनरेषां वरिष्ठ इति प्रश्नाननुगुणः परिहारः स्यात् । एतेषां प्राणस्य वरिष्ठत्वावधारणायाऽख्यायिकोच्यते– **ते प्राकाश्या इत्यादि** । त एते धारकाः प्रकाशकाश्च देवाः प्राकाश्याः प्रकाशवन्तः उच्चैरिति यावत्, अभिवदन्ति कदाचिदन्योन्यं स्पर्धयैवाभ्यवदन् । किमिति? वयमेतद् बाणं शरीरमवष्टभ्याऽश्रित्य विधारयामः प्रकाशयामश्चेति । अहमेव स्वातन्त्र्येण देहधारको न त्वमिति धारकः, अहमेव स्वातन्त्र्येण विषयप्रकाशको न त्वमिति प्रकाशक इति यावत् ॥ २-२ ॥

**नर**–पूर्वोक्तरीत्या प्राणेन भवितव्यम्। अन्येषामविद्यमानं वरिष्ठत्वं तस्य कथं इति पृष्टवते तस्मै स होवाच। यस्त्वया धारकः पृष्टः स एष आकाशो ह वै आकाशाभिमानिदेवः प्रसिद्धः एवं वायुरित्याद्युपलक्षणत्वेन वक्ष्यमाणः। अत्र सर्वे तत्त्वदेवा ग्राह्याः। चक्षुरादयः प्रकाशहेतवोऽन्ये स्थितिहेतव इति ज्ञातव्यम्। एतेषाञ्च प्राणस्य वरिष्ठतावधारणायाख्यायिकोच्यते– **प्राकाश्या इत्यादि** ॥ त एते धारकाः प्रकाशकाश्च देवाः प्राकाश्याः प्रकाशवन्तः अभि उच्चैरिति

यावत्। अभिवदन्ति। कदाचिदन्योन्यं स्पर्धया अभ्यवदन्, किमिति? वयमेतद्बाणं शरीरमवष्टभ्याश्रित्य धारयामः प्रकाशयामश्चेति। अहमेव स्वातन्त्र्येण देहधारकः न त्वमिति। अहमेव स्वातन्त्र्येण प्रकाशको न त्वमिति॥ २-२॥

**उदय**–सानन्दमुत्तरमाह गुरुरित्याह वेदपुरुषः– **तस्मै इत्यादि** ॥ एवं पृष्टवते तस्मै भार्गवाय स ह स्फुटं गुरुरुवाच, किमाह? एष आकाशो देवः आकाशाभिमानी देवः, वायुः भूतवायुः, भूतप्रकरणत्वात्। अग्निः आपः पृथिवी एवं पञ्चभूताभिमानिनो देवाः । उपलक्षणम् । सर्वेऽपि तात्त्विकाः। वागभिमानी, मनोभिमानी, चक्षुरभिमानी, श्रोत्राभिमानी च। एते देवाः किं कुर्युरित्यत आह– **ते प्राकाश्या इति** ॥ आकाशादयः धारकाः चक्षुरादयः प्रकाशकाश्चेत्यर्थः। कथमेतदित्यत आह । **अभिवदन्तीति** उच्चैः परस्परं स्पर्धया अवदन्नित्यर्थः। किमवदन्निति तत्राह। वयं सर्वे एतद्बाणं शरीरं अवष्टभ्य आश्रित्य धारयामः प्रकाशयामश्चेति। प्रश्नानुसारित्वात्। अहमेव स्वातन्त्र्येण देहधारकः। न त्वम्, अहमेव स्वातन्त्र्येण विषयप्रकाशकः न त्वमिति स्पर्धयाश्चक्रुरिति भावः॥ २-२ ॥

उपनिषत्

**तान् वरिष्ठः प्राण उवाच । मा मोहमापद्यथाऽहमेवैतत्पञ्चधाऽऽत्मानं विभज्यैतद् बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः । सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते ॥ ३ ॥**

**टीका**–तानेवं मन्यमानान्वरिष्ठः प्राण उवाच। किमिति। वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानं मा प्राप्नुत। कुतोऽयं मोहः। यस्मादहमेवैतदेतस्मिन् शरीरे पञ्चधा प्राणादिरूपैरात्मानं प्रविभज्य प्रविभक्तं कृत्वैतद्बाणमवष्टभ्य विधारयामि प्रकाशयामि चेति। तच्छ्रुत्वा तेऽश्रद्दधाना अप्रत्ययवन्तो

बभूवुः कुत एतदित्थमिति। स मुख्यप्राणस्तेषां प्रत्यायनायाभिमन्यत इत्यभिमानो देहस्तस्मादुर्ध्वमुत्क्रमत इव किञ्चिदूर्ध्वमुदक्रामत्। अथ तस्मिन्प्राणे उत्क्रामति सति इतरे सर्व एवाकाशादिदेवाः शरीरधारणादौ स्वस्थितौ चासमर्थाः उत्क्रमन्ते उदक्रामन्। अस्य यादृच्छिकत्वपरिहाराय पुनस्तस्मिन्प्राणे प्रतिष्ठमाने शरीर एव प्रतितिष्ठति सर्व एव देवाः प्रतिष्ठन्ते शरीरे प्रतितिष्ठन्ति॥ ३॥

**वामन**–अथ मुख्यप्राणः तानुवाच। मा मोहमापद्यथ इति । एतत्पञ्चधा अनेन दृश्यमानेन प्राणापानादिरूपेण पञ्चधा। तद्वचनेनाप्यश्रद्दधाना बभूवुः॥ २-३ ॥

**प्रकाशिका**–'अप्रत्ययवन्तः' इत्यत्र अप्रत्ययवन्तोऽविश्वासवन्त इत्यर्थः। 'तस्मादूर्ध्वमुत्क्रमत इव' इत्यत्र स्वमहिमस्फोरणाय देहात्किञ्चिदविदूरे उत्क्रान्तवान्नतु वस्तुगत्योत्क्रमणमित्यत इवशब्दः॥ २-३ ॥

**सत्य**–अप्रत्ययवन्त इत्युक्तमविश्वासं निर्दिशति– **कुत एतदिति** ॥ ऊर्ध्वमुत्क्रमत इवेति इवशब्दार्थः किञ्चिदित्युक्तं बृहदारण्यकभाष्ये । 'उपमार्थे तथाल्पत्वेऽपीव-शब्दः प्रयुजत' इत्यभिधानम् । 'दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्' इति प्रयोगादिति । इदानीमुत्क्रमणाभावात् च्छान्दसो लकारव्यत्यय इति भावेनाह– **उदक्रामदिति** ॥ एवमुत्तरत्रापि ज्ञेयम् । अत्र यद्यपि प्राणसंवादविषये महैतरेयादौ तत्त्वदेवानामेकैकस्योत्क्रमणानन्तरं मुख्यप्राणस्योत्क्रमणम्, एकैकस्य प्रवेशानन्तरं प्रवेशश्चेत्युत्क्रमणप्रवेशश्चेत्युत्क्रमणप्रवेशौ प्राणस्य पश्चादेव प्रतीयते । अत्र च्छान्दोग्ये च प्राणस्यैवादावुत्क्रमणमितरेषां विराड्देहे अवस्थातुमसामर्थ्येन पश्चादुत्क्रमणं प्रतीयत इति विरोधो भाति, तथापि कल्पभेदेन वा एकस्मिन्नेव कल्पे द्विवारमुत्क्रमणप्रवेशकल्पनया वा अविरोधो ज्ञेयः । तथाहि 'वागुदक्रामत् अवदन्ननश्नन्नपिबन् आस्तैव । वाक् प्राविशत् अवददेवेत्यादिना एकैकस्य देवस्योत्क्रमणप्रवेशाभ्यां विराड्देहस्य पतनोत्थानयोरसामर्थ्ये निर्णीते सत्यपि मिलितानामस्माकं सर्वतश्च देवानां मुख्यप्राणेन विना एतद्देहधारकत्वादिसामर्थ्यं भविष्यतीत्यभिमानेन 'वयमेतद् बाणमवष्टभ्य

विधारयाम' इति पुनर्विवादे प्रसक्ते 'तान् वरिष्ठः प्राण उवाच' इत्यादिना मुख्यस्यैव प्रथमं देहादुत्क्रमणं तदनन्तरं तेषां देहावस्थानमेवाशक्यम् । किमुत तद्धारणादि-सामर्थ्यमिति सूचयितुं तस्मिन्नुत्क्रामति इतरे सर्वा एवोत्क्रमन्त इति इतरदेवानां पश्चादुत्क्रमणञ्चोच्यत इति अविरोध इति ॥ २-३ ॥

**छलारी**–॥ **अभिमन्यमानानिति**॥ अहङ्कारं कुर्वत इत्यर्थः ॥ **प्राणादि-रूपैरिति**॥ वागादिरूपैश्चेति शेषः। अत्र मुख्यप्राणः वागादीन्द्रियेषु प्रकाशार्थं वागादिरूपेण तिष्ठतीत्यत्र ज्ञापकमुत्तरत्र त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्तीति टीकाकारवचनमेव ॥ **अभिमानो देह इति** ॥ अभिपूर्वकमन्यतेः 'अकर्तरि च कारके संज्ञायां' इति कर्मणि घञ् ॥ **किञ्चिदूर्ध्वमिति** ॥ 'इवोभये च सादृश्य' इति वचनादिवशब्दस्य सादृश्यार्थकत्वात्तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यशब्दार्थत्वादिति भावः॥ **आकाशादिदेवा इति**॥ आदिशब्दो न चक्षुराद्याः प्रकाश्याः ग्राह्याः। उत्तरत्र प्रतितिष्ठन्तीति प्रतिष्ठोक्तेः। तदुपयुक्तमध्याहरति– **स्वस्थितौ वेति** ॥ प्रतितिष्ठतीति शतः सप्तम्यन्तोऽयं शब्दः। शरीरे सतीत्यर्थः॥ २-३ ॥

**ताम्रपर्णीय**–अप्रत्ययवन्तोऽनाश्वासवन्तः। ऊर्ध्वमुत्क्रमत इवेतीवशब्दार्थः किञ्चिदिति॥ तदुक्तं बृहदारण्यकभाष्ये– "उपमार्थे तथाल्पत्वेऽपीवशब्दः प्रयुज्यत" इति। तदानीमुत्क्रमणाभावाच्छान्दसो लकारव्यत्यय इति भावेनाह– **उत्क्रमत इति**॥ एवमुत्तरत्रापि। अत्र यद्यपि प्राणसंवादविषये महैतरेयादौ तत्त्वदेवानामेकैकस्य उत्क्रमणानन्तरं मुख्यप्राणोत्क्रमणं एकैकस्य प्रवेशानन्तरं प्रवेशश्चेत्युत्क्रमणप्रवेशौ प्राणस्य पश्चादेव प्रतीयते। अत्र च्छान्दोग्ये च प्राणस्यैवादावुत्क्रमणमितरेषां देहेऽवस्थानासामर्थ्येन पश्चादुत्क्रमणं प्रतीयत इति विरोधो भाति, तथापि कल्पभेदेन वा एतस्मिन्नेव कल्पे द्विवारमुत्क्रमण-प्रवेशकल्पनयाऽविरोधो ज्ञेयः॥

तथाहि 'वागुदक्रामदवदन्नश्नन् पिबन्नास्तैव। वाक्प्राविशदशयदेव' इत्यादि-नैकैकस्य देवस्योत्क्रमणप्रवेशाभ्यां विराड्देहस्य पातोत्थापनयोरसामर्थ्ये निर्णीते

सत्यपि मिलितानामस्माकं तत्र देवानां मुख्यप्राणेन विना एतद्देहधारकत्वादिसामर्थ्यं भविष्यतीत्यभिमानेन वयमेतद्बाणमवष्टभ्य विधारयाम इति पुनर्विवादे प्रसक्ते तान्वरिष्ठः प्राण उवाचेत्यादिना मुख्यप्राणस्यैव प्रथमं देहादुत्क्रमणानन्तरं तेषामवस्थानमेवाशक्यं किमिति धारणादिसामर्थ्यमिति सूचयितुं तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्त इतीतरदेवानां पश्चादुत्क्रमणो चोद्यत इत्यविरोध इति ॥ २-३ ॥

**मङ्गालीय-**॥ **मन्यमानानिति** ॥ अहङ्कारं कुर्वत इत्यर्थः॥ **प्राणादिरूपैरिति** ॥ वागादिरूपैश्चेति शेषः। मुख्यप्राणो वागादीन्द्रियेषु प्रकाशाद्यर्थं वागादिरूपेण तिष्ठतीत्यत्र ज्ञापकमुत्तरत्र त्वमेव सर्वदेवादिषु स्थित्वा तत्तन्नामा तत्तद्गुणक्रियादिप्रवर्तक इति प्राणं प्रस्तुवन्तीति टीकाकारवचनमेव। अप्रत्ययवन्त इत्युक्तमविश्वासं निर्दिशति- **कुत एतदित्थमितीति** ॥ **अभिमानो देह इति** ॥ अभिपूर्वकमन्यतेः 'अकर्तरि च कारके सञ्ज्ञायाम्' इति कर्मणि घञ्। उत्क्रमत इवेति इवशब्दार्थः ॥ **किञ्चिदिति** ॥ उक्तञ्च बृहदारण्यकभाष्ये। 'उपमार्थे तथाल्पत्वेऽपीवशब्दः प्रयुज्यत' इत्यभिधानम्। 'दशरात्रैर्भुक्तमिव न सम्यक् स्वल्पभोजनात्' इति प्रयोगाद्वेति। इदानीमुत्क्रमणाभावाच्छान्दसो लकारव्यत्यय इति भावेनाह- **उदक्रामदिति** ॥ एवमुत्तरत्रापि ज्ञेयम्। उत्तरत्र प्रतितिष्ठतीति प्रतिष्ठोक्तेः तदुपयुक्तमध्याहरति- **स्वस्थितौ चेति** ॥ अत्र यद्यपि प्राणसंवादादिविषये महैतरेये तत्त्वदेवानां एकैकस्योत्क्रमणानन्तरं मुख्यप्राणस्योत्क्रमणं एकैकस्य प्रवेशानन्तरं प्रवेशश्चेति उत्क्रमणप्रवेशौ प्राणस्य पश्चादेव प्रतीयेते। अत्र छान्दोग्ये च प्राणस्यैवादावुत्क्रमणम्। इतरेषां विराड्देहेऽवस्थातुमसामर्थ्येन पश्चादुत्क्रमणं प्रतीयत इति विरोधो भवति। तथापि कल्पभेदेन वा एकस्मिन्नेव कल्पे द्विवारमुत्क्रमणप्रवेशकल्पनया वाऽविरोधो ज्ञेयः। तथाहि-'वागुदक्रामत् अवदन्नश्नन् पिबन् आस्तैव। वाक् प्राविशत् अशयदेव' इत्यादिना एकैकस्य देवस्योत्क्रमणप्रवेशाभ्यां विराड्देहस्य पातनोत्थांनयोरसामर्थ्ये निर्णीते सत्यपि मिलितानामस्माकं सर्वतत्त्वदेवानां मुख्यप्राणेन विना एतद्देहधारकत्वादिसामर्थ्यं भविष्यतीत्यभिमानेन 'वयमेतद्बाणमवष्टभ्य

विधारयामः’ इति पुनर्विवादे प्रसक्ते ‘तान्वरिष्ठः प्राण उवाच’ इत्यादिना मुख्यप्राणस्यैव प्रथमं देहादुत्क्रमणं तदनन्तरं तेषामवस्थानमेवाशक्यं किमुत धारणादिसामर्थ्यमिति सूचयितुं ‘तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रमन्ते’ इति। इतरदेवानां पश्चादुत्क्रमणश्चोच्यत इत्यविरोध इति॥ २-३ ॥

**अनन्तभट्टीय**—लकारव्यत्ययश्छान्दस इति भावेन प्रतिष्ठन्ते प्रत्यातिष्ठन्तेति व्याख्यातम्॥ २-३ ॥

**खण्डार्थ**—तानेवमभिमन्यमानान्वरिष्ठः प्राण उवाच । किमिति? वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानं माऽऽपद्यथ न प्राप्नुत । कुतोऽयं मोहः? यस्मादहमेवैतदेतस्मिन् शरीरे पञ्चधा प्राणादिरूपैरात्मानं प्रविभज्य प्रविभक्तं कृत्वा एतद् बाणमवष्टभ्य विधारयामि प्रकाशयामि चेति । तत् श्रुत्वा ते देवा अश्रद्दधाना अप्रत्ययवन्तो बभूवुः, कुत एतदित्थमिति । स मुख्यप्राणः तेषां प्रत्यायनाय, अभिमन्यत इत्यभिमानो देहः, तस्मादूर्ध्वमुत्क्रमत इव, किञ्चिदूर्ध्वमुदक्रामत् । अथ तस्मिन् प्राण उत्क्रामति सति, इतरे सर्व एवाऽकाशा-दिदेवाः शरीरधारणादौ स्वस्थितौ चासामर्थ्यादुत्क्रमन्ते, उदक्रमन्त । अस्य च यादृच्छिकत्वपरिहाराय पुनस्तस्मिन् प्राणे प्रतिष्ठमाने शरीर एव प्रतितिष्ठति सति सर्वे देवाः प्रतिष्ठन्ते शरीरे प्रत्यतिष्ठन् ॥ २-३ ॥

**नर**—तानेवमभिमन्यमानान्वरिष्ठः प्राण उवाच। वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानं माप्नुत कुतोऽयं मोहः? यस्मादहमेवैतदेतस्मिन् शरीरे पञ्चधा प्राणादिरूपेणात्मानं प्रविभज्य प्रविभक्तं कृत्वा एतद्बाणमवष्टभ्य विधारयामि, प्रकाशयामि चेति। तच्छ्रुत्वा ते अश्रद्दधानाः अप्रत्ययवन्तो बभूवुः। सः मुख्यप्राणः तेषां प्रत्यायनायाभिमन्यत इति अभिमानो देहः तस्मादूर्ध्वं उत्क्रामत इव किञ्चिदूर्ध्वं उदक्रामत्। अथ तस्मिन्प्राणे उत्क्रमति सति सर्व एव वागादिदेवाः शरीरधारणादौ स्वस्थितौ वा असमर्था उत्क्रमन्ते उदक्रामन्। अस्य च यादृच्छिकत्वपरिहाराय पुनः तस्मिन् प्राणे प्रतिष्ठमाने शरीर एव प्रतितिष्ठति सति सर्व एव देवाः प्रतितिष्ठन्ते ॥ २-३ ॥

**उदय**–तान् सर्वान् तत्त्वाभिमानिनो देवान् वरिष्ठः प्राणः मुख्यो वायुरुवाच। किमिति? वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानम् । मा आपद्यथ मा आप्नुत। कुतः? अहमेव एतत् शरीरं पञ्चधा प्राणादिरूपैः आत्मानं विभज्य विभागं कृत्वा, एतद्बाणं शरीरं, अवष्टभ्य अधिष्ठाय, धारयामि, प्रकाशयामीति मुख्यप्राणेनोक्ते सति ते तात्त्विका देवा अश्रद्दधानाः अप्रत्ययवन्तो बभूवुः। सर्वेषामेकशरीरस्थत्वेन साम्यात् कुतस्तवैव श्रेष्ठत्वमित्यूचुरिति भावः। एवं स्थिते स मुख्य अभिमानात् अभिमन्यमानात् देहात् । ऊर्ध्वं उत्क्रमत इव किञ्चिदूर्ध्वं उदक्रामत्। अथानन्तरं तस्मिन् वायौ उत्क्रमति सति इतरे तात्त्विका देवाः सर्वे एव उत्क्रमन्ते उदक्रामन्। च पुनः तस्मिन्वायौ प्रतिष्ठमाने प्रवेशमाने सर्व एव देवाः प्रतिष्ठन्ते शरीरे प्रवेशं कुर्वते॥ २-३ ॥

उपनिषत्

**तद् यथा मधुमक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते। तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते। एवं वाङ्मनश्चक्षुःश्रोत्रश्चेति ते प्रीताः प्राणं स्तुन्व-न्त्येषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत् ॥ ४ ॥**

**टीका**–किमिव? तत्तत्र लोके यथा मधुमक्षिकाः मधुकराः मधुकरराजानं प्रधानमधुमक्षिकां मधुस्थानादुत्क्रामन्तीमनु सर्वा एवोत्क्रामन्ति, तस्याञ्च प्रतिष्ठितायां सर्वा एव तत्र प्रतितिष्ठन्ति एवं वागादयो देवा इति इत्थमन्वय-व्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रीतास्ते देवास्त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति अस्तुवन्। तदुच्यते–**एषोऽग्निरित्यादि**॥ एषः प्राण एवाग्निः संस्तपति। एष एव सूर्योऽपि संस्तपति। मघवानप्येष एवेति शेषः। पृथिवी रयिश्च यत् सदसत् मूर्तामूर्तं यच्चामृतं मुक्तजातं तदप्येष एव॥ ४॥

**वामन**–अथ तस्योत्क्रमणोद्यमेन श्रद्दधानाश्च सन्तस्तमस्तुवन् एषोऽग्निरित्यादिना । अत्र हि मुख्यप्राणस्याग्निषु स्थित्वा तद्धारणादिरेवाभिप्रेयते नतु तदैक्यम्। अरा इत्यादिवाक्यशेषे सदृष्टान्तं व्यधिकरणत्वेन भेदोपदेशात्। रयिर्देवो वाक्पतिः। सदसद्भूतपञ्चकम्। अमृतं चेतनजातम्।। २-४ ।।

**छलारी**–।। **एवं वागादयो देवा इति**।। अत्र धारकाः आकाशादयोऽपि ग्राह्याः। ननु अभिमानेन प्रवृत्तानां देवानां कथं प्राणस्तावकत्वमित्यत-स्तत्सङ्गमयति– **इत्थमिति** ।। **स्तुन्वन्तीति** ।। ष्टु स्तुताविति धातोः लुग्विकरण-स्यापि व्यत्ययेन श्नुप्रत्यय इति भावेनाह– **अस्तुवन्निति** ।। अस्तुवन्निति लङा आख्यायिकाया अतीतार्थकत्वेन स्तुन्वन्तीति लडपि व्यत्ययेनेति सूचितमिति ज्ञातव्यम्।। २-४ ।।

**ताम्रपर्णी**–कथमेतत्सर्वं प्राण इत्याक्षेपः उक्तं वक्ष्यमाणं विव्रियत इति परिहारः। 'एषोऽग्निस्तपत्येष सूर्य' इत्युक्तं प्रजापतिश्चरसि गर्भे त्वमेवेत्यादि वक्ष्यमाणश्च विव्रियत इत्यर्थः।। २-४ ।।

**मङ्कालीय**–नन्वभिमानेन प्रवृत्तानां देवानां कथं प्राणस्तावकत्वमित्यत-स्तत्सङ्गमयति– **इत्थमिति** ।। प्रतीताः विश्वासवन्तः एष पृथिवी रयिरित्यत्र एष इति सकृच्छ्रवणात्समग्रमेकवाक्यतया योजयति– **पृथिवी रयिश्चेत्यादि** ।। २-४ ।।

**अनन्तभट्टीय**–'एष पृथिवी रयिः' इत्यत्रैष इति सकृच्छ्रवणात् समग्रमेक-वाक्यतया योजयति– **पृथिवी वा रयिश्चेत्यादि**।। २-४ ।।

**खण्डार्थ**–तत् तत्र लोके यथा मधुमक्षिका मधुकरराजानं मधुकरप्रधानं मधुस्थानादुत्क्रामन्तमनु सर्वा एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठिते सर्वा एव प्रतिष्ठन्ते। एवं वागादयो देवा इति । इत्थमन्वयव्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रीतास्ते देवाः त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति, अस्तुवन् । तदुच्यते– **एषोऽग्निरित्यादि** ।। एष प्राण एवाग्निस्सन्

**उदय**–तान् सर्वान् तत्त्वाभिमानिनो देवान् वरिष्ठः प्राणः मुख्यो वायुरुवाच। किमिति? वयमेव धारकाः प्रकाशकाश्चेत्येवंविधं मोहं मिथ्याज्ञानम् । मा आपद्यथ मा आप्नुत। कुतः? अहमेव एतत् शरीरं पञ्चधा प्राणादिरूपैः आत्मानं विभज्य विभागं कृत्वा, एतद्बाणं शरीरं, अवष्टभ्य अधिष्ठाय, धारयामि, प्रकाशयामीति मुख्यप्राणेनोक्ते सति ते तात्त्विका देवा अश्रद्दधानाः अप्रत्ययवन्तो बभूवुः। सर्वेषामेकशरीरस्थत्वेन साम्यात् कुतस्तवैव श्रेष्ठत्वमित्यूचुरिति भावः। एवं स्थिते स मुख्य अभिमानात् अभिमन्यमानात् देहात् । ऊर्ध्वं उत्क्रमत इव किञ्चिदूर्ध्वं उदक्रामत्। अथानन्तरं तस्मिन् वायौ उत्क्रमति सति इतरे तात्त्विका देवाः सर्वे एव उत्क्रमन्ते उदक्रामन्। च पुनः तस्मिन्वायौ प्रतिष्ठमाने प्रवेशमाने सर्व एव देवाः प्रतिष्ठन्ते शरीरे प्रवेशं कुर्वते॥ २-३ ॥

### उपनिषत्

**तद् यथा मधुमक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रमन्ते। तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्ते। एवं वाङ्मनश्चक्षुःश्रोत्रञ्चेति ते प्रीताः प्राणं स्तुन्व-न्त्येषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष पृथिवी रयिर्देवः सदसच्चामृतञ्च यत् ॥ ४ ॥**

**टीका**–किमिव? तत्तत्र लोके यथा मधुमक्षिकाः मधुकराः मधुकरराजानं प्रधानमधुमक्षिकां मधुस्थानादुत्क्रामन्तीमनु सर्वा एवोत्क्रामन्ति, तस्याञ्च प्रतिष्ठितायां सर्वा एव तत्र प्रतितिष्ठन्ति एवं वागादयो देवा इति इत्थमन्वय-व्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रीतास्ते देवास्त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति अस्तुवन्। तदुच्यते– **एषोऽग्निरित्यादि**॥ एषः प्राण एवाग्निः संस्तपति। एष एव सूर्योऽपि संस्तपति। मघवानप्येष एवेति शेषः। पृथिवी रयिश्च यत् सदसत् मूर्तामूर्तं यच्चामृतं मुक्तजातं तदप्येष एव॥ ४॥

**वामन**–अथ तस्योत्क्रमणोद्यमेन श्रद्दधानाश्च सन्तस्तमस्तुवन् एषोऽग्निरित्यादिना । अत्र हि मुख्यप्राणस्याग्निषु स्थित्वा तद्धारणादिरेवाभिप्रेयते नतु तदैक्यम्। अरा इत्यादिवाक्यशेषे सदृष्टान्तं व्यधिकरणत्वेन भेदोपदेशात्। रयिर्देवो वाक्पतिः। सदसद्भूतपञ्चकम्। अमृतं चेतनजातम्।। २-४ ॥

**छलारी**–॥ **एवं वागादयो देवा इति**॥ अत्र धारकाः आकाशादयोऽपि ग्राह्याः। ननु अभिमानेन प्रवृत्तानां देवानां कथं प्राणस्तावकत्वमित्यत-स्तत्सङ्गमयति– **इत्थमिति** ॥ **स्तुन्वन्तीति** ॥ ष्टु स्तुताविति धातोः लुग्विकरण-स्यापि व्यत्ययेन श्नुप्रत्यय इति भावेनाह– **अस्तुवन्निति** ॥ अस्तुवन्निति लङा आख्यायिकाया अतीतार्थकत्वेन स्तुन्वन्तीति लडपि व्यत्ययेनेति सूचितमिति ज्ञातव्यम्।। २-४ ॥

**ताम्रपर्णी**–कथमेतत्सर्वं प्राण इत्याक्षेपः उक्तं वक्ष्यमाणं विव्रियत इति परिहारः। 'एषोऽग्निस्तपत्येष सूर्य' इत्युक्तं प्रजापतिश्चरसि गर्भे त्वमेवेत्यादि वक्ष्यमाणश्च विव्रियत इत्यर्थः।। २-४ ॥

**मङ्गालीय**–नन्वभिमानेन प्रवृत्तानां देवानां कथं प्राणस्तावकत्वमित्यत-स्तत्सङ्गमयति– **इत्थमिति** ॥ प्रतीताः विश्वासवन्तः एष पृथिवी रयिरित्यत्र एष इति सकृच्छ्रवणात्समग्रमेकवाक्यतया योजयति– **पृथिवी रयिश्चेत्यादि** ॥ २-४ ॥

**अनन्तभट्टीय**–'एष पृथिवी रयिः' इत्यत्रैष इति सकृच्छ्रवणात् समग्रमेक-वाक्यतया योजयति– **पृथिवी वा रयिश्चेत्यादि**॥ २-४ ॥

**खण्डार्थ**–तत् तत्र लोके यथा मधुमक्षिका मधुकरराजानं मधुकरप्रधानं मधुस्थानादुत्क्रामन्तमनु सर्वा एवोत्क्रमन्ते । तस्मिंश्च प्रतिष्ठिते सर्वा एव प्रतिष्ठन्ते। एवं वागादयो देवा इति । इत्थमन्वयव्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रीतास्ते देवाः त्वमेव सर्वदेवादिषु स्थित्वा तन्नामा तद्गुणक्रियादिप्रवर्तक इति प्राणं स्तुन्वन्ति, अस्तुवन् । तदुच्यते– **एषोऽग्निरित्यादि** ॥ एष प्राण एवाग्निस्सन्

तपति । एष एव सूर्योऽपि सन् तपति मघवानेष एवेति शेषः । पृथिवी रयिश्च यत् सदसन्मूर्तममूर्तममृतं मुक्तजातं तदप्येष एव ॥ २-४ ॥

**नर**–किमिव तत्? तत्र लोके यथा मधुमक्षिकाः मधुकरराजानं प्रधान-मधुमक्षिकां मधुस्थानादुत्क्रमन्तमनु सर्वा एवोत्क्रमन्ते तस्याश्च प्रतिष्ठितायां सर्वा एव तत्र प्रतितिष्ठन्ति, एवं वागादयो देवा इत्यन्वयव्यतिरेकाभ्यां प्राणस्य वरिष्ठत्वेऽवधारिते प्रीतास्ते देवाः स्वयमेव सर्वदेवादिषु स्थित्वा तन्नाम-तद्गुणक्रियादिषु प्रवर्तक इति प्राणं स्तुन्वन्ति अस्तुवन्। तदुच्यते– **एषोऽग्निरित्यादि** ॥ एषः प्राण एवाग्निप्रेरकत्वेन अग्नौ स्थितः अग्निनामा सन् तपति। एवमुत्तरत्र। यच्चामृतं मुक्तजातम् ॥ २-४ ॥

**उदय**–तत्र दृष्टान्तयति– **तद्यथेति** ॥ तत् तत्र लोके, यथा मधुमक्षिकाः मधुकराः, मधुकरराजानं प्रधानमक्षिकाम् । उत्क्रमन्तं मधुस्थानादुद्गच्छन्तम् । सर्वा मक्षिका एव, उत्क्रमन्ते । तस्मिन् तस्यां प्रतिष्ठमाने प्रतिष्ठमानायां सर्वा एव मक्षिकाः प्रतिष्ठन्ते प्रतितिष्ठन्ति। एवं प्रकारेण वाङ्मनश्चक्षुःश्रोत्रञ्च एतदभिमानिनो देवा अभवन्नित्यर्थः। एवं प्राणस्य स्वस्मात् श्रैष्ठ्यं ज्ञात्वा किं विदधुर्देवा इत्यत आह– **ते प्रीता इति** ॥ प्राणोत्क्रमणे स्वोत्क्रमणं तत्र प्रवेशे स्वप्रवेशमवधार्य, ते देवाः प्रीतास्तुष्टाः सन्तः । प्राणं मुख्यप्राणम् । स्तुन्वन्ति अस्तुवन्। सर्वदेवादिषु स्थित्वा तत्तन्नाम्ना तत्तद्गुणक्रियादिप्रवर्तकस्त्वमेवासीति स्तुतिं चक्रुरित्यर्थः। स्तुतिप्रकारमेवाह– **एषोऽग्निरिति** ॥ एषः प्राणः अग्निः सन् तपति । एषः सूर्यः सन् तपति । एषः पर्जन्यः वर्षति। एषः मघवान् इन्द्रः। एष वायुः भूतवायुः। एषः एषा पृथिवी पृथिव्यभिमानिनी देवता । रयिर्देवः क्रीडादिगुणविशिष्टा भारत्यपि। सत् मूर्तं असत् अमूर्तञ्च । यच्चामृतं मुक्तजातं तदप्येषः प्राण एव ॥ २-४ ॥

उपनिषत्

**अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम् ।**
**ऋचो यजूंषि सामानि यज्ञः क्षत्रञ्च ब्रह्म च ।**

**प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।**
**तुभ्यं प्राणः प्रजास्त्विमा यत्प्राणैः प्रतितिष्ठसि ।**
**देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।**
**ऋषीणां चरितं सत्यमथर्वाङ्गिरसामपि ॥ ५ ॥**

**टीका**–कथमेतत्सर्वं प्राण इति उक्तं वक्ष्यमाणं च विव्रियते– **अरा इति**॥ तस्मात्सर्वं प्राण इत्युच्यत इति शेषः। परोक्षतया स्तुतोऽपरोक्षतया स्तूयते– **प्रजापतिरित्यादिना**॥ प्रजापतिर्दक्षादिस्त्वमेव। गर्भे च गर्भस्थप्रेरकतया त्वमेव चरसि। प्रतिजायसे जनिक्रियाश्च त्वमेव करोषि। हे प्राणेमा देवाद्याः प्रजास्तुभ्यं त्वदीयाः। कुतः? यद्यस्मात्त्वं प्राणैश्चक्षुरादिभिः सह धारणादिकं कुर्वन् शरीरे प्रतितिष्ठसि तस्मात्। न केवलं तपनक्रियावानग्निः प्राणः किन्तूच्यते– **देवानामिति**। त्वं देवानां वह्नितमो यज्ञभागवाहकतमोऽसि। पितॄणां प्रथमा स्वधा। मुख्यस्वधावाहकोऽपि त्वमेवासि। त्वमेवाथर्वाङ्गिरसामृषीणां चरितमाचारः सत्यवचनश्चासि॥ ५॥

**वामन**–त्वमेव प्रतिजायसे। त्वमेव प्राजापत्ये तं जनयसीत्यर्थः। प्रजापति-रित्युक्तत्वात्। तुभ्यं प्राणः प्रजास्त्विमाः इति प्रजानां तदीयत्वोक्तेश्च न तदैक्यम्। अग्निस्तावद्देवानामाज्ञया हव्यं वहतीति वह्निरेव भवति। त्वं पुनस्तस्यापि नियन्तृत्वाद्वह्नितमोऽसि। पितॄणां कव्यदत्वात् पितृपतिर्हि स्वधाशब्दितः। तन्नियामकत्वात् त्वमेव प्रथमा स्वधा । ऋषीणां चरितं सत्यं च त्वमेव नियच्छसि। अङ्गिरसामाथर्वनियन्ता च त्वमेवासि ॥ २-५ ॥

**प्रकाशिका**–'वह प्रापण' इति धातोः वकारहकारयोर्मध्ये हि नुम्प्रत्यये कृते वह्निशब्दनिष्पत्तिमभिप्रेत्योक्तं 'यज्ञभागवाहकतमः' इति॥ ५ ॥

**सत्य**– कथमेतत्सर्वं प्राण इत्याक्षेपः । उक्तं वक्ष्यमाणश्च विव्रियत इति परिहारः। 'एषोऽग्निस्तपत्येष सूर्य' इत्याद्युक्तम्। प्रजापतिश्चरति गर्भे त्वमेवेत्यादि वक्ष्यमाणश्च विव्रियत इत्यर्थः ॥ अरा इवेति श्लोकेन प्राणस्य सर्वात्मकत्वघटना

प्रतीयते इत्यतोऽध्याहृत्य तां दर्शयति– **तस्मात्सर्वं प्राण उच्यते इति शेष इति** ।। एषोऽग्निस्तपतीत्यनेन देवानामसि वह्नितमः इत्यस्य पौनरुक्त्यं परिहरति– **न केवलं तपनः प्राण इति** ।। एकस्यैवाग्नेस्तापकत्वं यज्ञभागवाहकत्वञ्च प्राणाधीनमित्युच्यत इति न पौनुरक्त्यमिति भावः । एवमुत्तरत्रापि ।। २-५ ।।

**छलारी**–ननु एषोऽग्निस्तपत्येष सूर्य इत्यादावभेदप्रतीतेः सर्वदेवादिषु स्थितत्वात्तत्तन्नामेत्याद्यर्थाप्रतीतेः एवमुत्तरत्रापि अभेदप्रतीतेः प्राणं स्तुन्वन्तीति वचनमयुक्तमित्याशङ्कानिवर्तकत्वेन अरा इवेति मूलमवतारयति– **कथमेतदिति** ।। कथमनेन शङ्कापरिहार इत्यत आह– **सर्वेति** ।। सर्वाधारकत्वादित्यर्थः। **स्वधावाहक इति** ।। स्वधेति मन्त्रेण दीयमानान्नवाहकोऽसीत्यर्थः। सज्योतिषां ग्रहाणामिति श्रुतौ ज्योतिषामित्यनेकप्रकाशवत्त्वात्सोमादिग्रहा एवोच्यन्त इति भावः ।। २-५ ।।

**ताम्रपर्णीय**–**अरा इवेति** श्लोके प्राणस्य सर्वात्मकत्वघटना न प्रतीयत इत्यतोऽध्याहृत्य तां दर्शयति– **तस्मात्सर्वं प्राण उच्यत इति**।। एषोऽग्निस्तपतीत्यनेन देवानामसि वह्नितम इत्यस्य पौनरुक्त्यं परिहरति– **न केवलं तपनक्रियावानग्निरिति**।। एकस्यैवाग्नेस्तापकत्वं यज्ञभागवाहकत्वञ्च प्राणाधीनमित्युच्यत इति न पौनरुक्त्यमिति भावः। एवमुत्तरत्रापि।। २-५ ।।

**मङ्कालीय**–नन्वेषोऽग्निस्तपत्येष सूर्य इत्यादौ प्राणस्याग्न्याद्यभेदप्रतीतेः सर्व-देवादिषु स्थित्वा तत्तन्नामेत्याद्यर्थाप्रतीतेरुक्तप्रकारेण प्राणं स्तुन्वन्तीति वचन-मयुक्तमित्याशङ्कानिवर्तकत्वेन अरा इति वाक्यमवतारयति– **कथमेतदिति** ।। कथमेतत्सर्वं प्राण इतीत्याक्षेपः। उक्तं वक्ष्यमाणं च विव्रियत इति परिहारः। 'एषोऽग्निस्तपत्येष सूर्यः' इत्याद्युक्तं 'प्रजापतिश्चरति गर्भे त्वमेव' इत्यादि वक्ष्यमाणं च विव्रियत इत्यर्थः। उक्तशङ्कापरिहारार्थमुक्तविवरणं क्रियते चेत्प्रजापतिश्चरसीत्यादेर्विवरणाभावात्तत्रोक्तशङ्कापरिहारो न स्यादित्यत उक्तम्।। **वक्ष्यमाणश्चेति** ।। सर्वं प्रतिष्ठितमिति सामान्यत एवोक्तत्वादिति भावः। अरा इवेति श्लोके प्राणस्य सर्वात्मकत्वघटना न प्रतीयत इत्यतोऽध्याहृत्य तां दर्शयति– **तस्मात्सर्वं प्राण उच्यत इति शेष इति** ।। तस्मात्सर्वधारकत्वात्।

'यदधीना यस्य सत्ता तत्तदित्येव भण्यते' इत्युक्तेः। सर्वस्य तदधीनत्वेन तदात्मकत्वव्यपदेश इत्यर्थः। 'अरा इव' इति श्लोकः पूर्वोक्तस्य'एषोऽग्निः' इत्यादेरभेदव्यपदेशस्य 'प्रजापतिश्चरसि गर्भे त्वमेव' इति वक्ष्यमाणप्रजा-पत्यभेदव्यपदेशस्य चोपपादक इति। उक्तं वक्ष्यमाणं च विव्रियत इत्युक्तम्। रथनाभावरा इव मुख्यप्राणे सर्वं प्रतिष्ठितम्। तन्मध्ये किञ्चिन्निर्दिशति– **ऋच इत्यादि** ॥ क्षत्रं क्षत्रियाः। ब्रह्म ब्राह्मणाः। च अन्यच्चेत्येतदिति तदर्थः। "एषोऽग्निस्तपति" इत्यनेन "देवानामसि वह्नितमः" इत्यस्य पौनरुक्त्यं परिहरति– **न केवलं तपनक्रियावानग्निः प्राण इति** ॥ एवमुत्तरत्रापि द्रष्टव्यम्॥ २-५ ॥

**खण्डार्थ**–कथमेतत् सर्वं प्राण एवेत्यत उक्तं वक्ष्यमाणं च विव्रियते - **अरा इति** । तस्मात् सर्वं प्राण उच्यत इति शेषः । परोक्षतया स्तुतोऽपरोक्षतया स्तूयते– **प्रजापतिश्चरसीत्यादि** ॥ प्रजापतिः दक्षादिः । त्वमेव गर्भे चरसि गर्भस्थप्रेरकतया त्वमेव चरसि । प्रतिजायसे जनिक्रियाश्च त्वमेव करोषि । हे प्राण इमा देवाद्याः प्रजाः तुभ्यं त्वदीयाः कुतः? यद्यस्मात् त्वं प्राणैश्चक्षुरादिभिः सह धारणादि कुर्वन् शरीरे प्रतितिष्ठसि तस्मात् । न केवलं तपनक्रियावानग्निः प्राणः । किन्तु, उच्यते– **देवानामिति** । त्वं देवानां वह्नितमो यज्ञभागवाहक-तमोऽसि । पितॄणां प्रथमा स्वधा मुख्यस्वधावाहकोऽपि त्वमेवासि । त्वमेवाथर्वाङ्गिरसामृषीणां चरितमाचारः सत्यवचनश्चासि ॥ २-५ ॥

**नर**–एतदेव विवृणोति– **अरा इति** ॥ तस्मात्सर्वं प्राण इत्युच्यत इति शेषः। परोक्षतया स्तुतोऽपरोक्षतया च स्तूयते– **प्रजापतिरित्यादि** ॥ गर्भस्थप्रेरकतया त्वमेव चरसि, प्रजायसे प्रजननक्रियाश्च त्वमेव करोषि । हे प्राण इमा देवाद्याः प्रजाः तुभ्यं त्वदीयाः कुतः यद्यस्मात्त्वं प्राणैः चक्षुरादिभिः सह धारणादिकं कुर्वन् शरीरे प्रतितिष्ठति। तस्मात् न केवलं तपनक्रियार्हः किन्तु उच्यते । त्वं देवानां वह्नितमोऽसि यज्ञभागवाहकतमोऽसि। पितॄणां प्रथमः स्वधा मुख्य-स्वधावाहकोऽपि त्वमेवासि। त्वमेवाथर्वाङ्गिरसां ऋषीणां चरितमाचारः सत्यवचनश्चासि॥ २-५ ॥

**उदय**—कथमेतत्सर्वं प्राण इत्यतः सदृष्टान्तमुक्तं विवृणोति– **अरा इति** ॥ **रथनाभौ** चक्रप्रदेशविशेषे । **अरा इव** धारा इव । **प्राणे** मुख्यप्राणे । **सर्वं** देवतादिकं **प्रतिष्ठितम्** । **ऋचो** ऋग्वेदः । **यजूंषि** यजुर्वेदः । **सामानि** सामवेदः । चतुर्थस्यैवात्रान्तर्भावयितुं शक्यत्वात् त्रयाणामेव ग्रहणम् । 'त्रयी न श्रुतिगोचरा' इत्यादिवत् । **यज्ञः** सोमादिः । **क्षत्रं** क्षत्रियजातिः । **ब्रह्म च** ब्राह्मणजातिः । एतत्सर्वं त्वदधीनमित्यर्थः । एवं परोक्षतया स्तुत्वाऽपरोक्षतोऽपि देवैः प्राणः स्तूयते– **प्रजापतिरित्यादिना** ॥ प्रजापतिर्दक्षादिस्त्वमेव । गर्भे प्रेरकतया चरसि । त्वमेव प्रतिजायसे जनिक्रियाञ्च करोषि । हे प्राण । इमाः प्रजा देवाद्याः तुभ्यं सन्ति त्वदीया इत्यर्थः । यद्यस्मात् त्वं प्राणैश्चक्षुरादिभिः सह प्रतितिष्ठसि शरीरे स्थितिं करोषि । अतो सर्वा देवताः त्वद्दासभूता इत्यर्थः । न केवलमेतावानेव तव महिमा अन्योऽप्यस्तीत्याहुर्देवाः– **देवानामसीति** ॥ त्वं देवानां वह्नितमः । अतिशयेन यज्ञभागवाहकोऽसि । अतिशयार्थे वह्निशब्दात् तमप् प्रत्ययः । पितृणां प्रथमा मुख्या स्वधा पितृणां दीयमानमन्नादिकं स्वधाकारेण त्वमेव प्रापयसीत्यर्थः । अथर्वाङ्गिरसां ऋषीणामपि सत्यं मुख्यं चरितं आचारः असि ॥ २-५ ॥

उपनिषत्

**इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता । त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः । यदा त्वमभिवर्षस्यथेमाः प्राण ते प्रजाः । आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति । व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः । वयमद्यस्य दातारः पिता त्वं मातरिश्वनः (मातरिश्व नः) ॥ ६ ॥**

**टीका**—इन्द्रस्त्वमिति मघवानित्युक्तविवरणम् । तेजसा युक्त इति शेषः । वायुरित्यस्य विवरणम्– **त्वमन्तरिक्ष इति** ॥ न केवलं सूर्यस्य तापकत्वं प्राणाधीनम्, किन्तु ज्योतिषां ग्रहाणां पतित्वञ्च । पर्जन्यत्वविवरणम्– **यदेति** ॥

हे प्राण यदा त्वं पर्जन्यरूपोऽभिवर्षसि अथ तदा ते त्वदीया इमाः मानुषादिप्रजाः कामाय यथेष्टमन्नं भविष्यतीति निश्चित्यानन्दरूपा आनन्दवत्यस्तिष्ठन्ति। हे प्राण त्वं व्रात्यो व्रतनिष्ठः । एकर्षिरथर्ववेदद्रष्टाऽसि। विश्वस्यात्ता संहर्ता । यमादिश्च त्वमसि। सतां पतिः, संश्चासौ पतिश्चेति वा सत्पतिस्त्वमसि। वयं तवाद्यस्य भोज्यस्य दातारः, त्वत्पूजका इति यावत्। कुतः? हे मातरिश्व मातरिश्वन्, त्वं नो अस्माकं पिताऽसि। मातरिश्वनः भूतवायोः पितेति वा ॥ २-६ ॥

**वामन**–इन्द्रे पराक्रमप्रवर्तनेन स्थितोऽसि। रुद्रस्थो जगत्परितो रक्षितासि। ननु रुद्रस्थः कथं रक्षिता भवति 'रुद्रो मा विशान्तकः' इति संहर्तृत्वश्रवणादिति। नैष दोषः। प्रलयावस्थायां संहर्तृत्वेऽपि स्थित्यवस्थायां रक्षितृत्वोपपत्तेः। 'तेनान्नेनाप्यायस्व' इति वाक्यशेषात्। 'त्वादत्ते भी रुद्र शन्तमेभिः शतं हि मा अशीय भेषजेभिः' 'भिषक्तमं त्वा भिषजां शृणोमि' इति च श्रुतिः। वेदव्रतप्रवर्तकत्वाद् व्रात्यस्त्वम् । एकर्षिः प्रधानज्ञानी । वयं जगत आदिभूतस्य तव करदातारः। हे मातरिश्वन् त्वन्नः पिता चासि मातरिश्वन्नित्यत्र पदान्तनकारस्य लोपन्यायाभ्युपगमादुत्तरत्र न इति षष्ठ्यादेशः। कोणवायोः पिता त्वमिति वार्थः ॥ २-६ ॥

**प्रकाशिका**–'पर्जन्यरूपेणाभिवर्षसि' इति वदता परं 'पॄ पालनपूरणयोः' इति धातोः परपोषकजलजननयोग्यः पर्जन्य इति व्युत्पत्तिः सूचिता॥ २-६॥

**छलारी**–॥ **हे मातरिश्वेति** ॥ 'नङि सम्बुद्ध्योः' इति नलोपनिषेधाभावः छान्दसः अत एवारुचेराह– **मातरिश्वनो भूतवायोः पितेतिवेति** ॥ षष्ठ्यन्तमेकं पदमिति भावः॥ २-६ ॥

**मङ्कालीय**–॥ **ग्रहाणामिति** ॥ शन्यादीनामित्यर्थः॥ **एकर्षिरथर्ववेद-द्रष्टासीति** ॥ 'एकर्षिश्चाप्यथर्वणाम्' इति ऋग्भाष्योक्तेरिति भावः। उपजीव्या इति प्रतीतिनिरासायाह– **त्वत्पूजका इति** ॥ **हे मातरिश्वेति** ॥ 'नङि सम्बुद्ध्योः' इति नलोपनिषेधाभावश्छान्दस इति भावः। अत एवारुचेराह– **मातरिश्वनो भूतवायोरिति वेति** ॥ २-६ ॥

**अनन्तभट्टीय**–॥ **एकर्षिरिति** ॥ 'एकर्षिश्चाप्यथर्वणाम्' इति ऋग्भाष्योक्तेरिति भावः। उपजीव्य इति प्रतीतिनिरासायाह– **त्वत्पूजका इति**॥ २-६ ॥

**खण्डार्थ**–इन्द्रस्त्वमिति मघवानित्युक्तविवरणम् । तेजसा युक्त इति शेषः। वायुरित्यस्य त्वमन्तरिक्षे चरसीति विवरणम्। न केवलं सूर्यस्य तापकत्वं प्राणाधीनं, किं तु ज्योतिषां ग्रहाणां पतित्वञ्च । पर्जन्यत्वविवरणम्– **यदेति**॥ हे प्राण यदा त्वं पर्जन्यरूपोऽभिवर्षसि अथ तदा ते त्वदीया इमा मानुषादिप्रजाः कामाय यथेष्टमन्नं भविष्यतीति निश्चित्याऽनन्दरूपा आनन्दवत्यस्तिष्ठन्ति । हे प्राण वायो व्रात्यः व्रतनिष्ठः एकर्षिरथर्ववेदद्रष्टाऽसि । विश्वस्यात्ता यमादिश्च त्वमसि । सतां पतिः, संश्चासौ पतिश्चेति वा सत्पतिः त्वमेव । वयं तवाद्यस्य भोज्यस्य दातारः त्वत्पूजका इति यावत् । कुतः? हे मातरिश्व मातरिश्वन् त्वं नोऽस्माकं पिताऽसि । मातरिश्वनो भूतवायोः पितेति वा ॥ २-६ ॥

**नर**–इन्द्रस्त्वमिति मघवानित्युक्तविवरणम् । तेजसा युक्त इति शेषः। वायुरित्यस्य विवरणं **त्वमन्तरिक्ष इति**। सूर्यस्य ज्योतिषां ग्रहाणां पतित्वं च त्वदधीनमित्याह– **सूर्य इति** ॥ पर्जन्यत्वविवरणम् ॥ **यदेति** ॥ हे प्राण यदा त्वं पर्जन्यस्वरूपोऽभिवर्षसि अथ तदा ते त्वदीयाः इमा मानुषादिप्रजाः कामायान्नं यथेष्टमन्नं भविष्यन्तीति निश्चित्य आनन्दरूपाः आनन्दवत्यस्तिष्ठन्ति। हे प्राण त्वं व्रात्यो व्रतनिष्ठः । एकर्षिः अथर्वणवेदद्रष्टासि। विश्वस्यात्ता संहर्ता आदिश्च त्वमसि । सतां पतिः संश्चासौ पतिरिति वा। वयं तवाद्यस्य भोज्यस्य दातारः त्वत्पूजका इति यावत्। हे मातरिश्व मातरिश्वन् त्वन्नोऽस्माकं पितासि। मातरिश्वनो भूतवायोः पितेति वा॥ २-६ ॥

**उदय**–इन्द्रः त्वमसि मघवानित्यस्य विवरणम्। प्राणः चेष्टकः त्वमसि। तेजसा युक्तः रुद्रः असि । परिरक्षिता रक्षणकर्ता असि। अन्तरिक्षे आकाशे त्वं चरसि। वायुरित्यस्यैव विवरणमेतत्। सूर्यस्त्वमसि न केवलं सूर्यस्य तापकत्वं प्राणाधीनं किन्त्वन्यदप्यस्तीत्याह– **सूर्यस्त्वमिति** ॥ ज्योतिषां ग्रहाणां पतिः

स्वामी सूर्यस्त्वमसि। अतो न पुनरुक्तिः। हे प्राण यदा त्वं पर्जन्यरूपोऽभिवर्षसि। अथ तदा ते त्वदीया इमाः प्रजा मानुषादयः कामाय यथेष्टं अन्नं भविष्यतीति निश्चित्य आनन्दरूपाः सन्तुष्टाः सत्यः तिष्ठन्ति। हे प्राण त्वं व्रात्यः व्रतनिष्ठः। एकर्षिः मुख्यो ऋषिः अथर्वणः वेदद्रष्टा असीत्यर्थः। विश्वस्य सर्वस्य हर्ता संहर्तासि। सत्पतिः सतां विष्णवैकनिष्ठानां पतिः मातेव पालकोऽसि। वयं तव अद्यस्य भोज्यस्य। छान्दसत्वात् न ण्यत्। दातारः त्वत्परिचारका इत्यर्थः। कुतः हे मातरिश्व मातरिश्वन्। 'नङि सम्बुद्ध्योः' इति छान्दसत्वात् न प्रवर्तते। नोऽस्माकं पितासि पालकोऽसि। यद्वा मातरिश्वनः भूतवायोः पितेति व्याख्येयम्॥ २-६ ॥

उपनिषत्

**या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि । या मनसि सन्तता शिवां तां कुरु मोत्क्रमीः ॥ प्रणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् । मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञाश्च विधेहि न इति ॥ ७ ॥**

**टीका**—एव स्तुत्वा प्रकृतं तूच्यते— **या त इत्यादि**॥ या ते त्वदीया तनूः मूर्तिर्वाचि प्रतिष्ठिता, या श्रोत्रे, या च चक्षुषि, या च मनसि सन्तता सम्यक् व्याप्य वर्तमाना एवमन्येष्वपि तत्त्वेषु या प्रतिष्ठिता, तां शिवां शान्तां कुरु। मोत्क्रमीः वागादिभ्यस्तथोत्क्रमणं माऽकार्षीः। वागादिषु प्राणस्य प्रतिष्ठितत्वं कुतः? यत एतत्सर्वं वागादिकं प्राणस्य तव वशे वर्तते। न त्वां विना प्रवर्तितुं क्षमम्। न केवलमध्यात्मम्, किन्तु त्रिदिवे स्वर्गे यत्प्रतिष्ठितम्। अधिदैवादिकञ्चेति यावत्। वागादिषु स्थित्वा च त्वमस्मान् माता पुत्रानिव रक्षस्व पालय। श्रीः श्रियम्, प्रजाधारणशोभामिति यावत्, प्रज्ञां प्रज्ञानं प्रकाशकत्वशक्तिश्च नो अस्माकं विधेहि कुर्विति स्तुन्वन्तीति सम्बन्धः॥ ७॥

**वामन**—एवं स्तुवन्तो वागाद्यभिमानिनो देवा मुख्यप्राणमनुक्रमणेन शिवकर-त्वाय प्रार्थयन्ति— **या ते तनूरित्यादिना** ॥ इतिशब्दः प्राणसंवाद-

समाप्तिं सूचयन् भार्गवप्रश्नपरिहारसमाप्तिं सूचयति ।। २-७ ॥

**सत्य**–श्रीप्रज्ञाशब्दौ प्रकृतोपयोगितया व्याचष्टे– **प्रजाधारणशोभामिति यावदिति** ॥ **प्रकाशकत्वशक्तिश्चेति** ॥ २-७ ॥

**छलारी**–मूले वागादीनामुक्तेः पृथिव्यादीनामनुक्तेराह– **एवमन्येष्वपि तत्त्वेष्विति** ॥ पृथिव्यादीति शेषः ॥ **अधिदैवादिकमिति** ॥ इन्द्रियादिकमित्यर्थः ॥ २-७ ॥

**ताम्रपर्णी**–श्रीप्रज्ञाशब्दौ प्रकृतोपयुक्ततया व्याचष्टे– **प्रजाधारणशोभामिति यावदिति**॥ **प्रकाशकत्वं चेति**॥ २-७ ॥

**मङ्कालीय**–अधिदैवादिकमित्यादिपदेनाधिभूतं गृह्यते। एतद्विवरणात्मकोत्तरखण्डे अधिदैवाधिभूतधारकत्वस्योक्तत्वात्। श्रीप्रज्ञाशब्दौ प्रकृतोपयोगितया व्याचष्टे– **प्रजाधारणशोभामिति यावदिति** ॥ **प्रकाशकत्वशक्तिश्चेति** ॥ २-७ ॥

**अनन्तभट्टीय**–अधिदैवादिकश्चेति आदिपदेनाधिभूतं गृह्यते। एतद्विवरणात्मकोत्तरखण्डे अधिदैवाधिभूताधारकत्वस्योक्तत्वादिति॥ २-७ ॥

**खण्डार्थ**–एवं स्तुत्वा प्रकृतं तूच्यते– **या त इत्यादि** ॥ या ते त्वदीया तनूर्मूर्तिः वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि या मनसि सन्तता सम्यग् व्याप्य वर्तमाना एवमन्येषु तत्त्वेषु या प्रतिष्ठिता तां शिवां शान्तां कुरु । मोत्क्रमीः वागादिभ्यस्तथोत्क्रमणं मा कुरु । वागादिषु प्राणस्य प्रतिष्ठितत्वं कुतः? यत एतत् सर्वं वागादिकं प्राणस्य तव वशे वर्तते न त्वां विना प्रवर्तितुं क्षमम् । न केवलमध्यात्मम्। किं तु त्रिदिवे स्वर्गे यत् प्रतिष्ठितमधिदैवादिकं चेति यावत्, वागादिषु स्थित्वा त्वमस्मान् माता पुत्रानिव रक्षस्व पालय । श्रीः श्रियं प्रजाधारणशोभामिति यावत्, प्रज्ञां प्रज्ञानं प्रकाशकत्वशक्तिं नोऽस्माकं विधेहि कुरु, इति स्तुन्वन्तीति सम्बन्धः ॥ २-७ ॥

**नर**–एवं स्तुत्वा प्रकृतं तूच्यते— **या त इत्यादि** ॥ या ते त्वदीया तनूः

मूर्तिः वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि नियामकोऽसि । सन्तता सम्यग्व्याप्य वर्तमाना एवमन्येष्वपि तत्त्वेषु या प्रतिष्ठिता तां शिवां शान्तां कुरु। मोत्क्रमीः वागादिभ्यः तथोत्क्रमणं मा कार्षीः । वागादिषु प्राणस्य प्रतिष्ठितत्वं कुतः? यतः प्राणस्य तव वशे वर्तते न त्वां विना प्रवर्तितुं क्षमम् । न केवल-मध्यात्मं किन्तु त्रिदिवे स्वर्गे यत्प्रतिष्ठितं अधिदैवतादिश्चेति यावत्। वागादिषु स्थित्वा त्वमस्मान् माता पुत्रानिव रक्षस्व पालय श्रियं प्रजाधारणशोभाम् । प्रज्ञां प्रकाशकत्वशक्तिं च नः अस्माकं विधेहि कुरु। इति अस्तुवन्निति सम्बन्धः॥ २-७ ॥

**उदय–**अलं स्तुत्या मया किं विधेयमिति ब्रूषे चेत् त्वां वयं प्रार्थयामः त्वं शृणु इत्याहुः– **या त इति** ॥ या ते त्वदीया । तनूःस्वरूपम् । वाचि वागिन्द्रिये। प्रतिष्ठिता । या श्रोत्रे श्रोत्रेन्द्रिये । या चक्षुषि चक्षुरिन्द्रिये । या मनसि । सन्तता सम्यग्व्याप्य वर्तमाना । सर्वतत्त्वेषु स्थितेत्यर्थः। तां त्वन्मूर्तिं शिवां मङ्गलरूपां कुरु। मोत्क्रमीः। उत्क्रमणं मा कुर्वित्यर्थः। मदधिष्ठानेन भवतां किमिति चेत्तत्राह। एतत्सर्वं प्राणस्य तव वशे अधीनं वर्तते। न त्वां विना प्रवर्तितुं क्षमाः वयमित्यर्थः। न केवलमध्यात्ममेव तवाधीनम्। किन्तु त्रिदिवे स्वर्गे यत्प्रतिष्ठितं अधिदैवादिकं चेत्यर्थः। वागादिषु स्थित्वा माता पुत्रान् बालकानिव रक्षस्व। पालनं कुरु। श्रीः श्रियम् व्यत्ययात् । प्रजाधारणशोभाम्। प्रज्ञां प्रकाशत्वशक्तिम् । नः अस्माकं विधेहि देहि। धारणत्वं प्रकाशत्वं च अस्मभ्यं देहीत्यर्थः। अनेन स्थितिकर्तृत्वं मुख्यप्रणाधीनमित्युक्तं भवति। एतादृशोऽपि मुख्यप्राणो यस्मादात्मनः सकाशादभूत् तस्मात्परमात्मनो नारायणस्यैव सर्वोत्तमत्वं सिद्धमिति॥ २-७ ॥

**॥ इति द्वितीयः प्रश्नः ॥**

# अथ तृतीयः प्रश्नः

उपनिषत्

**अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ । भगवन् कुत एष प्राणो जायते । कथमायात्यस्मिन् शरीरे । आत्मानं वा प्रविभज्य कथं प्रतिष्ठते । केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्यात्ममिति ॥ १ ॥**

**टीका**–॥ **अथ हैनं कौसल्यः** ॥ प्रागुक्तं परमेश्वरो निखिलजगज्जन्मादिकर्तेत्यादि। तद्विवरणार्थोऽयमुत्तरो ग्रन्थः। भगवन्, कुतः कस्मात् पुरुषात् एष उक्तलक्षणः प्राणो जायते? स मिथुनमुत्पादयते? रयिश्च प्राणश्चेत्युक्तमपि परमेश्वराज्जन्म एवमाढ्यस्य कथं नाम सम्भवतीत्यभिप्रायः। अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद् बाणमवष्टभ्य विधारयामीत्युक्तम्। तत्र कथं कस्मात्कारणात् अस्मिन् शरीरे प्राण आयाति प्रवर्तते? आत्मानं प्रविभज्य कथं प्रतिष्ठते प्रतितिष्ठति? के ते विभागाः? तैश्च किं कुर्वत् कुत्र स्थानविशेषे तिष्ठतीति यावत्। तस्मिन्नुत्क्रान्ते सर्वेऽप्युत्क्रान्ता इत्युक्तम्। तत्र केन प्रविभागेन जीवादीनादायोत्क्रामति? प्राणस्यैतद्वशे यत् प्रतिष्ठितमित्युक्तम्। तत्र कथं केन रूपेण बाह्यमधिभूतादिकमभिधत्ते धारयति? कथञ्चाध्यात्ममभिधत्ते ? ॥ ३-१ ॥

**प्रकाशिका**–'एवमाढ्यस्य कथं नाम सम्भवति' इत्यत्र एवमेषोऽग्निस्तपत्येष सूर्य इत्यादिना बहुमहिमत्वेनोक्तस्यैवाऽऽढ्यस्येत्यर्थः। अभ्यधिकाशङ्काऽपि पृष्टस्यैव पुनः प्रश्न इति भावः॥ १ ॥

**छलारी**–॥ **प्रागुक्तमिति** ॥ प्रथमप्रश्ने रयिप्राणौ सृष्ट्वा तद्द्वाराखिलजगज्जन्मादिकर्तेत्युक्तम्। द्वितीयप्रश्नेऽपि आकाशादिमुख्यप्राणान्तदेवानां विष्णुसन्निधानेनैव धारकत्वं प्रकाशकत्वं चाभिप्रेतम्। प्रथमत एव विष्णौ प्रजापतिनामोक्त्या प्रजाशब्देन जगतः भगवज्जन्यत्वोक्त्या तस्य स्रष्टृत्वलाभात्पतिशब्देन पालकत्वोक्तेरिति भावः। अत्राश्वलायनेन कृतप्रश्नेषु पूर्वोक्ति तद्विवरणे बीजञ्च

कथयति– **स मिथुनमुत्पादयत इत्यादिना** ॥ **आध्यात्मिकमिति** ॥ कथमध्यात्ममिति मूले अध्यात्मशब्दस्य शरीरवाचकत्वादुत्तरत्र शरीरावयवानां कथनादत्राप्यध्यात्मशब्दात्तदेव गृह्यत इति भावः॥ ३-१ ॥

**ताम्रपर्णीय–**॥ **एवमाढ्यस्येति**॥ द्वितीयप्रश्नोक्तरीत्या गुणाढ्यस्येत्यर्थः। तदुक्तं न्यायविवरणे–

'यत्प्राप्तिर्यत्परित्याग उत्पत्तेर्मरणं तथा।
तस्योत्पत्तिर्मृतिश्चैव कथं प्राणस्य युज्यते'॥

इत्यादि माहात्म्यवचनान्मुख्यप्राणस्योत्पत्तिरिति॥ **इत्यभिप्राय इति** ॥ तेन न सिद्धार्थत्वं प्रश्नस्येति भावः। 'समवप्रविभ्यः स्थः' इति नियमात्प्रतिपूर्वस्य स्थाधातोः आत्मनेपदाप्रसक्तेराह– **प्रतिष्ठते प्रतितिष्ठतीति**॥ आत्मनेपदं छान्दसमिति भावः।

**मङ्कालीय–**॥ **अथ हैनं कौसल्यः** ॥ **प्रागुक्तमिति** ॥ प्रथमप्रश्ने प्रजापतिनामा परमेश्वरो रयिप्राणौ सृष्ट्वा तद्द्वाराऽखिलजगज्जन्मादिकर्तेत्युक्तम्। द्वितीयप्रश्नेऽपि आकाशादिमुख्यप्राणान्तदेवानां विष्णुसन्निधानेनैव धारकत्वं प्रकाशकत्वञ्चाभिप्रेतम्। प्रथमत एव विष्णोः प्रजापतिनामोक्त्या प्रजाशब्देन जगतो भगवज्जन्मोक्त्या तस्य स्रष्टृत्वं लब्धम्। पतिशब्देन पालकत्वञ्चेति भावः। आश्वलायनेन कृतप्रश्नेषु प्रथमः प्रश्नः सिद्धार्थ इत्याशङ्क्य परिहरति– **स मिथुनमुत्पादयत इत्यादिना** ॥ **एवमाढ्यस्येति** ॥ द्वितीयप्रश्नोक्तप्रकारेण महानुभावस्येत्यर्थः॥ **इत्यभिप्राय इति** ॥ तेन सिद्धार्थत्वं प्रश्नस्य नेत्युक्तं भवति। कथमित्यस्य कस्मात्कारणादिति व्याख्या । 'समविप्रविभ्यः स्थः' इति नियमात् प्रतिपूर्वस्थाधातोरात्मनेपदाप्रसक्तेराह– **प्रतिष्ठते प्रतितिष्ठतीति** ॥ आत्मनेपदं छान्दसमिति भावः। परिहारानुसारेण प्रश्नतात्पर्यमाह– **के ते विभागा इत्यादिना** ॥ अधिभूतादिकमित्यत्रादिपदेनाधिदैवं ग्राह्यम्॥ ३-१ ॥

**अनन्तभट्टीय–**॥ **अथ हैनं कौसल्यः** ।। अत्र परिहारवाक्यानुसारेण प्रश्नवाक्यतात्पर्यं कथितमनुसन्धेयम् ॥ **एवमाढ्यस्येति** ॥ द्वितीयखण्ड-प्रतिपादितसकलगुणपूर्णस्येत्यर्थः॥ ३-१ ॥

**खण्डार्थ–॥ अथ हैनं कौसल्यः ॥** प्रागुक्तं परमेश्वरोऽखिल-जगज्जन्मादिकर्तेत्यादि। तद्विवरणार्थोऽयमुत्तरो ग्रन्थः । भगवन्, कुतः कस्मात्पुरुषादेवमुक्तलक्षणः प्राणो जायते। स मिथुनमुत्पादयते रयिश्च प्राणश्चेत्युक्तमपि परमेश्वराज्जन्मैवमाढ्यस्य कथं सम्भवतीत्यभिप्रायः । अहमेवैतत्पञ्चधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीत्युक्तम् । तत्र कथं कस्मात् कारणादस्मिन् शरीरे प्राण आयाति प्रवर्तते। आत्मानं प्रविभज्य कथं प्रतिष्ठते प्रतितिष्ठति । के ते विभागाः? तैश्च किं कुर्वन् कुत्र स्थानविशेषे तिष्ठतीति यावत्। तस्मिन्नुत्क्रान्ते सर्वेऽप्युत्क्रान्ता इत्युक्तम्। तत्र केन प्रविभागेन जीवादीनादायोत्क्रामति? 'प्राणस्यैतद्वशे सर्वं त्रिदिवे यत् प्रतिष्ठितम्' इत्युक्तम् । तत्र कथं केन रूपेण बाह्यमधिभूतादिकमभिधत्ते धारयति? कथञ्चाध्यात्ममभिधत्ते? ॥ ३-१ ॥

**नर**–तृतीयप्रश्नप्रतिवचनमारभते– **अथेति** ॥ प्रागुक्तं परमेश्वरोऽखिलजगज्जन्मादिकर्तेति तदेव विवृणोति– **अथेति** ॥ भगवन् कुतः कस्मात्पुरुषादेष उक्तलक्षणः प्राणः जायते। यद्यपि भगवदुत्पन्नत्वमुक्तं तथाप्येवमाढ्यस्य कथं घटत इत्याशयः। प्राणस्य शरीरप्रवर्तकत्वमुक्तम्। तत्र कथं प्रतिष्ठते प्रतितिष्ठति। कति विभागाः । तैश्च किं कुर्वन् कुत्र स्थानविशेषे तिष्ठति। केन विभागेन जीवादीनादायोत्क्रामति। कथं केन रूपेण बाह्यमधिभूतादिकमभिधत्ते धारयति। केन रूपेणाध्यात्मं धारयति॥ ३-१ ॥

**उदय**– एवं सकलजीवजडात्मकप्रपञ्चस्य उत्पत्तिस्थितिकर्तृत्वं परमेश्वरस्य भगवत एव घटते नान्यस्येति परमकारुणिकेन गुरुणा उक्ते एवंविधमहिम्नो सकलजीवोत्तमस्य मुख्यवायोः वासुदेवात्मकश्रीनृहरेः सकाशाज्जनिर्घटत इति अभिप्रायेण कौसल्य आश्वलायनः प्रश्नयतीत्याह वेदपुरुषः– **अथ हेत्यादिना** ॥ अथ तत्प्रश्नप्रतिवचनानन्तरं ह साकल्येन तच्छ्रुत्वेत्यर्थः। एनं निकटवर्तिनं गुरुं कौसल्य आश्वलायनश्च पप्रच्छ प्रश्नं कृतवान्। हे भगवन् पूज्य । एषः पूर्वोक्तगुणविशिष्टो प्राणो मुख्यः । कुतः कस्मात् पुरुषात् जायते उत्पन्नो भवति। यद्यपि स मिथुनमुत्पादयतीत्यादिना भगवत्सकाशादुत्पत्तिरुक्ता तथाप्येवंविध-वीर्यस्य उत्पत्तिरेव कथं घटत इत्यभिप्रायः। 'अहमेव एतच्छरीरं धारयामि'

इत्युक्तम्। तत्र पृच्छति– **कथमायातीति** ।। कथं कस्मात् कारणात् अस्मिन् शरीरे प्राण आयाति प्रवर्तते। किञ्च, आत्मानं स्वरूपम् । प्रविभज्य प्रविभागं कृत्वा । कथं वा प्रतिष्ठते। प्रतिष्ठति । ते च प्रविभागाः के? तैश्च किं कुर्वन् कुत्र स्थानविशेषे तिष्ठतीत्यर्थः। प्राणोत्क्रमणेन सर्वदेवोत्क्रमणमुक्तम्। तच्च केन विभागेन जीवमादाय उत्क्रमते उत्क्रामति। सर्वेषां प्राणवशत्वमुक्तम्। तच्च कथं केन रूपेण बाह्यमधिभूतमभिधत्ते धारयति। कथञ्च केन रूपेण अध्यात्ममभिधत्ते। इमे मत्कृताः प्रश्नाः त्वया वक्तव्याः ।। ३-१ ।।

### उपनिषत्

**तस्मै स होवाचातिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति । तस्मात्तेऽहं ब्रवीमि । आत्मत एष प्राणो जायते । यथैषा पुरुषे च्छाया एतस्मिन्नेतदाततम् ।। २ ।।**

### भाष्यम्

**आत्मतः परमात्मतः।। २ ।।**

**टीका**–इत्येवं पृष्टवते तस्मै स होवाच। यस्मादेवं त्वमतिप्रश्नानतिशयितान् प्रष्टव्यार्थान् पृच्छसि तस्मात्त्वं ब्रह्मिष्ठो वेदविचारादिमानसि। न ह्यन्यथैवंविधाः प्रश्नांस्सम्भवन्तीति। यस्मात् ब्रह्मिष्ठोऽसि तस्मादहं ते तुभ्यमुत्तरं ब्रवीमीति तं प्रशस्याऽऽद्यप्रश्नोत्तरमुच्यते– **आत्मत इति**।। एष एवं महामाहात्म्योऽपि प्राणः आत्मतो जायते। तत्कथम्? यथा खल्वेषा च्छाया पुरुषे शरीरे आतता अत्यन्तं शरीराधीना वर्तते एवमेतस्मिन्नात्मन्येतत्सर्वं प्राणादिकमाततम्। प्राणादप्याढ्यतमत्वादात्मनस्ततः प्राणस्य जन्म सम्भवत्येवेत्यभिप्रायः। आत्मशब्दस्यानेकार्थकत्वात्कोऽत्राभिप्रेत इति न ज्ञायते। तस्मादाह– **आत्मत इति**।। नह्यन्यस्य प्राणजनकत्वादिकं सम्भवतीति भावः।। ३-२ ।।

**वामन**–सर्वप्राणधारको मुख्यप्राण इति ह्युक्तम्। अथ कुत एष प्राणो जायत इत्याद्याश्वलायनप्रश्नस्यात्मत एष प्राणो जायत इत्याद्युत्तरमाह । अत्रात्मत इत्ये-

तत्पदमनूद्य परमात्मत इति व्याख्याति। एतदादिवाक्यानामभिप्रायं विष्णो-र्वायुरित्यादिप्रभञ्जनवाक्येन प्रकाशयति। एतस्मिन् परमात्मन्येतत्प्रकृत्यादिकं सर्वमाततम्। वागीशानादिकं तु प्राण आततम् ॥ ३-२ ॥

**श्रीनिवास**–भाष्यस्य न्यायगर्भत्वमुपपादयति– **नह्यन्यस्य प्राणजनक-त्वादिकमिति** ॥ ३-२ ॥

**छलारी–ब्रह्मिष्ठ इति** ॥ ब्रह्मशब्दाद्वेदार्थकादतिशयार्थ इष्ठन्प्रत्ययः। प्रकृतेऽति-शयार्थस्तु विचारज्ञानादिकमेवेति भावः। प्रशस्य स्तुत्वा॥ **अनेका-र्थत्वादिति**॥ मनोदेहाद्यर्थकत्वादिति भावः। अर्थान्तग्रहणे बाधकमाह– **नहीति** ॥ ३-२ ॥

**ताम्रपर्णी**–

'महत्त्वान्महतां विष्णुः कर्ता प्राणस्य एकराट्।
किन्नाम न सृजेदेषः येन शक्त्येदमावृतम्' इति॥

श्रुतेस्ततोऽपि माहात्म्याद्विष्णोरिति न्यायविवरणं मनसि निधाय यथैषा पुरुषे च्छायेत्यादेरभिप्रायमाह– **प्राणादपीति**॥ ३-२ ॥

**मङ्कालीय**–प्रशस्य स्तुत्वा ॥ ३-२ ॥

**अनन्तभट्टीय**–॥ **प्राणादपीति** ॥ सर्वस्यानादिसत्तास्वभावादिकं भगवद-त्यन्ताधीनमिति ह्यत्रोच्यत इति भावः॥ ३-२ ॥

**खण्डार्थ**–इत्येवं पृष्टवते तस्मै स होवाच। यस्मादेवं त्वमतिप्रश्नानतिशयितान् प्रष्टव्यार्थान् पृच्छसि तस्मात् त्वं बह्मिष्ठो वेदविचारादिमानसि। न ह्यन्यथैवंविधाः प्रश्नाः सम्भवन्तीति। यस्माद् ब्रह्मिष्ठोऽसि तस्मादहं ते तुभ्यमुत्तरं ब्रवीमीति। तं प्रशस्याऽद्यप्रश्नोत्तरमुच्यते– **आत्मत इति** ॥ परमात्मत इत्यर्थः। एष एवं महामहिमोऽपि प्राण आत्मतो जायते। तत्कथम्? यथैषा छाया पुरुषे शरीरे आतताऽत्यन्तं शरीराधीना वर्तते एवमेवैतस्मिन् आत्मनि एतत् सर्वं प्राणादिक-माततम्। प्राणादप्याढ्यतमत्वात् परमात्मनः। ततः प्रणस्य स्वजन्म सम्भवत्येवे-त्यभिप्रायः ॥ ३-२ ॥

**नर**–एवं पृष्टवते तस्मै अश्वलायनाय स होवाच। यस्मादेवं त्वमतिशयित-प्रष्टव्यार्थान् पृच्छसि, तस्मात्त्वं ब्रह्मिष्ठो वेदविचारादिमानसि। तस्मादहं ते तुभ्यं उत्तरं ब्रवीमि। एवं प्रशंस्याद्यप्रश्नोत्तरमाह– **आत्मत इति** ॥ एष एवम्भूतोऽपि प्राणः परमात्मतो जायते। तत्कथं यथा खल्वेषा च्छाया पुरुषशरीरे आतता अत्यन्तं शरीराधीना वर्तते। एवमेतस्मिन् परमात्मनि एतत्सर्वं प्राणादिकं आततं प्राणादप्याढ्यत्वात्परमात्मनः ततः प्राणस्य जन्म सम्भवत्येव ॥ ३-२ ॥

**उदय**–इति पृष्टवते बहुमानपुरःसरं गुरुराहेत्याह वेदपुरुषः– **तस्मै स होवाचे-त्यादिना** ॥ तस्मै कौसल्याय स गुरुः ह साकल्येन उवाच। 'गुरुणा श्लाघिताः शिष्याः ख्यातिं लभन्ते' इति न्यायेन तं प्रशंसति– **अतिप्रश्नानिति** ॥ यस्मात् अतिप्रश्नान् अतिशयितान् प्रष्टव्यार्थान् पृच्छसि। सूक्ष्मबुद्धिरसीत्यर्थः। तस्मात् त्वं ब्रह्मिष्ठोऽसि वेदविचारवानसि। इष्ठनो रूपम् । अन्यथा एवंविधप्रश्नासम्भव इति भावः। तस्मात् कारणात् अहं ते तुभ्यं उत्तरं ब्रवीमि इत्याह गुरुः। आद्यप्रश्नस्योत्तरमाह– **आत्मत एवेति** ॥ एषः महामाहात्म्यो प्राणः मुख्यः आत्मत एव परब्रह्मणः वासुदेवाख्यादेव जायते उत्पन्नो भवति। यद्यपि आत्मशब्दस्य अनेकार्थवाचित्वम् । तथाप्यन्यस्य जनकत्वासम्भवान्मुख्य एव ग्राह्यः। तत्र दृष्टान्तेन द्रढयति– **यथेति** ॥ यथैषा च्छाया पुरुषे शरीरे आतता शरीराधीनेत्यर्थः। तथा एतस्मिन् परमात्मनि एतत् प्राणादिकं सर्वं जीवजडात्मकं आततं अधीनं वर्तत इत्यर्थः। प्राणस्य रुद्राद्युत्तमत्वेऽपि परमात्मनः अत्युत्तमत्वात् भगवतः सकाशाज्जन्म घटत इति भावः। तदेतदभिप्रेत्य 'ज्ञोऽत एव' इति सामान्योक्तावपि 'श्रेष्ठश्च' इति पुनः भगवानसूत्रयत्। सूत्रव्याख्या च स्फुटतरं तातचरणप्रणीत श्रीनृसिंहप्रसादे द्रष्टव्या॥ ३-२ ॥

### उपनिषत्

**मनोकृतेनायात्यस्मिञ्छरीरे । यथा सम्राडेवाधिकृतान् विनियुङ्क्त एतान् ग्रामानधितिष्ठस्वैतान् ग्रामान-**

**धितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक् पृथगेव सन्निधत्ते ॥ ३ ॥**

**भाष्यम्**

**'विष्णोर्वायुः समुत्पन्नो वायोः सर्वाश्च देवताः।**
**प्राणाद्यास्तान्नयन् प्राण आज्ञापयति राजवत्।**
**स्वयञ्च पञ्चरूपस्सन् दद्यान्मोक्षादिकं प्रभुः॥' इति प्रभञ्जने॥**

**टीका**–द्वितीयप्रश्नस्योत्तरं– **मन इति**॥ स चायं प्राणो मनोकृतेन मनःकृतेन, मनः परं ब्रह्म, तत्कृतेन तन्निमित्तेन तत्प्रेरणयेति यावत्, आत्मनः प्रकृतस्य मनोनिमित्तेनेच्छयेति वा। आयात्यस्मिन् शरीर इति। आत्मानं वेत्यादिप्रश्नोत्तररूपे 'यथा सम्राड्' इत्यादिवाक्ये प्राणादिपञ्चकस्य मुख्यप्राणनियोज्यत्वं ततो भिन्नत्वलिङ्गं प्रतीयते। 'पुण्येन पुण्यं लोकं नयति' इत्यादिमोक्षदातृत्वादिलिङ्गेन तेनाभेदोऽपि। तस्य तन्नियोज्येष्वसम्भवात्। अतो व्यामिश्रमिव प्रतीयमानं वाक्यं समञ्जसीकर्तुम् 'आत्मत एष प्राणो जायते' इति वाक्यार्थसहितैतद्वाक्यार्थे समाख्यास्मृतिमेव पठति– **विष्णोरिति**॥ ततश्चैवं योजनीयम्–यत् पृष्टं त्वयाऽऽत्मानं वा प्रविभज्येति तत्रास्ति विवेक्तव्यम्। द्विविधं तावत्प्राणादिपञ्चकम्। एकं मुख्यप्राणाज्जातं, ततोऽतिरिक्तम्। अपरं तदात्मकमिति। तत्र यथा लोके सम्राट् सार्वभौमोऽधिकृतान्नियोगिनो विनियुङ्क्ते। कथम्? त्वमेतान् पाटलीपुत्रादीन् ग्रामानधितिष्ठस्व, तदाधिपत्येन तिष्ठेत्येकम्। अन्यच्च त्वमेतान् कौशाम्बी-प्रभृतीन् ग्रामानधितिष्ठस्वेति। एवमेवैष मुख्यप्राण इतरान् भिन्नानात्मनो जात-त्वादुपचारेणात्मप्रविभागान् प्राणान् वायून् पृथक् पृथगेव स्थानेषु सन्निधत्ते स्थापयति। स्वयञ्च तत्तत्क्रियाप्रवर्तकतया तत्र प्राणादिपञ्चरूपोऽवतिष्ठत इत्याशयः॥ ३-३ ॥

**लघ्मन**–कथमायात्यस्मिन् शरीर इत्यस्योत्तरमाह– **मनोकृतेनेति** ॥ 'यन्मनसा न मनुते' इत्यादेर्मनसा गन्तुमशक्यत्वान्मनोकृतः परमात्मा तेन प्रेरित आयात्यस्मिन् शरीरे । यथा सम्राडित्यादेरर्थं 'तान्नयन्प्राण' इत्यादिवाक्यशेषेण

व्याख्याति॥ ३-३ ॥

**श्रीनिवास**–॥ **ततो भिन्नत्वं लिङ्गमिति** ॥ मुख्यप्राणाद्भिन्नत्वज्ञापकम्। तेन मुख्यप्राणादिभेदोऽपि प्राणादिपञ्चकस्य प्रतीयत इत्यन्वयः। नन्वथापि नियोज्यानामेवास्तु प्रतिपाद्यतेत्यत आह– **तस्येति** ॥

**छलारी– द्वितीयप्रश्नस्येति** ॥ मुख्यप्राण अस्मिन् शरीरे कथमायातीति द्वितीयप्रश्नस्येत्यर्थः। मनोकृतेनेत्यत्र ककारस्य हशत्वाभावात् 'हशि च' इत्युत्वाप्राप्तेरुत्वं छान्दसमित्यभिप्रेत्याह– **मनःकृतेनेति** ॥ मनःशब्दस्य रुत्वे 'खरसवसानयोः' इति विसर्गे 'कुप्वोः कः पौच' इति जिह्वमूलीयो विसर्गो वेत्यभिप्रेत्याह– **मनःकृतेनेति** ॥ मनःशब्दस्यान्तःकरणार्थकत्वमभिप्रेत्यापि व्याचष्टे– **आत्मनः प्रकृतस्येति** ॥ पूर्वप्रकृतपरमात्मन इत्यर्थः। इच्छायाः मनोजन्यत्वेन मनोनिमित्तत्वमित्याशयः॥ **ततो भिन्नत्वमिति**॥ ततः मुख्यप्राणात् प्राणादिपञ्चकस्य भिन्नत्वलिङ्गं मुख्यप्राणनियोज्यत्वं प्रतीयते। भेद इति यावत्। **मोक्षदत्वलिङ्गेनेति**। पुण्यं लोकं नयतीत्यत्र पुण्यलोकशब्देन मुख्यत्वान्मोक्षस्यैव ग्रहणादिति भावः। **तेनाभेदोऽपीति**॥ तेन मुख्यप्राणेन तेन मोक्षदत्वलिङ्गेन चेत्यर्थः। 'स एनान् ब्रह्म गमयति' इति 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति च विष्णवनन्तरं वायोरेव मोक्षदत्ववचनादिति भावः। सन्निधत्ते स्थापयतीत्यर्थः॥ ३-३ ॥

**ताम्रपर्णी**–॥ **मनः परं ब्रह्मेति** ॥ 'मननान्मन उद्दिष्टः' इति वचनादिति भावः। प्राचीनटीकायां तु यन्मनसा न मनुते इत्यादेर्मनसा गन्तुमशक्यत्वान्मनोऽकृतः परमात्मा तेन प्रेरित आयात्यस्मिन् शरीर इति व्याख्यातम् ॥ **आत्मनः प्रकृतस्येति** ॥ तथाचात्मन इति विभक्तिविपरिणामेन योजनीयमिति भावः ॥ **इत्यादिमोक्षदत्वलिङ्गेनेति** ॥ इत्यादावुपलक्षणया ज्ञानेन मोक्षमिति च द्रष्टव्यमिति वक्ष्यमाणरीत्या मोक्षदत्वलिङ्गेनेत्यर्थः। यद्वा श्लोके प्राणस्य पञ्चधा विभवनं विज्ञायामृतमश्नुत इति पञ्चधा विभेदज्ञानस्य मोक्षहेतुत्वलिङ्गेनेत्यर्थः॥ **आत्मनो जातत्वादुपचारेणेति** ॥ अन्यथा प्रश्नाननुगुणः

परिहारः स्यादिति भावः। एतेन वायोः सर्वाश्च देवताः प्राणाद्या इति भाष्यमुक्तार्थं भवति॥ ३-३ ॥

**मङ्कालीय**–मनोकृतेनेत्यत्र ककारस्य हश्त्वाभावात् हशि चेत्युत्वाप्राप्तेः उत्वं च्छान्दसमित्यभिप्रेत्याह– **मनःकृतेनेति** ॥ **मनः परं ब्रह्मेति** ॥ 'मनना-न्मन उद्दिष्टः' इति वचनात् 'मनो ब्रह्म' इति श्रुतेश्चेति भावः॥ **आत्मनः प्रकृतस्येति** ॥ प्रकृतत्वादात्मन इत्यध्याहार इति भावः ॥ **आत्मानं वेत्यादिप्रश्नेति** ॥ आत्मानं प्रविभज्य कथं प्रतिष्ठत इति प्रश्नेत्यर्थः ॥ **मोक्षदातृत्वेति** ॥ पुण्य-लोकशब्देन मुख्यत्वान्मोक्षग्रहणादिति भावः। 'स एनान् ब्रह्म गमयति' 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इत्युक्ते-र्मोक्षदातृत्वं मुख्यप्राणस्य सर्वप्राणधारको मुख्यप्राण इति ह्युक्तम्। अथ कुत एष प्राणो जायत इत्याद्याश्वलायनप्रश्नस्यात्मत एष प्राणो जायत इत्याद्युत्तरमाह लिङ्गम्॥ **व्यामिश्रमिवेति** ॥ विरुद्धार्थमिवेत्यर्थः। आत्मनो जातत्वादुप-चारेणात्मप्रविभागानित्येतत्। के ते विभागा इत्यादिविभागप्रश्नोत्तरम्। भिन्नेषु भागत्वमुपचारेण घटनीयमिति भावः। स्वयं च तत्तत्क्रियेत्यादिकोऽर्थः प्राणः स्वयं प्रतिष्ठत इति श्रुत्या ध्वनित इत्याशयः॥ ३-३ ॥

**अनन्तभट्टीय–प्राणेति** ॥ आदिपदेन यथैषेति वाक्योक्तमाहात्म्यं गृह्यते॥ **मन इति** ॥ 'मनो ब्रह्म' इति श्रुतेरिति भावः। पुण्यपदस्य ज्ञानोपलक्षणत्वा-न्मोक्षदत्वादिलिङ्गेनेत्युक्तम्। अधिकृतानित्युक्त्वाऽधितिष्ठस्वेत्येकवचनं कथं युज्यत इत्यत एतान्ग्रामानिति वाक्यं व्याचष्टे– **त्वमिति**॥ 'समवप्रविभ्यः स्थः' इत्यात्मनेपदनियमात्पदव्यत्ययश्छान्दस इत्यभिप्रेत्य तिष्ठेत्युक्तम् ॥ ३-३ ॥

**खण्डार्थ**–द्वितीयप्रश्नोत्तरं– **मन इति** ॥ स चायं प्राणो मनोकृतेन मनः कृतेन मनः परं ब्रह्म तत्कृतेन तन्निमित्तेन तत्प्रेरणयेति यावत्, आत्मनः प्रकृतस्य मनोनिमित्तेनेच्छयेति वा । आयात्यस्मिञ्छरीर इति । आत्मानं वेत्यादिप्रश्नोत्तरं– **यथा सम्राडित्यादि** ॥ अस्यैवं योजना । यत् पृष्टं त्वयाऽऽत्मानं वा प्रविभज्येति तत्रास्ति विवेक्तव्यम् । द्विविधं तावत् प्राणादिपञ्चकम् । एकं मुख्यप्रणाज्जातं

ततोऽतिरिक्तम्, अपरं तदात्मकमिति। तत्र यथा लोके सम्राट् सार्वभौमोऽधिकृतान् नियोगिनो विनियुङ्क्ते, कथम् ? त्वमेतान् पाटलीपुत्रादीनधितिष्ठस्व तदाधिपत्येन तिष्ठेत्येकम्, अन्यश्च त्वमेतान् कौशाम्बीप्रभृतीन् ग्रामानधितिष्ठस्वेति एवमेष मुख्यप्राण इतरान् भिन्नानात्मनो जातत्वादुपचारेणाऽत्मप्रविभागान् प्राणान् वायून् पृथक्पृथगेव स्थानेषु सन्निधत्ते संस्थापयति। स्वयञ्च तत्तत्क्रियाप्रवर्तकतया तत्र प्राणादिश्चरूपोऽवतिष्ठत इत्याशयः ॥ ३-३ ॥

**नर**—द्वितीयप्रश्नोत्तरमाह— **मन इति** ॥ मनोकृतेन मनसः कृतेन सर्वज्ञपरमात्म-प्रेरणया प्रकृतपरमात्मेच्छानिमित्तेन वा प्राणः अस्मिन् शरीरे आयाति। तृतीयप्रश्नोत्तरमाह— **यथेति** ॥ यथा लोके सम्राट् सार्वभौमो राजा अधिकृतान् नियोगिनो विनियुङ्क्ते। कथं त्वमेतान् पाटलिपुत्रादीन् ग्रमानधितिष्ठस्व तदाधिपत्ये तिष्ठस्वेत्येकम्। अन्यं त्वमेतान् कोशाम्बिप्रभृतीन् ग्रामानधितिष्ठस्वेति। एवमेषः मुख्यप्राणः इतरान् स्वभिन्नान् प्राणापानादि-नामकान् स्वपुत्रान् पृथक्पृथगेव स्थानेषु सन्निधत्ते संस्थापयति। स्वयञ्च तेषु तत्क्रियाप्रवर्तकतया पञ्चरूपोऽवतिष्ठते॥ ३-३ ॥

**उदय**—शरीरे प्राणः कस्मादायातीत्युक्तस्य प्रतिवचनमाह— **मन इति** ॥ मनः परं ब्रह्म। 'मनु अवबोधने' इति धातोः ज्ञानात्मनानेन कृतेन तत्प्रेरणया अस्मिन् शरीरे आयाति प्रवर्तते। प्राण इत्यनुषङ्गः। आत्मानं प्रविभज्येत्युक्तप्रतिवचनं सदृष्टान्तमाह— **यथेति** ॥ लोके यथा सम्राट् सार्वभौम एव अधिकृतान् स्वसेवकान् परिचारकान् विनियुङ्क्ते। विशेषेण नियोजयति। कथं हे दास त्वं एतान् ग्रामान् मया आज्ञापितान् कतिचित्सङ्ख्याकान् अधितिष्ठस्व। तत्रस्थ अधिकारं कुरु। एवमेव पुनः एवमेव एषः प्राणःमुख्यः इतरान् प्राणान् स्वदासभूतान् तन्नामकानेव स्वयमाविश्य पृथक् पृथगेव स्थानेषु सन्निधत्ते स्थापयति। तत्तत्क्रियाप्रवर्तकत्वेन स्वयं प्राणादिपञ्चरूपो वा तिष्ठते इत्यर्थः। अनेन प्राणादिपञ्चकस्य मुख्यप्राणजातत्वं तदात्मकत्वञ्चोक्तं भवति। तदेतत्—

'विष्णोर्वायुः समुत्पन्नः वायोः सर्वाश्च देवताः ।

प्राणाद्यास्तान्नयन् प्राणः आज्ञापयति राजवत्॥'
'स स्वयं पञ्चरूपः सन् दद्यान्मोक्षादिकं प्रभुः ॥'
इति भाष्यकाराः अवदन् ॥ ३-३ ॥

### उपनिषत्

**पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते। मध्ये तु समानः। एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति। हृदि ह्येष आत्मा॥ ४ ॥**

**टीका**–पृथक् पृथगित्युक्तं विव्रियते– **पायूपस्थ इत्यादि** ॥ पायुश्चोपस्थश्च पायूपस्थम्। तत्र मलादेरपनयनात् अपानं वायुमात्मनो रूपेणापानेनाधिष्ठितं सन्निधत्त इति सम्बन्धः। चक्षुश्च श्रोत्रञ्च चक्षुःश्रोत्रम्। तस्मिन् मुखनासिकाभ्यां सह मुखे नासिकायां चेति यावत्, प्राणः स्वयं मुख्य एव श्वासादिप्रणयनात् प्राणनाम्ना रूपेण प्राणवायुमधिष्ठाय प्रतितिष्ठति। समानस्तु समाननामानं वायुमधिष्ठाय मध्ये प्राणापानयोर्नाभिदेश इति यावत्, प्रतितिष्ठति । स चैष यस्मादेतद्धुतं भुक्तमन्नं समं यथाशरीरावयवं नयति तेन समाननामेति शेषः। किं तेन? तस्मादन्नस्य समीकरणादेताः सप्तार्चिषः सप्तज्ञानेन्द्रियवृत्तयो भवन्ति। नन्वात्मैव विषयसंसर्गेणताननुभविष्यति। किमिन्द्रियवृत्तिभिरिति। मैवम्। हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तते। अतः कथं तस्याणोर्विषयसङ्गतिः स्यादिति॥ ४॥

**वामन**–आत्मानं प्रविभज्य कथं प्रतिष्ठित इत्यस्योत्तरमाह– **पायूपस्थ इत्यादिना** ॥ अत्र द्वन्द्वसमासस्यैकवद्भावो विहितः। पायूपस्थयोरपानं प्रस्थापयति। चक्षुःश्रोत्रयोर्मुखनासिकाभ्यां सहितयोः प्राणः स्वयं प्रतिष्ठते। मध्यदेशे समानस्तस्माद्धि जीवस्यैताः सप्तार्चिषः सप्तेन्द्रियजन्यानि ज्ञानानि भवन्ति। हृदि ह्येष परमात्मा तिष्ठति। तस्मात्समानस्तत्र वर्तते। अथवा हृदि हि जीव आत्मा तिष्ठति तस्मात्तस्य तत्रस्थात्सप्तज्ञानान्युत्पद्यन्ते ॥ ३-४ ॥

**प्रकाशिका**–'सप्तज्ञानेन्द्रियवृत्तयः' इत्यत्र घ्राणरसनचक्षुःश्रोत्रत्वङ्मनो-बुद्धिभेदेन सप्तज्ञानेन्द्रियवृत्तयो भवन्तीत्यर्थः॥ ४ ॥

**श्रीनिवास**–मोक्षदत्वादिलिङ्गस्य तन्नियोज्येषु मुख्यप्राणनियोज्येषु समानो नाभिदेशग इति वाक्यमनुस्मृत्याह– **नाभीति** ॥ **यथेति** ॥ यस्य शरीरावयवस्य यावानन्नरसो अपेक्षितस्तावन्तमेव नयति न न्यूनं नाधिकमिति यावत्॥ **सप्तज्ञानेन्द्रियेति** ॥ मनोबुद्धिसहितानि चक्षुरादीनि पञ्चेति ज्ञानेन्द्रियाणां सप्तत्वम्। मनोबुद्धी तु द्वादशेत्युक्तेः॥ ३-४ ॥

**छलारी**–मुखनासिकाभ्यां सहेति। सहितेत्यर्थः। ततश्च मुखनासिका चक्षुःश्रोत्रश्चेति चतुर्षु स्थलेषु प्राणस्तिष्ठतीत्यर्थः। अत्र श्रुतौ स्वयमित्युक्तेः एतच्चतुर्णामिन्द्रियाणां विशेषतो मोक्षोपयोगित्वं सूच्यते। चक्षुषः हरिप्रतिमार्शन-साधनत्वेन श्रोत्रस्य सच्छास्त्रश्रवणसाधनत्वेन मुखस्य स्वाध्यायप्रवचनकारणत्वेन नासिकायास्तुलस्यादिनिर्माल्याघ्राणनकारणत्वेन ज्ञानसाधनत्वात्। पायूपस्थयोस्तु शुद्धिकारणत्वेन साक्षाज्ज्ञानोपयोगित्वाभावेन स्वयमिति नोक्तम्। 'हृदि ह्येष आत्मा' इत्यस्य प्रकृतोपयोगादर्शनात्तत्सङ्गमयति– **नन्विति** ॥ ३-४ ॥

**ताम्रपर्णीय–पायूपस्थमिति**॥ प्राण्यङ्गानां द्वन्द्वैकवद्भावविधानादिति भावः॥ **स्वयं मुख्य एवेति**॥ यद्यपि पायूपस्थेऽपि मुख्ये एव। अपानरूपेणा-पानमधिष्ठाय वर्तते। तथापि श्वासोच्छ्वासप्रवर्तकत्वं मुख्यस्यैव। दासस्य त्वदधिष्ठानत्वमात्रम्। पाय्वादौ तु मलादेरपनयनं दासकर्म। मुख्यस्य तु तन्नियामकत्वमिति भेदादेवमुक्तिः। अत एव तत्र मलादेरपनयनमपानवायुं आत्मनो रूपेणापानेनाधिष्ठितमित्युक्तम्। अत्र तु स्वयं मुख्य एव श्वासादि-प्रणयनात्प्राणनाम्ना रूपेणेत्युक्तम्। तार्किकमतावष्टम्भेन शङ्कते– **नन्विति** ॥ व्याप्तत्वादिति भावः॥ **स्वरूपेणेति** ॥ हस्तपादादिविशिष्टतया वर्तत इत्यर्थः॥ **अणोरिति**॥ ननु स्वरूपेणाणोरपि जीवस्य 'गुणाद्वालोकवत्' इति प्रकाशरूपेण व्याप्तत्वाद्विषयसङ्गतिर्भविष्यतीति चेत्। शरीर एव प्रकाशतो व्याप्तत्वेन विषयदेशे तदभावात्। बहिर्निर्गमनं तु स्वरूपप्रकाशस्य बाह्येन्द्रियेणेति भावः।

**सप्तज्ञानेन्द्रियवृत्तय इति**।। चक्षुरादीनि पञ्च मनोबुद्धीत्येवं ज्ञानेन्द्रियाणि सप्तेति भावः।। ३-४ ।।

**मङ्गालीय–॥ पायूपस्थमिति** ॥ प्राण्यङ्गत्वादेकवद्भाव इति भावः॥ **तेन समाननामेति शेष इति** ॥ कश्चैषां व्यापार इति प्रश्नपरिहारे समानोदानपदयोः प्रवृत्तिनिमित्तस्य श्रुतावुदितत्वात्तदनुसारेणापानादिपदेष्वपि तदुक्तिरिति ज्ञेयम्। किं तेनेति तस्मादित्यस्यावतारिका ॥ **सप्त ज्ञानेन्द्रिवयवृत्तय इति** ॥ चक्षु-रादिज्ञानेन्द्रियाणां मनोबुद्धिभ्यां सह सप्तत्वं द्रष्टव्यम्। 'हृदि ह्येष आत्मा' इत्यस्य प्रकृतोपयोगादर्शनात्तत्सङ्गमयितुं शङ्कते– **नन्विति** ॥ **विषयसंसर्गेणेति** ॥ तस्य ज्ञानरूपत्वादिति भावः ॥ ३-४ ॥

**अनन्तभट्टीय–**कश्च तेषां व्यापार इति प्रश्नस्य परिहाराय समानोदानपदयोः प्रवत्तिनिमित्तस्य श्रुतावुदितत्वात्तदनुसारेणापानादिपदेष्वपि तदुक्तिरिति ज्ञेयम् ॥ **आत्मैवेति** ॥ तस्य ज्ञानस्वभावत्वादिति भावः॥ ३-४ ॥

**खण्डार्थ–**पृथक् पृथगित्युक्तं विव्रियते– **पायूपस्थ इत्यादि**। पायुश्चोपस्थश्च पायूपस्थम्, तत्र मलादेरपनयनादपानं वायुमात्मनो रूपेणापानेनाधिष्ठितं सन्निधत्त इति सम्बन्धः। चक्षुश्च श्रोत्रञ्च चक्षुःश्रोत्रं तस्मिन्, मुखनासिकाभ्यां सह मुखे नासिकायाश्चेति यावत्, प्राणः स्वयं मुख्य एव श्वासादिप्रणयनात् प्राणनाम्ना स्वरूपेण वायुमधिष्ठाय प्रतिष्ठते प्रतितिष्ठति। समानस्तु समानवायुमधिष्ठाय मध्ये प्राणापानयोर्नाभिदेश इति यावत्, प्रतिष्ठिति। स एष यस्मादेतद्धुतं भुक्तमन्नं समं यथाशरीरावयवं नयति तेन समान इति शेषः। किं तेन ? तस्मादन्नस्य समीकरणाद्धेतोः सप्तार्चिषः सप्तज्ञानेनन्द्रियवृत्तयो भवन्ति। नन्वात्मैव विषयसंसर्गेणताननुभविष्यति किमिन्द्रियवृत्तिभिरिति ? मैवम्। हृदि ह्येष आत्मा जीवः स्वरूपेण वर्तते। अतः कथं तस्याणोः विषयसङ्गतिः स्यादिति ॥ ३-४ ॥

**नर–**पृथक् पृथगित्युक्तं विवृणोति– **पायूपस्थ इति** ॥ पायुश्च उपस्थश्च पायूपस्थं तत्र मलादेरपनयनादपानं स्वाधिष्ठितं संस्थापयति। चक्षुश्च श्रोत्रं च चक्षुःश्रोत्रं तत्र मुखनासिकाभ्यां सह मुखे नासिकायाश्चेति यावत्। प्राणः स्वयं

मुख्य एव श्वासादिप्रणयनात्प्राणनाम्ना रूपेण स्वपुत्रं प्राणवायुमधिष्ठाय प्रतितिष्ठति। समाननामा स्वपुत्रं समानवायुं अधिष्ठाय मध्ये प्राणापानयोः नाभिदेशे प्रतितिष्ठति। स चैष यस्मादेतद्धुतं भुक्तमन्नं समं यथा शरीरावयवं नयति तेन समाननामा । किं तेन तस्मादन्नस्य समीकरणादेताः सप्तार्चिषः सप्तज्ञानेन्द्रियवृत्तयो भवन्ति। नन्वात्मैव विषयसंसर्गेण विषयाननुभविष्यति किं विषयीकरणलक्षणेन्द्रियवृत्तिभिरित्यत्राह– **हृदीति** ॥ एष आत्मा जीवः अणुस्वरूपेण हृदि वर्तते अतः कथं तस्य विषयसङ्गतिः स्यात्॥ ३-४ ॥

**उदय**–पृथक् पृथगित्युक्तं विवृणोति– **पायूपस्थ इत्यादिना** ॥ पायुश्च उपस्थश्च तत्र । प्राण्यङ्गत्वादेकवद्भावः। अपानं मलादेरपनयनादपानवायुम् । अपाननाम्न आत्मनो रूपेणाधिष्ठितं सन्निधत्त इति सम्बन्धः। चक्षुश्च श्रोत्रश्च तस्मिन्। मुखनासिकाभ्याम् । छान्दसत्वात् । मुखे नासिकायां च, स्वयं प्राणः मुख्यप्राणः श्वासादिप्रणयनात् प्राणनाम्ना स्वरूपेण । प्राणवायुं अधिष्ठायेति शेषः। प्रतितिष्ठति। समानस्तु मध्ये समाननामा प्राणः समानवायुं अधिष्ठाय मध्ये नाभिदेशे प्रतितिष्ठति। समानशब्दप्रवृत्तिनिमित्तमाह– **एष ह्येतदिति** ॥ एषः समानः, हि यस्मात्, एतत् हुतं भुक्तमन्नम् । समं यथा शरीरावयवं नयति प्रापयति। तेन समान इत्यभिधानं तस्येत्यर्थः। तस्मादन्नसमीकरणादेताः सप्तार्चिषः सप्तानां ज्ञानेन्द्रियाणां अर्चिषः वृत्तयः भवन्ति। ज्ञानेन्द्रियाणि प्रज्वलितानि भवन्तीत्यर्थः। एष आत्मा जीवः हृदये स्वरूपेण वर्तते जीवस्य अणुत्वाद्विषयसम्बन्धाभावेन ज्ञानेन्द्रियवृत्तीनामपेक्षेति भावः॥ ३-४ ॥

### उपनिषत्

**अत्रैतदेकशतं नाडीनाम् । तासां शतं शतमेकैकस्यां द्वासप्ततिं प्रतिशाखानाडीसहस्राण्यासु व्यानश्चरत्यथैकयोर्ध्वमुदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ५ ॥**

**टीका**—व्यानस्य प्रवृत्तिं वक्तुमुच्यते— **अत्रेत्यादि**॥ अत्र शरीरे। यदेतदेकशत-मेकोत्तरं शतं नाडीनां शिराणां भवति, तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखा नाड्यो भवन्ति। पुनस्तासां च प्रतिशाखा नाड्यो भवन्तीति वक्तव्यम्। एवञ्च सम्भूय प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात्। प्रतिशाखानाडीसहस्राणां द्वासप्ततिमिति द्वितीया षष्ठ्यर्थे योजनीया। किञ्चातः? आसु नाडीषु विविधं नयनात् व्यानो व्यानवायुमधिष्ठाय चरति। अथोदानस्तूदानवायुमधिष्ठायैकया नाड्या सुषुम्नयोर्ध्वगतिश्चरति। स च तत्र चरन् पुण्येन जीवकृतं पुण्यं निमित्तीत्कृत्य पुण्यं स्वर्गादिलोकं नयति। एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम्। अत एवोर्ध्वं नयनादुदानः। पापेन पापं नरकादिकं दुःखबहुलं लोकं नयति। उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यां समदुःखसुखं मनुष्यलोकं नयतीति॥ ५॥

**वामन**—अथ हृदये नाडीनामेकोत्तरं शतं अस्ति। तासां प्रत्येकं शतं शतं शाखानाड्यः सन्ति। पुनश्चैकैकस्यां द्वासप्ततिं द्वासप्ततिं प्रतिशाखानाडी-सहस्राणि सन्ति। आसु व्यानश्चरति। 'अथैकया' इत्यादि केनोत्क्रमत इत्यस्य परिहारमाह। अथ हृदयदेशादूर्ध्वभागे गले वर्तमान उदानस्तासां नाडीनामेकया विवक्षित-लोकगमनयोग्यया त्रिविधान्मर्त्यानुत्क्रामयन् त्रीनेव लोकान् नयति॥ ३-५ ॥

**श्रीनिवास**—॥ **एवञ्च सम्भूयेति** ॥ अत्रैवं नाडीसङ्ख्यासङ्ग्रहप्रकारः। एकोत्तरशतं प्रधाननाड्यो भवन्ति। तत्रैकैकस्यां नाड्यां पुनः शतं शतं नाड्यो वर्तन्ते। एवञ्चैतासां मेलने शतोत्तरदशसहस्रसङ्ख्याका भवन्ति। नन्वेवं चेत् द्वासप्ततिसहस्रसङ्ख्या न लब्धेति चेन्न। पुनस्तासाञ्च प्रतिशाखानाड्यो भवन्तीति वक्तव्यमिति टीकावाक्यानुसारेण द्वासप्ततिसङ्ख्यापूरकनाड्यन्तराणि तत्र द्रष्टव्यानि। कथमिति चेदुच्यते। दशसहस्रनाडीनां मध्ये एकैकस्यां नाड्यां नाडीसप्तकं वर्तते। सति चैवं सप्ततिसहस्रसङ्ख्याका भवन्ति। उर्वरितशत-सङ्ख्याकनाडीनां मध्ये एकैकस्यां नाड्यां विंशतिसङ्ख्याका नाड्यो भवन्ति।

एवञ्चैतन्नाडीसहस्रद्वयं जातम्। तस्मात्सर्वासामपि मेलनेऽस्मिन् शरीरे द्वासप्तति-सहस्रसङ्ख्याका नाड्यो भवन्तीति सिद्धम् । नन्वेतदुपरि एवं शङ्का भवति। एकस्मिन् घटे कदलीफलपञ्चकं निक्षिप्तं चेन्निक्षिप्तफलापेक्षया अधिष्ठानभूतो घटः यथा उर्वरितो भवति एवमेकैकस्यां नाड्यामित्युक्तरीत्या अधिष्ठान-नाडीनामुर्वरितत्वात्कथं नाडीनां द्वासप्ततिसहस्रसङ्ख्याकत्वम्। ततोऽप्यधिक-सङ्ख्यालाभादिति ॥ अत्र ब्रूमः। अत्राधिकसङ्ख्या न लभ्यते। कथम्? इत्थम्। दितिगर्भं पूर्वमेकमभूत्। इन्द्र उदरे प्रविष्टः सन् तद्गर्भं सप्तधा अच्छिनत्। पुनश्चैकैकं सप्तधा अच्छिनत्। तद्गर्भं नवाधिकचत्वारिंशत्संख्याकं जातम्। अत्र यथा अधिष्ठानभूतगर्भसप्तकग्रहणं नास्ति तथात्रापीति द्रष्टव्यम्। यथोक्तं षष्ठस्कन्धे–

'कृतो मे सप्तधा गर्भ आसन् सप्त कुमारकाः।
तेऽपि चैकैकशो वृक्णाः सप्तधापि न मम्रिरे ॥' इति॥

नाडीसहस्राणीति द्वितीया नाडीसहस्राणामिति षष्ठ्यर्थे योजनीयेत्यन्वयः। ननु जीवस्मृतं लोकमयं कस्मात्प्रापयतीत्यत आह– **अत एवेति** ॥ तद्विषयकचित्तेन सह मुख्यप्राणं प्रत्यागतत्वादेवेत्यर्थः। ननु तथा आगतत्वेऽपि अयं न प्रयच्छतीत्येवं किन्न स्यादिति चेन्न । 'यं यं वापि' इति स्मृत्य-प्रामाण्यापत्तेरिति भावः॥ ३-५ ॥

**छलारी–प्रतिशरीरमिति** ॥ द्वासप्ततिं द्वासप्ततिमिति वीप्साभिप्रायोऽयम् ॥ **प्रतिशाखानाड्य इति**॥ एकैकस्या नाड्या विभागरूपाः शिराः प्रतिशाखानाड्य इत्युच्यन्ते। 'नाडी तु धमनी शिरा' इत्यमरः॥ **द्वितीया षष्ठ्यर्थ इति**॥ सहस्राणी-त्यत्रत्यविभक्तिरित्यर्थः॥ **ऊर्ध्वगतिरिति** ॥ श्रुतौ विद्यमानस्योर्ध्वशब्दस्यायमर्थः। स्वर्गनरकमनुष्यलोकरूपपरलोकगतिरिति यावत्। तदेव विवृणोति– **पुण्येन पुण्यमिति** ॥ अयमाशयः। सुषुम्नानाडीस्थहृत्कमलगतोदानः सुषुम्नानाडी-सम्बद्धेडापिङ्गलानाडीभिर्जीवपुण्यं निमित्तीकृत्य जीवं स्वर्गादिशुभलोकं नयति। सुषुम्नासम्बद्धान्यनाडीभिः पापेन निमित्तेन नरकादि नयति। उभाभ्यां भूलोकम्।

अपरोक्षज्ञानं निमित्तीकृत्य साक्षान्मध्यस्थसुषुम्नाविशेषब्रह्मनाड्या जीवं ब्रह्मरन्ध्रेण मोक्षं नयति । तथाचोक्तं द्वितीयस्कन्धभगवते–

'देवयानं पिङ्गलाभिरहान्येति शतायुषा ।
रात्रीरिडाभिः पितृणां विषुवत्तां सुषुम्नया ॥' इति॥

अस्यार्थः पिङ्गलाभिर्ब्रह्मनाड्यपेक्षया दक्षिणभागस्थपिङ्गलानामकनाडीभिः शतायुषाकालिकमरणेन। अहानि अहःसंज्ञं देवयानं स्वर्गादिमार्गमेति। इडाभिर्वामभागस्थनाडीभिरिडानामिकाभिः रात्रीः रात्रिसंज्ञं पितृणां पितृलोकमार्गम्। सुषुम्नया मध्यस्थब्रह्मनाड्या विषुवत्तासंज्ञकं ब्रह्मयानं मोक्षमार्गमित्यर्थः। तथाच तत्रैव तात्पर्ये–

'विषुवत्ता ब्रह्मयानो विशेषेण सुखं यतः।
इडान्नदानात्पितृणामेवं मार्गाः प्रकीर्तिताः ॥'

इति ब्रह्मतर्कवचनम्। पितृणामित्यत्र यानमिति शेषः । अनेन एकया सुषुम्नयेत्येतल्लक्षणया पिङ्गलादिनाडीप्रतिपादकमित्युक्तं भवति। तेन सुषुम्नया गतस्य जीवस्य कथं स्वर्गनरकादिप्राप्तिः 'तयोर्ध्वमायन्नमृतत्वमेति' इति श्रुतिविरोधादिति शङ्का निरस्ता वेदितव्या ॥ ३-५ ॥

**ताम्रपर्णी**–शिराणां सुषिराणां नाड्योऽपि तद्रूपा इति भावः ॥ **तासां नाडीना-मिति**॥ एकां नाडीं परिशेषयित्वा शतानां नाडीनां मध्य इत्यर्थः। 'अथैकयोर्ध्व उदानः' इत्यत्र एकया सुषुम्नयेति व्याख्यास्यमानत्वेन तत्परिशेषप्रतीतेः। उदानगत्या ब्रह्मनाड्या अथैकयोर्ध्व उदान इति द्वितीयस्कन्धे व्याख्यातत्वाच्च। नचैकयेति उक्ता नाडी एकशतादन्या। तासां शतं शतमेकैकस्यामित्यत्र तच्छब्देनैकशतनाडीपरामर्श इति वाच्यम्। तर्हि अत्र देहे नाडीनामेकशतमित्युक्त्ययोगात्।

'शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणे भवन्ति ॥'

इति श्रुतौ एकशतनाडीनामेव हृदयेऽवस्थानमभिधाय तत्रैकस्याः–

'मूलाधारं समारभ्य त्वा मूर्धानमृजुस्थिता ।
मध्ये सुषुम्ना विज्ञेया......... ॥'

इत्युक्तदिशा सुषुम्नात्वं परापरब्रह्मप्राप्तिलक्षणमुख्यामृतत्वहेतुत्वं चोक्त्वाऽन्यासां द्वासप्ततिसहस्रधा विभक्तानां षट्त्रिंशत्सहस्रसङ्ख्याया वामभागदक्षिणभागस्थानामिडापिङ्गळानामकानां लोकान्तरप्राप्तिहेतुत्वोक्त्या विरोधाच्च । तस्मात्तासां शतं शतमित्यत्र शतनाडीनामेव परामर्शो, न त्वेकस्याः। सा तु 'सैव पञ्चप्रभेदिनी' इत्युक्तदिशा पञ्चधैव भिन्ना द्वासप्तत्यतिरिक्ता । 'द्वासप्ततिसहस्रास्तु नाड्योऽन्यास्तु प्रधानतः' इति तन्त्रसारवचनात्। नन्वेवं यदि शतनाडीमध्ये एकैकस्यां शतशतमुपनाड्यो भवन्ति, तर्ह्ययुतनाड्यो लब्धाः। द्वासप्ततिसहस्रनाडीनां कथं लाभ इत्यत आह– **पुनरिति**॥ अयुतसङ्ख्यानाडीनां मध्ये एकैकस्यां सप्त सप्त प्रतिशाखानाड्यो भवन्ति। पुनस्तास्वेव सहस्रनाडीनां मध्ये एकैकस्याः द्वयमुपनाडीरूपेण भविष्यतीति द्वासप्ततिसहस्रलाभो ज्ञेयः। गत्यन्तराभावात्। केचित्तु तासां शतं शतमेकैकस्यामित्यत्र एकशतनाडीनां मध्ये एकैकस्यां शतं शतमुपनाड्यो भवन्ति। तथाच शतोत्तरायुतनाड्यो लब्धाः। तत्रायुतनाडीनां मध्ये एकैकस्यां सप्त सप्त उपनाड्यो भवन्ति। शतनाडीनां मध्ये त्वेकैकस्यां विंशतिविंशतिप्रतिशाखा नाड्यो भवन्ति। एवञ्च द्वासप्ततिसहस्रलाभ इति रहस्योऽर्थ इति व्याचक्षते– **विविधं नयनादिति**॥ भुक्तान्नस्येति शेषः। सर्वनाडीद्वारेषु विविधं नयनं व्यानकार्यम्। भुक्तान्नस्य यथाशरीरावयवं समीकरणमात्रं समानकार्यमितिभेदः। 'दद्यान्मोक्षादिकं प्रभुः' इति भाष्यानुसारेणाह– **एवं ज्ञानेनेति** ॥ ३-५ ॥

**मङ्गालीय**–एकशब्दस्य वैयर्थ्यमाशङ्क्य व्याख्याति– **एकोत्तरशतमिति** ॥ ननु एकोत्तरशतनाडीनां मध्ये एकैकस्यां शतसङ्ख्याकोपनाड्यो भवन्तीत्युक्तौ शतोत्तरायुतसङ्ख्याकनाडीनां लाभेऽपि वक्ष्यमाणद्वासप्ततिसहस्रनाडीनां कथं लाभ इत्यत आह– **पुनस्तासाञ्चेति** ॥ अयुतसङ्ख्याकनाडीनां मध्ये एकैकस्यां सप्त सप्त प्रतिनाड्यः। शतानां नाडीनां मध्ये एकैकस्यां विंशितिविंशतिप्रतिशाखानाड्यो भवन्तीति वक्तव्यमित्यर्थः। ततश्च सम्भूय प्रतिशाखानाडीनां

द्वासप्ततिसहस्राणि सम्पद्यन्त इति ज्ञेयम्। प्रतिशरीरमिति द्वासप्ततिं द्वासप्ततिमिति वीप्साभिप्रायवर्णनम्॥ **द्वितीयेति** ॥ नाडीसहस्राणीति द्वितीयेत्यर्थः॥ **षष्ठ्यर्थे योजनीयेति** ॥ यद्यपि 'आदशतः संख्याः सङ्ख्येये अतः परं सङ्ख्याने सङ्ख्येये च' इति वचनात् द्वासप्ततिशब्दस्य सङ्ख्येयपरत्वेन नाडीसहस्रशब्दसामानाधिकरण्यसम्भवाच्छतं ब्राह्मणा इत्यादिवत् द्वासप्ततिं द्वासप्ततिं नाडीरूपसहस्राणि जानीयादिति यथाश्रुतैव योजना सम्भवति, नतु षष्ठ्यर्थे द्वितीयेति योजनेति। तथापि युगानामेकसप्ततिमित्यादौ सङ्ख्यायां सङ्ख्याशब्दस्य प्रयोगप्राचुर्यात्सङ्ख्यावाचित्वमेव स्वीकृत्य विभक्तिविपरिणामेन षष्ठ्यर्थे द्वितीया योजितेति ज्ञेयम्। अथैकयेत्यत्र एकया सहस्रासु प्रधानया नाड्या पुण्यं लोकं नयतीति प्रतीयते। इदं चानुपपन्नम्। सुषुम्नाया मोक्षमार्गत्वादित्यतः चरतीत्यनुकृष्य भिन्नवाक्यतया व्याचष्टे– **अथेति** ॥ पुण्येनेत्यादौ पुण्यादिलोकनयने स्वकृतं पुण्यादिकं निमित्तमुच्यत इत्यन्यथाप्रतीतिनिरासायाह– **जीवकृतमिति** ॥ **निमित्तीकृत्येति** ॥ 'कर्तृकरणयोस्तृतीयाया असम्भवाद्धेतौ तृतीयेत्युक्तं भवति – **एवं ज्ञानेनेति** ॥ दद्यान्मोक्षादिकमिति भाष्यादिति भावः। पुण्यपापयोरन्यतरप्राचुर्येण पुण्यादिलोकप्राप्तेः समप्रधानाभ्यामित्युक्तम्। साधनानुरूप्यद्योतनाय समदुःखसुखमिति मनुष्यलोकविशेषणम्॥ ३-५ ॥

**अनन्तभट्टीय–**॥ **एवश्चेति** ॥ एकोत्तरशतनाडीनां पृथक्पृथक् शतधा भेदे शतोत्तरदशसहस्रसङ्ख्याकाः नाड्यो भवन्ति। दशसहस्रनाडीनां पृथक् सप्तधा प्रभेदे सप्ततिसहस्राणि भवन्ति। शतस्य तु विंशतिधा प्रविभागे सहस्रद्वयमिति सङ्ख्यासम्भावनाप्रकारः। 'आदशतः सङ्ख्या सङ्ख्ये ये अतः परं सङ्ख्याने सङ्ख्ये ये च' इति वचनात् द्वासप्ततिं प्रतिशाखानाडीसहस्राणीति वाक्यं द्वेधा व्याख्यातम्। अथैकयेत्यत्रैकया सर्वासु प्रधानया नाड्या पुण्यापुण्यलोकं नयतीति प्रतीयते। इदञ्चानुपपन्नम्। सुषुम्नायाः मोक्षमार्गत्वादित्यत-श्चरन्तीत्यनुकृष्य भिन्नवाक्यतया व्याचष्टे– **अथेति**॥ पुण्येनेत्यादौ स्वस्य पुण्यादिलोकनयने स्वकृतं पुण्यादिकं निमित्तमित्यन्यथाप्रतीतिनिरासाय पुण्यं निमित्तीकृत्येत्यादि॥ **एवं ज्ञानेनेति** ॥ दद्यान्मोक्षादिकमिति भाष्यादिति भावः। पुण्य-

पापयोरन्यतरप्राचुर्ये पुण्यादिलोकप्राप्तेः समानाभ्यामित्युक्तम्। साधनानुरूप्य-द्योतनाय समदुखसुखमिति मनुष्यलोकविशेषणम् ।। ३-५ ।।

**गूढकर्तृक**–एकोत्तरशतनाडीनां मध्ये एकनार्डी परिशेषयित्वा शतनाडीनां मध्ये एकैकस्याः शतं शतमुपनाड्यो भवन्तीत्यर्थः। ननु तासां शतं शतमेकैकस्यामित्यत्र तच्छब्देन प्रकृतैकशतनाडीपरामर्शसम्भवे कुतः शतनाडीमात्रपरामर्श इति चेन्न। अथैकयोर्ध्वमुदान इत्यत्र एकया सुषुम्नयेति व्याख्यातत्वेन तत्परिशेषप्रतिभानात्। सुषुम्नाया द्वासप्ततिसहस्रप्रवेशापाताच्च। नचेदं नानिष्टम्। 'द्वासप्ततिसहस्रास्तु नाड्योऽन्यास्तु प्रधानतः' इति तन्त्रसारविरोधात्। नच सुषुम्ना एकशतबहिर्भूता। 'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमापन्नमृतत्वमेति' इति श्रुतिविरोधात्। 'अथैकयोर्ध्व उदान' इत्येतद्ग्रन्थविरोधात्। उदानगत्या ब्रह्मनाड्या। 'अथैकयोर्ध्वमुदान' इति श्रुतेरिति द्वितीयतात्पर्यविरोधाच्च। तथाच शतनाडीनामेव द्वासप्ततिसहस्रधा विभाग इति। तत्र विवेकः। तत्रैकैकस्यां नाड्यां दशदशोपनाड्यो भवन्तीति वक्तव्यम्। ततश्चैकस्यां दश दश भवन्तीति एकैकस्यां शतं भवन्तीत्ययुता नाड्यो लब्धाः। अन्यथा सहस्रं वा आदित्यस्य रश्मयो आसु नाडीष्वातताः। शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मय इत्याद्ययोगात्। अयुतनाडीमध्ये एकैकस्यां पुनः प्रतिशाखानाड्यो भवन्तीति द्वासप्ततिसहस्रत्वं ज्ञेयम्। विवेकस्तु न ज्ञायते। अयुतनाडीमध्ये एकैकस्यां सप्त सप्त भवन्ति। शतनाडीमध्ये एकैकस्यां विंशतिर्विंशति भवन्तीति कल्पनायाः निर्मूलत्वात्। सहस्रशनाडीमध्ये एकैकस्यां सप्त सप्तेति सप्तति-सहस्रलाभः। तत्र सहस्रनाडीमध्ये एकैकस्यां सप्त सप्त भवन्तीति द्वासप्तति-सहस्रत्वकल्पनापत्तेः। विविधं नयनादिति। भुक्तान्नस्येति शेषः।। ३-५ ।।

**खण्डार्थ**–व्यानस्य प्रवृत्तिं वक्तुमुच्यते— **अत्रेत्यादि**। अत्र शरीरे एतदेकशतं एकोत्तरशतं नाडीनां शिराणां भवति। तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखानाड्यो भवन्ति। पुनस्तासां प्रतिशाखानाड्यो भवन्तीति

वक्तव्यम् । एवञ्च सम्भूय प्रतिशरीरं तासां प्रतिशाखानाडीनां सहस्राणि द्वासप्ततिं जानीयात् । प्रतिशाखानाडीसहस्राणां द्वासप्ततिमिति द्वितीया षष्ठ्यर्थे योजनीया। किञ्चातः आसु नाडीषु विविधं नयनात् व्यानो व्यानवायुमधिष्ठाय चरति । अथोदानस्तु उदानवायुमधिष्ठाय एकया नाड्या सुषुम्नयोर्ध्वगतिश्चरति । स च तत्र चरन् पुण्येन जीवकृतं पुण्यं निमित्तीकृत्य पुण्यं स्वर्गादिलोकं नयति, एवं ज्ञानेन मोक्षमिति च द्रष्टव्यम्। अत एवोर्ध्वनयनादुदानः। पापेन पापं नरकादिकं दुःखबहुलं लोकं नयति। उभाभ्यां समप्रधानाभ्यां पुण्यपापाभ्यां समदुःखसुखं मनुष्यलोकं नयतीति॥ ३-५ ॥

**नर**—व्यानस्य प्रवृत्तिं वक्तुमुपोद्घातमाह– **अत्रेति** ॥ अत्र शरीरे यदेतदेकशतं एकोत्तरशतं नाडीनां शिराणां भवन्ति। तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं शतं प्रतिशाखानाड्यो भवन्ति। पुनश्च तासां प्रतिशाखानाड्यो भवन्तीति वक्तव्यम्। एवञ्च सम्भूय प्रतिशरीरे द्वासप्ततिं द्वासप्ततिनाड्यो ज्ञातव्याः। तासु नाडीषु विविधं नयनाद्व्याननामा मुख्यवायुः स्वपुत्रं व्यानवायुमधिष्ठाय चरति। अथोर्ध्वं नयनादुदाननामा मुख्यवायुः स्वपुत्रमुदानवायुमधिष्ठाय एकया सुषुम्नानाड्योर्ध्वगतिश्चरति। स मुख्यवायुरेव उदाननामा सन् तत्पुत्रः । तस्य लोकप्रापकत्वशक्त्यभावात् पुण्येन, जीवकृतपुण्यं निमित्तीकृत्य स्वर्गादिपुण्यं लोकं नयति, ज्ञानेन मोक्षमिति शेषः। पापेन पापं नरकादिकं उभाभ्यां समाभ्यां पुण्यपापाभ्यां समसुखदुःखं मनुष्यलोकं नयति॥ ३-५ ॥

**उदय**—व्यानाख्यस्य वायोः प्रवृत्तिमाह– **अत्र चेति**॥ अत्र शरीरे एतत् एकशतं एकोत्तरशतं नाडीनां शिराणां भवतीति शेषः। तासां नाडीनां मध्ये एकैकस्यां नाड्यां शतं प्रतिशाखानाड्यः अवान्तरनाड्यो भवन्ति। एवं सम्भूय प्रतिशाखा-नाडीनां सहस्राणि द्वासप्ततिं जानीयादिति शेषः। द्वासप्ततिसहस्राणि भवन्तीत्यर्थः। किञ्चातः, आसु नाडीषु व्यानःविविधनयनात् व्याननामको प्राणः व्याननामकं वायुमधिष्ठाय चरति। सर्वासां नाडीनां मध्ये याह्येका तस्याः स्वरूपमाह। अथ अनन्तरं उदानः उदाननामकः उदानं वायुमधिष्ठाय एकया नाड्या सुषुम्नया । ऊर्ध्वं, गच्छतीति शेषः। ऊर्ध्वं नयनादुदान इत्यर्थः। स चोदानः पुण्येन पुण्यकर्मणा

पुण्यं लोकं स्वर्गलोकं नयति। जीवमिति शेषः। एवं ज्ञानेन मोक्षमिति ज्ञातव्यम्। 'स एनान् ब्रह्म गमयति' इति श्रुतेः। पापेन कर्मणा पापं नरकादिकं नयति। उभाभ्यां पुण्यपापाभ्यां समाभ्यामेव सम सुखदुःखमनुष्यलोकं नयतीति॥ ३-५ ॥

## उपनिषत्

**आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः पृथिव्यां या देवता सैषा पुरुषस्या-पानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानस्तेजो ह वा उदानः। तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैः॥ ६ ॥**

**टीका**—कथं बाह्यमित्यादि प्रश्नद्वयं परिह्रियते— **आदित्य इत्यादि**॥ मुख्यप्राण एव हि प्राणनामा बाह्यो बहिर्भवः। आदित्यः आदित्ये स्थितः तन्नाम दधत् उदेति उद्गच्छति। एष आदित्यस्थः प्राण एवैनं चाक्षुषं चक्षुषि भवं प्राण-वायुमनुगृह्णानो वर्तते। एतेन मुख्यप्राणः प्राणनाम्ना रूपेण बहिरादित्यं धत्ते, अध्यात्मं चादित्यस्थः प्राणः अधिष्ठानभूतेनाऽऽदित्येन सहैव चक्षुषि स्थित्वा चक्षुस्तदभिमानिनश्च प्राणवायुमित्युक्तं भवति। एवमुत्तरत्रापि ज्ञातव्यम्। बहिः पृथिव्यां या धारिकाऽपानाख्या देवता सैषा पुरुषस्यापानं देहे वर्तमानमपानवायुमवष्टभ्य धृत्वाऽन्तरा शरीरान्तर्वर्तते। अन्तरा द्यावापृथिव्योर्मध्ये। यदाकाशो य आकाशः आकाशधारकः समानः सोऽध्यात्मं समानवायुं धत्ते। यो बहिर्वायुधारको व्यानः स एवान्तर्व्यानो व्यानवायुधारकः। बहिस्तेजोधारको य उदानः स उदानः उदानवायुं धत्ते इत्येतत्प्रसिद्धम्। कथमिति? यस्मात्तेजोऽधि-ष्ठातोदानः तेनाधिष्ठानेन तेजसा सहैवान्तरुदानं दधत् प्राणिनां जीवनहेतुर्वर्तते। तस्मादेव हि यः पुरुषः उपशान्ततेजा भवति स तेजसोऽपगमनेनो-दानस्या-प्यपगमनमनुमाय मनसि सम्पद्यमानैरिन्द्रियैस्सह पुनर्भवं जन्मान्तरं मरणमिति यावत्, प्राप्स्यतीत्यनुमीयते लोकैरिति॥ ६ ॥

**वामन**–आदित्यो ह वै बाह्य इत्यादिना कथं बाह्यमभिधत्ते। कथमध्यात्ममित्यनयोरुत्तरमाह। आदित्यस्थो हि जीवशरीराद्बहिष्ठः प्राणः स उदयन्नेतत् बाह्यं जगदभितो धत्ते। एष एव हि चक्षुरभिमानिनं सूर्यमनु-गृह्णानोऽध्यात्मं देहेन्द्रियादिकमभितो धत्ते। अत्रायं विशेषः। प्राणस्तु चक्षुरादि-संस्थत्वात् अश्रुश्लेष्ममलादिकं प्रवर्तयन् आप्यं देहावयवं धत्ते। या सा पृथिव्या मलाद्यपनयेन यदपानाख्यदेवता संस्थिता सैषा पुरुषशरीरस्यापि पार्थिवावयवं धत्ते। वाय्वादिसंस्थत्वात्। अथ तच्छरीरान्तं मध्यभागे योऽयमाकाशस्तस्मिन् स्थितः समानो वायुराकाशं धत्ते। किञ्च नाडीनामन्तर्भागे व्यानो वायुर्वाय्वंशं संचारयंश्चरतीत्येतदर्थतः सिद्धम्। तेजोरूपत्वादुदानशरीरमपि तेजोऽंशं धत्ते। तस्माद्देहाभिमानी जीवो मनसि सम्पद्यमानैरिन्द्रियैः सहोपशान्ततेजा उदानेनोत्क्रामितो भवति ॥ ३-६ ॥

**छलारी**–॥ **बहिर्भव इति** ॥ बहिःशब्दात् 'तत्र भव' इत्यधिकारे बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्य च ञ्य इष्यते इति वार्तिकेन प्रत्यय इति भावः। बाह्य इत्यत्र निपातनात् टिलोपे 'तद्धितेष्वचामादेः' इति आदिवृद्धिः। तन्नामानं तन्नामकं सूर्यं दधत् तद्धारकस्सन्। उद्गच्छति ऊर्ध्वभागं गच्छति। प्राण एव मुख्यप्राण एव चाक्षुषं चक्षुषि भवम्। प्राणवायुः स्वदासभूतं प्राणवायुमनुगृह्णानः धारणादिनानुग्रहं कुर्वाण इत्यर्थः। अभिप्रायमाह– **एतेनेति**॥ चक्षुषि स्थित्वा प्राणरूपेण धत्त इत्यन्वयः॥ **एवमुत्तरत्रापीति** ॥ उत्तरत्र 'पृथिव्यां या देवता' इत्यादौ पृथिव्यां या धारिका मुख्यप्राणरूपेति शेषः। सैषा बहिः अधिदैवे पृथिव्यां विद्यमाना अपानाख्या देवता अधिष्ठानभूतपृथिव्या सह पुरुषस्यापानदेशे स्थित्वा दासभूतापानवायुं धृत्वा अन्तरा वर्तते। तथा बहिर्द्यावापृथिव्योर्मध्ये य आकाशधारकः समानवायुः मुख्यप्राणरूपः सोऽधिष्ठानेनाकाशेन सह पुरुषशरीरे समानवायुं दासभूतं धृत्वान्तरा वर्तते। तथा बहिर्वायुधारको व्यानः मुख्यप्राणरूपः स एवाधिष्ठानभूतेन वायुना सह पुरुषशरीरे स्थित्वा दासभूतव्यानाधारको भवति। तथा बहिस्तेजोधारको य उदानवायुः मुख्यप्राणरूपः सोऽधिष्ठानभूतेन तेजसा सह पुरुषदेहे स्थित्वा दासभूतमुदानवायुं धत्त इति योजनेति भावः। अत्र

यत्तेजोऽधिष्ठानकमुख्यप्राणरूपोदानस्य देहेऽधिष्ठानभूततेजसा सह स्थित्वोदानधारकत्वमुक्तं तदुपपादकत्वेन तस्मादुपशान्ततेजा इति मूलं योजयति– **कथमित्यादिना** ॥ कथं शरीरे तेजसा सहोदानो वर्तते इति कथं ज्ञातव्य इत्यर्थः। **अन्तरुदानमिति**। अन्तःशरीरमध्य इत्यर्थः॥ ३-६ ॥

**ताम्रपर्णी**–॥ **चक्षुस्तदभिमानिनं प्राणवायुमिति**॥ प्राणवायोः सूर्यादवरत्वाच्चक्षुषोऽवान्तराभिमानिनं प्राणवायुं सूर्येण साकमनुगृह्णातीत्यर्थः । एतेन प्राणादिपञ्चकप्रविष्टः प्राणनामाऽहङ्कारिकप्राणो गुर्विन्द्रमध्यग एवेति वदन्तो निरस्ताः॥ **एवमुत्तरत्रापीति** ॥ बहिः पृथिव्यां धारकापानाख्यदेवताऽधिष्ठानभूतया पृथिवीदेवतया सहापाने स्थित्वाऽपानं तदभिमानिनं अपानवायुश्चानुगृह्णानो वर्तत इत्यादिरूपेणोत्तरप्रकरणेष्वपि तात्पर्यं द्रष्टव्यमित्यर्थः। नन्वपानसमानयोः पृथिव्याकाशाभ्यां समत्वात्कथं तदनुग्राह्यत्वमिति चेन्न। पृथिवीगणेशयोरीषदुत्तमत्वेऽपि समत्वोक्तिसम्भवात्। यद्वानुग्राहकत्वं नाम सहकारित्वमित्यविरोधः। प्राचीनटीकायां तु 'एष ह्येनं चाक्षुषं प्राणमनुगृह्णाति' इत्यादौ बहिरादित्यान्तर्गतया जगद्धारकप्राण एव हि अन्तश्चाक्षुषं प्राणं सूर्यमनुगृह्णानोऽध्यात्मं धत्ते। पृथिव्यां या देवतानियामिका अपानाख्या सा पुरुषस्यापानेन्द्रियमवष्टभ्य शरीरे पार्थिवावयवं धत्ते। बहिराकाशधारकः समानोऽन्तराकाशावयवं धत्ते। यो बहिर्वायुधारको व्यानः स एवान्तः वायुधारकः तेजोरूपत्वादुदानः शारीरमपि तेजो धत्ते इति व्याख्यातम्॥ **मरणमिति यावदिति**॥ प्राचीनटीकायां तु । अथ तत्काले याच्चित्तः स भवेत्तं पुनर्भवमुद्दिश्य तेन जीवेन सहैषः पञ्चरूपी प्राण आयाति। सः प्राण उदानेन युक्त आत्मना यथासङ्कल्पितमेव लोकं जीवं नयति। नच तदीयचित्तसङ्कल्पयोर्विरोधः। आत्मसङ्कल्पानुसारेण हि तच्चित्तं प्राणः प्रणयतीत्युक्तम्॥ ३-६ ॥

**मङ्कालीय**–कथं बाह्यमित्यादीत्यत्रादिशब्देन कथं चाध्यात्ममिति प्रश्नग्रहणम्। कथमभिधत्त इति प्रश्नपरिहाराय तं दधदित्युक्तम्। अनेनाधिदैवधारकत्वमुक्तं ज्ञेयम्। तं दधत् तद्धारकः सन्। उद्गच्छति ऊर्ध्वं ऊर्ध्वभागं गच्छति। प्राण एव मुख्यप्राण एव। प्राणवायुं स्वदासभूतं प्राणवायुम्।

अनुगृह्णानो धारणादिनानुग्रहं कुर्वाणः। अभिप्रायमाह– **एतेनेति** ॥ ननु प्राणादिरूपाणामध्यात्मधारकत्वं पूर्वमेवोक्तम्। सत्यम्। अधिदैवादिगतानि प्राणादिरूपाणि तेभ्यो विभक्तानि तान्येव स्वाधिष्ठानैः सह जीवशरीरे स्थित्वा स्वानुग्राह्यं प्राणादिपञ्चकं धृत्वा जीवधृत्यनुकूलानि भवन्तीत्यत्रोच्यते। पूर्वं तु श्वासप्रणयनादिव्यापारविशेषवन्ति केवलाध्यात्मगतान्येव तानि दासपञ्चक-मधिष्ठाय स्थानविशेषेषु स्थितान्युदितानीति स्फुटत्वान्न दोषः। अत एव पुनः प्रश्नवाक्यमप्युपपद्यते। अधिष्ठानेन सह स्थितिस्तु तस्मादुपशान्ततेजा इत्यत्र स्फुटीकृता ॥ **तदभिमानिनश्च प्राणवायुमिति** ॥ अभिधत्त इति पूर्वेणान्वयः ॥ **एवमुत्तरत्रापि ज्ञातव्यमिति** ॥ मुख्यप्राणोऽपाननाम्ना रूपेण बहिः पृथिवी-मभिधत्ते। अध्यात्मश्चाधिष्ठानभूतया पृथिवीदेवतया सहैव पुरुषस्य अपानदेशे स्थित्वा अपानवायुं जडभूतं तदभिमानिनश्च स्वदासभूतमपानवायुमभिधत्ते । तथा बहिर्द्यावापृथिव्योर्मध्ये य आकाशधारको मुख्यप्राणरूपः समानवायुः स स्वाधिष्ठानेनाकाशेन सह पुरुषशरीरे जडभूतं समानवायुं तदभिमानिनं स्वदासभूतं समानवायुमभिधत्ते। तथा बहिर्वायुधारको यो व्यानो मुख्यप्राणस्वरूपः स एव स्वाधिष्ठानभूतेन वायुना सह पुरुषशरीरगं जडभूतं व्यानवायुं तदभिमानिनं स्वदासभूतं व्यानमभिधत्ते। तथा बहिस्तेजोधारको य उदानो मुख्यप्राणस्वरूपः स स्वाधिष्ठानभूतेन तेजसा सह पुरुषदेहगं जडभूतमुदानं तदभिमानिनं स्वदासभूतमुदानश्चाभिधत्त इति द्रष्टव्यमित्यर्थः। अन्तरेत्यस्यावृत्तिमभिप्रेत्याह– **अन्तरा द्यावापृथिव्योर्मध्ये यदाकाश इति** ॥ ह वेत्येतस्य व्याख्यानं इत्येतत्प्रसिद्धमिति। अत्र यत्तेजोऽधिष्ठानकमुख्यप्राणरूपोदानस्य देहेऽधिष्ठान-भूततेजसा सह स्थित्वोदानधारकत्वमुक्तं तदुपपादकत्वेन तस्मादुपशान्ततेजा इति मूलं योजयितुमवतारयति– **कथमितीति** ॥ तेजसा सहैवोदानो वर्तत इति कथं ज्ञातव्यमित्यर्थः॥ **अन्तरिति** ॥ शरीरान्तरित्यर्थः। स इत्यस्य प्राप्स्यती क्रिययान्वयः। अनुमायेति ल्यबन्तस्यानुमीयत इत्युक्तानुमित्यपेक्षयोदाना-पगमानुमितेः पूर्वकालत्वादुपपत्तिः। अनुमीयते विद्वद्भिरिति शेषः॥ ३-६ ॥

**अनन्तभट्टीय–** कथमभिधत्त इति प्रश्नपरिहाराय तं दधदुदयतीत्युक्तम्। अनेना-धिदैवाधारकत्वमुक्तं ज्ञेयम् ॥ **एतेनेति** ॥ ननु प्राणादिरूपाणामध्यात्म-धारकत्वं पूर्वमेवोक्तम्। सत्यम् । अधिदैवादिगतानि यानि प्राणादिरूपाणि तेभ्यो विभक्तानि तान्येव स्वाधिष्ठानैः सह जीवशरीरे स्थित्वा स्वानुग्राह्यं प्राणादिपञ्चकं धृत्वा जीवधृत्यनुकूलानि भवन्तीत्यत्रोच्यते । पूर्वं तु श्वासप्रणयनादिव्यापार-विशेषवन्ति केवलाध्यात्मगतान्येव तानि दासपञ्चकमधिष्ठाय स्थानविशेषेषु स्थितान्युदितानीति स्फुटत्वान्न दोषः। अत एव पुनःपुनः प्रश्नवाक्यमुपपद्यते। अधिष्ठानेन सह स्थितिस्तु तस्मादुपशान्ततेजा इत्यत्र स्फुटीकृता॥ **अनुमीयत इति**॥ उपशान्ततेजाः पुरुषो एवं लोक अनुमीयत इत्यर्थः॥ ३-६ ॥

**गूढकर्तृक–**॥ **एवमुत्तरत्रापीति**॥ अधिष्ठानभूतेनेत्यादिकमित्यर्थः। अपान-समानयोः पृथिवीगणेशाभ्यां समत्वेऽपि नानुग्राह्यानुग्राहकभावविरोधः। पृथि-व्याकाशयोः किञ्चिदुत्तमत्वोपपत्तेः । पृथिव्याकाशयोरनुग्राहकत्वं नाम सह-कारित्वमेव॥ ३-६ ॥

**खण्डार्थ–**कथं बाह्यमित्यादि प्रश्नद्वयं परिह्रियते– **आदित्य इत्यादि** ॥ मुख्यप्राण एव हि प्रणनामा बाह्यो बहिर्भवः, आदित्ये स्थितः तन्नामा, उदयति उद्गच्छति । एष आदित्यस्थः प्राण एवैनं चाक्षुषं चक्षुषि भवं प्राणवायुमनुगृह्णानो वर्तते। एतेन मुख्यप्राणः प्राणनाम्ना रूपेण बहिरादित्यमभिदत्ते। अध्यात्मञ्चा-धिष्ठानभूतेनाऽदित्येन सहैव चक्षुषि स्थित्वा चक्षुस्तदभिमानिनश्च प्राणवायुमभिधत्त इत्युक्तं भवति । एवमुत्तरत्रापि ज्ञातव्यम् । बहिः पृथिव्यां या धारिकाऽपानाख्या देवता सैषा पुरुषस्यापानं देहे वर्तमानमपानवायुमवष्टभ्य धृत्वा अन्तरा शरीरान्त-र्वर्तते । अन्तरा द्यावापृथिव्योर्मध्ये यदाकाशो य आकाशः आकाशधारकः समानः सोऽध्यात्मं समानः समानवायुं धत्ते। यो बहिर्वायुधारको व्यानः स एवान्तर्व्यानो व्यानवायुधारकः। बहिस्तेजोधारको य उदानः स उदानः उदानवायुं धत्त इत्येतत् प्रसिद्धम्। कथमिति? यस्मात् तेजोऽधिष्ठातोदानस्तेनाधिष्ठानेन तेजसा सहैवान्तरुदानं दधत् प्राणिनां जीवनहेतुर्वर्तते तस्मादेव हि यः पुरुषः उपशान्ततेजा

अनुगृह्णानो धारणादिनानुग्रहं कुर्वाणः। अभिप्रायमाह– **एतेनेति** ॥ ननु प्राणादिरूपाणामध्यात्मधारकत्वं पूर्वमेवोक्तम्। सत्यम्। अधिदैवादिगतानि प्राणादिरूपाणि तेभ्यो विभक्तानि तान्येव स्वाधिष्ठानैः सह जीवशरीरे स्थित्वा स्वानुग्राह्यं प्राणादिपञ्चकं धृत्वा जीवधृत्यनुकूलानि भवन्तीत्यत्रोच्यते। पूर्वं तु श्वासप्रणयनादिव्यापारविशेषवन्ति केवलाध्यात्मगतान्येव तानि दासपञ्चक-मधिष्ठाय स्थानविशेषेषु स्थितान्युदितानीति स्फुटत्वान्न दोषः। अत एव पुनः प्रश्नवाक्यमप्युपपद्यते। अधिष्ठानेन सह स्थितिस्तु तस्मादुपशान्ततेजा इत्यत्र स्फुटीकृता ॥ **तदभिमानिनञ्च प्राणवायुमिति** ॥ अभिधत्त इति पूर्वेणान्वयः ॥ **एवमुत्तरत्रापि ज्ञातव्यमिति** ॥ मुख्यप्राणोऽपाननाम्ना रूपेण बहिः पृथिवी-मभिधत्ते। अध्यात्मञ्चाधिष्ठानभूतया पृथिवीदेवतया सहैव पुरुषस्य अपानदेशे स्थित्वा अपानवायुं जडभूतं तदभिमानिनञ्च स्वदासभूतमपानवायुमभिधत्ते । तथा बहिर्द्यावापृथिव्योर्मध्ये य आकाशधारको मुख्यप्राणरूपः समानवायुः स स्वाधिष्ठानेनाकाशेन सह पुरुषशरीरे जडभूतं समानवायुं तदभिमानिनं स्वदासभूतं समानवायुमभिधत्ते। तथा बहिर्वायुधारको यो व्यानो मुख्यप्राणस्वरूपः स एव स्वाधिष्ठानभूतेन वायुना सह पुरुषशरीरगं जडभूतं व्यानवायुं तदभिमानिनं स्वदासभूतं व्यानमभिधत्ते। तथा बहिस्तेजोधारको य उदानो मुख्यप्राणस्वरूपः स स्वाधिष्ठानभूतेन तेजसा सह पुरुषदेहगं जडभूतमुदानं तदभिमानिनं स्वदासभूतमुदानञ्चाभिधत्त इति द्रष्टव्यमित्यर्थः। अन्तरेत्यस्यावृत्तिमभिप्रेत्याह– **अन्तरा द्यावापृथिव्योर्मध्ये यदाकाश इति** ॥ ह वेत्येतस्य व्याख्यानं इत्येतत्प्रसिद्धमिति। अत्र यत्तेजोऽधिष्ठानकमुख्यप्राणरूपोदानस्य देहेऽधिष्ठान-भूततेजसा सह स्थित्वोदानधारकत्वमुक्तं तदुपपादकत्वेन तस्मादुपशान्ततेजा इति मूलं योजयितुमवतारयति– **कथमितीति** ॥ तेजसा सहैवोदानो वर्तत इति कथं ज्ञातव्यमित्यर्थः ॥ **अन्तरिति** ॥ शरीरान्तरित्यर्थः। स इत्यस्य प्राप्स्यती क्रिययान्वयः। अनुमायेति ल्यबन्तस्यानुमीयत इत्युक्तानुमित्यपेक्षयोदाना-पगमानुमितेः पूर्वकालत्वादुपपत्तिः। अनुमीयते विद्वद्भिरिति शेषः॥ ३-६ ॥

**अनन्तभट्टीय–** कथमभिधत्त इति प्रश्नपरिहाराय तं दधदुदयतीत्युक्तम्। अनेना-धिदैवाधारकत्वमुक्तं ज्ञेयम् ॥ **एतेनेति** ॥ ननु प्राणादिरूपाणामध्यात्म-धारकत्वं पूर्वमेवोक्तम्। सत्यम् । अधिदैवादिगतानि यानि प्राणादिरूपाणि तेभ्यो विभक्तानि तान्येव स्वाधिष्ठानैः सह जीवशरीरे स्थित्वा स्वानुग्राह्यं प्राणादिपञ्चकं धृत्वा जीवधृत्यनुकूलानि भवन्तीत्यत्रोच्यते । पूर्वं तु श्वासप्रणयनादिव्यापार-विशेषवन्ति केवलाध्यात्मगतान्येव तानि दासपञ्चकमधिष्ठाय स्थानविशेषेषु स्थितान्युदितानीति स्फुटत्वान्न दोषः। अत एव पुनःपुनः प्रश्नवाक्यमुपपद्यते। अधिष्ठानेन सह स्थितिस्तु तस्मादुपशान्ततेजा इत्यत्र स्फुटीकृता॥ **अनुमीयत इति**॥ उपशान्ततेजाः पुरुषो एवं लोक अनुमीयत इत्यर्थः॥ ३-६ ॥

**गूढकर्तृक–**॥ **एवमुत्तरत्रापीति**॥ अधिष्ठानभूतेनेत्यादिकमित्यर्थः। अपान-समानयोः पृथिवीगणेशाभ्यां समत्वेऽपि नानुग्राह्यानुग्राहकभावविरोधः। पृथि-व्याकाशयोः किञ्चिदुत्तमत्वोपपत्तेः । पृथिव्याकाशयोरनुग्राहकत्वं नाम सह-कारित्वमेव॥ ३-६ ॥

**खण्डार्थ**–कथं बाह्यमित्यादि प्रश्नद्वयं परिहियते– **आदित्य इत्यादि** ॥ मुख्यप्राण एव हि प्रणनामा बाह्यो बहिर्भवः, आदित्ये स्थितः तन्नामा, उदयति उद्गच्छति । एष आदित्यस्थः प्राण एवैनं चाक्षुषं चक्षुषि भवं प्राणवायुमनुगृह्णानो वर्तते। एतेन मुख्यप्राणः प्राणनाम्ना रूपेण बहिरादित्यमभिदत्ते। अध्यात्मञ्चा-धिष्ठानभूतेनाऽदित्येन सहैव चक्षुषि स्थित्वा चक्षुस्तदभिमानिनञ्च प्राणवायुमभिधत्त इत्युक्तं भवति । एवमुत्तरत्रापि ज्ञातव्यम् । बहिः पृथिव्यां या धारिकाऽपानाख्या देवता सैषा पुरुषस्यापानं देहे वर्तमानमपानवायुमवष्टभ्य धृत्वा अन्तरा शरीरान्त-र्वर्तते । अन्तरा द्यावापृथिव्योर्मध्ये यदाकाशो य आकाशः आकाशधारकः समानः सोऽध्यात्मं समानः समानवायुं धत्ते। यो बहिर्वायुधारको व्यानः स एवान्तर्व्यानो व्यानवायुधारकः। बहिस्तेजोधारको य उदानः स उदानः उदानवायुं धत्त इत्येतत् प्रसिद्धम्। कथमिति? यस्मात् तेजोऽधिष्ठातोदानस्तेनाधिष्ठानेन तेजसा सहैवान्तरुदानं दधत् प्राणिनां जीवनहेतुर्वर्तते तस्मादेव हि यः पुरुषः उपशान्ततेजा

भवति स तेजसोपशमेनोदानस्याप्यापगमनमनुमाय मनसि सम्पद्यमानैर्लीयमानै-रिन्द्रियैस्सह पुनर्भवं जन्मान्तरं, मरणमिति यावत्, प्राप्स्यतीत्यनुमीयते। लोक इति योज्यम्॥ ३-६ ॥

**नर**—कथं बाह्यमभिधत्ते, कथमध्यात्ममिति प्रश्नद्वयं परिहरति— **आदित्य इति** ॥ मुख्यवायुरेव हि प्राणः प्राणनामा सन् बाह्यः बहिर्भवः आदित्यः आदित्ये स्थितः आदित्यनामा लोकप्रसिद्धमादित्यं दधत् उदयति उद्गच्छति। एष आदित्यस्थः प्राण एनं चाक्षुषं चक्षुषि भवं प्राणं वायुमनुगृह्णानः तं चक्षुरभिमानिनं प्राणवायुं आदित्येन सह धत्ते। पृथिव्यां या देवता अपानाख्या तद्गतः तन्नामा मुख्यवायुरेव बहिस्थः तद्देवता धारकत्वेन वर्तते। सैषा देवता। अन्तरा शरीरमध्ये पुरुषस्य अपानवायुमवष्टभ्य धारकत्वेन तत्र स्थितो वर्तते। अन्तरा द्यावापृथिव्योर्मध्ये यदाकाशो यः आकाशः आकाशाधारकः समानः सोऽध्यात्मं समानं समानवायुं धत्ते। यो बहिर्वायुर्वायुधारको व्यानः स एवान्तः व्यानो व्यानस्थवायुधारकः। बहिस्तेजोधारकः य उदानः स उदानवायुं धत्ते इत्येतत्प्रसिद्धम्॥ **कथमिति?** ॥ यस्मात्तेजोऽधिष्ठातोदानः तेनाधिष्ठानेन तेजसा सहैव तदुदानं दधत्। मुख्यवायुः प्राणिनां जीवनहेतुर्भवति। तस्मादेव हि यः पुरुषः उपशान्ततेजा भवति स पुरुषः मनसि सम्पद्यमानैर्लीयमानैरिन्द्रियैः सह पुनर्भवं जन्मान्तरं मरणमिति यावत्। प्राप्स्यतीति लोकैर्जनैः तेजसो गमनेनोदानगमनं ज्ञात्वा अनुमीयते॥ ३-६ ॥

**उदय**—कथं बाह्यमध्यात्ममिति प्रश्नप्रतिवचनमाह— **आदित्य इत्यादिना**॥ प्राणः हि वै मुख्यप्राण एव , बाह्यः बहिर्भवः। आदित्यः आदित्यस्थितः, आदित्यनामानं दधत्, उदयति उद्गच्छति। एष हि आदित्यस्थ एव, एनं चाक्षुषं चक्षुषि भवं प्राणं वायुमनुगृह्णानः अनुग्रहकारी वर्तते इति शेषः। मुख्यप्राणः प्राणनाम्ना रूपेण बहिरादित्यं धत्ते अध्यात्मं च आदित्यस्थःसःप्राणाधिष्ठानभूतेन आदित्येन सहैव चक्षुषि स्थित्वा चक्षुस्तदभिमानिनं प्राणवायुश्चाभिधत्त इत्यर्थः। बहिः पृथिव्यां धारिका या अपानाख्या देवता सैषा पुरुषदेहेऽपानमवष्टभ्य धृत्वा

अन्तरा शरीरान्तर्वर्तत इति शेषः। अन्तरेत्यावर्तते। अन्तरा द्यावापृथिव्योर्मध्ये यदाकाशः यः व्यत्ययात्। आकाशः आकाशधारकः स समाननामा मुख्यः, समानं वायुमभिधत्ते। वायुर्बहिर्वायुधारकः व्यानः मुख्यः । स एवान्तर्व्यान वायुं धारकः । तेजः बहिस्तेजोधारकः य उदाननामा मुख्यः, स उदानवायुधारकः इत्येतत् हवा प्रसिद्धमेव। यस्मात् तेजोऽधिष्ठाता उदानः प्राणिनां जीवनहेतुर्भवति तस्मात् कारणाद्यः कश्चिदुपशान्ततेजाः निस्तेजको भवतीति शेषः। तेजसोऽपगमेनोदानोऽपि गत इत्यनुमाय मनसि अन्तःकरणे समपद्यमानैर्लीयमानैरिन्द्रियैः। पुनर्भवं जन्मान्तरं मरणं इति यावत्। प्राप्स्यतीत्यनुमीयते लोक इति शेषः॥ ३-६॥

## उपनिषत्

**यच्चित्तस्तेनैष प्राणमायति। प्राणस्तेजसा युक्तः सहाऽत्मना यथासङ्कल्पितं लोकं नयति। य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति। तदेष श्लोकः। उत्पत्तिमायतिं स्थानं विभुत्वञ्चैव पञ्चधा। अध्यात्मञ्चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति॥ ७ ॥**

॥ इति तृतीयः प्रश्नः ॥

**टीका**—सङ्गतिविशेषलाभात् केनोत्क्रमत इति प्रश्नस्योत्तरमिदानीमुच्यते— **यच्चित्त इति**॥ एष पुरुषो यच्चित्तो मरणकाले यद्विषयचित्तो भवति तेन तद्विषयेण चित्तेन सह प्राणं मुख्यमायाति। तत्समीपं प्राप्नोति। प्राणस्तु तेजसोदानेन युक्तः परमात्मना सह जीवं यथासङ्कल्पितं, तेन जीवेन मरणकाले यादृशः सङ्कल्पितः स्मृतः तथाविधलोकं शरीरं नयति प्रापयतीति। अत एव यच्चित्त इत्युक्तम्। स्वाभिप्रेतमिति वा। अनेनोदानरूपेणोत्क्रमणमित्युक्तं भवति। एवम्भूतप्राणविज्ञानस्य फलमुच्यते— **य एवमिति**॥ यो विद्वानेवमुक्तलक्षणं प्राणं वेद विजानाति नास्य

विदुषः प्रजा हीयते। अविच्छिन्नसन्तानो भवतीत्यैहिकम्। परत्र चामृतो मुक्तो भवति। तदेष श्लोकः। प्राणस्योत्पत्तिम्, परमात्मन आयतिं प्रवर्तनम्, शरीरे तदिच्छया स्थानमवस्थानम्, पायूपस्थादि पञ्चधा प्राणादिरूपेण विभुत्वं विविध-भवनं स्वाम्यं वा, तथा अध्यात्मं अध्यात्मधारकत्वम्, चशब्देन बाह्यधारकत्व-मुत्क्रमणं चेत्येतद्विज्ञाय विशेषेण ज्ञात्वाऽमृतं मोक्षमश्नुते प्राप्नोति॥ ७ ॥

**वामन**– अथ तत्काले यच्चित्तस्स भवेत्तं पुनर्भवमुद्दिश्य तेन जीवेन सहैषः पञ्चरूपी प्राण आयाति। सः प्राण उदानेन युक्तः सन्नात्मना यथा सङ्कल्पितमेव लोकं जीवान्नयति नच तदीयचित्तसङ्कल्पयोर्विरोधः। आत्मसङ्कल्पानुसारेण हि तच्चित्तं प्राणः प्रणयति। य एवं प्राणस्योत्पत्त्यादिवैलक्षण्यं विद्वांस्तं यथावद्वेद तस्य सर्वाभीष्टं भवति। तत्रोक्तश्लोकस्यायमर्थः। मुख्यप्राणस्य परमात्मन उत्पत्तिं तस्य जीवशरीर आगतिं पञ्चधा विभागमध्यात्माधिदैवतयोरवस्था-विशेषं प्रवृत्तिभेदञ्च विज्ञाय परमात्मज्ञानद्वारेण क्रमादमृतत्वमश्नुते। अवान्तरे-श्वरस्य ज्ञानस्य मुख्येश्वरज्ञानानन्तरीयकत्वात्॥ ३-७ ॥

**प्रकाशिका**–'सङ्गतिविशेषलाभात्' इत्यत्र शरीरेऽवस्थितिप्रपञ्चनोत्तरं देहादु-त्क्रमणकथनस्य सङ्गतत्वादिति भावः। 'यच्चित्तः इत्युक्तम् स्वाभिप्रेत-मिति वा' इत्यत्र स्वयं यच्चित्तो भवति तमित्यभिप्रायेण स्वाभिप्रेतमित्युक्तम्।

एवमनेकोपनिषत्सु बहुशः प्रस्तूयमानः सर्वस्रष्टृत्वसर्वपालकत्वसर्वदेवो-त्तमत्वादिरूपो मुख्यप्राणस्य महिमा पुराणादिषु कुतो न प्रपञ्चित इति चेत्। सत्यम्। मूलरूपेण न त्वं जगति प्रसिद्धो भव, तवावतारा एव प्रसिद्धा भवन्त्विति कण्वस्य शापरूपवचनपरिपालनाय व्यासवाल्मीकिप्रभृतयः स्वकृतग्रन्थेषु मूलरूपमुख्यप्राणस्य महिमानं न प्रायेण प्रपञ्चयामासुः। किन्तु मूलरूपी भगवांस्तु हनुमद्भीमादितदवतारकथामेव रामायणभारतपुराणादि-स्वकृतपौरुषेयग्रन्थेषु मुनीनां मान्यतासिद्ध्यर्थं प्रपञ्चयाञ्चक्रे। अपौरुषेयतया पुरुषानपेक्षितोपनिषद्विद्यासु सर्वसृष्ट्युत्तरकालीनकण्वादिमुनिभ्योऽपि पूर्वं विद्यमानस्वभक्तशिरोमणेः सर्वदेवोत्तमस्य मूलरूपमुख्यप्राणस्य गुणाननेकधा

गणयामास। अपिच रुद्रसूर्यस्कन्दादीन् देवान् नानादुर्मतप्रवृत्तौ निमित्तीकुर्वन्नपि नारायणो नित्यमविच्छिन्नस्वधर्माणं, नित्यमेतेषु कृतसख्यं, स्वहिततममत एव परमप्रियं प्राणमसज्जनेषु गोपयितुं रहस्यरूपोपनिषद्विद्यायामेव बहुशो न्यरुरूपत्। नतु स्त्रीशूद्रादीनामपि श्रवणयोग्यतन्त्रविद्यासु व्यासादिस्वावताररूपेणापि निरूपयामास। अत एव सर्वदेवोत्तमतया हरिभक्ताग्रेसरतया चोपनिषदाचार्य-मध्वगुरोरुपदेशेन तन्मतानुवर्तिभिस्तत्त्ववादिभिः प्रस्तूयमानमुख्यप्राणाख्य-तत्त्वस्य सकलश्राव्यपौरुषेयविद्यास्वपि तथैव विस्तरेणाप्रस्तावात् सदसद्रूपमत-भेदमप्यनुमतमेव चेत्येके। एतदेवाभिप्रेत्य कण्वोऽपि प्राणप्रेरणयैव शापव्याजेन तदानुकूल्यमेव चक्रे, नतु तस्य प्रातिकूल्यमिति सर्वस्यापि समाधानसम्भवेन चोद्यस्यैवानवकाशात्॥ ७ ॥

**छलारी–** ननु कथं बाह्यमभिधत्त इति प्रश्नात्पूर्वमेव केनोत्क्रामत इति पृष्टस्य तदुत्तरानन्तरं कथमेतत्प्रत्युत्तरमित्यत आह– **सङ्गतिविशेषलाभादिति** ॥ पूर्व शरीरे उदानाधिष्ठिततेजःशान्तिज्ञानेन मरणमनुमीयत इत्युक्तम्। इदानीं तत्सङ्गत्यो-दानस्योत्क्रमणहेतुत्वं सप्रकारमाहेति भावः॥ **तद्विषयचित्तेनेति**॥ तद्विषय-स्मरणेनेत्यर्थः। परमात्मना सहेतितु सहेत्यस्य व्याख्यानम्। उक्तलक्षणं विष्णोः सकाशादुत्पत्त्यादिमत्त्वं ऐहिकफलं प्राप्नोतीति शेषः। परत्र परलोके । श्रुतौ तदेष श्लोक इति स्वोक्तार्थे मन्त्रः प्रमाणीकृतः। तदनुवादपूर्वकं मन्त्रं व्याख्याति– **तदेष इति** ॥ स्वाम्यं दासभूतप्राणादेः स्वामित्वमित्यर्थः। अध्यात्मं देहधारकत्वं प्राणादीनामिति शेषः। बाह्यधारकत्वम् । आदिपदात्पृथिव्यादि-धारकत्वम्। उत्क्रमणमुदानरूपेणेति शेषः ॥ ३-७ ॥

**ताम्रपर्णीय–॥ सङ्गतिविशेषलाभादिति** ॥ अध्यात्मं तेजोनिया-मकस्योदानस्य जीवनहेतुत्वमुक्त्वा तदुपपादयितुं तस्मादुपशान्ततेजा इति जीवमरणस्य तेजोनियामकोदानाधीनत्वकथनप्रसङ्गात् उत्क्रमणमप्युदानरूपेण भवतीति केनोत्क्रमत इति प्रश्नपरिहारकथनस्य सङ्गतिलाभ इत्यर्थः। 'तेनैष प्राण आयाति' इति प्राचीनटीकायाः पाठेऽपि स्वसम्प्रदायानुसारेण प्राणमायातीति

पाठमाश्रित्य व्याचष्टे– **प्राणं मुख्यमायातीति**॥ **आत्मना सहेति** ॥ परमात्मना सहेत्यर्थः। जीवेन सङ्कल्पितमित्यत्र ज्ञापकमाह– **अत एवेति**॥ यथासङ्कल्पितं पूर्वं कृतसङ्कल्पमनतिक्रम्येति परामर्शार्थमेव॥ **यच्चित्त इति**॥ जीवो यद्विषयचित्तो भवतीत्युक्तमित्यर्थः॥ ३-७ ॥

**मङ्गालीय–**॥ **सङ्गतिविशेषलाभादिति** ॥ यद्यपि कथमभिधत्त इत्यादिप्रश्न-परिहारात्पूर्वमेव प्रश्नानुसारेण केनोत्क्रमत इति प्रश्नोत्तरं वक्तव्यम्। तथाप्यध्यात्मं तेजोनियामकस्योदानस्य जीवनहेतुत्वमुक्त्वा तदुपपादयितुं तस्मादुपशान्ततेजा इति जीवानां मरणस्योदानाधीनत्वकथनप्रसङ्गादुत्क्रमणमपि उदानरूपेणैव भवतीति केनोत्क्रमत इति प्रश्नपरिहारकथने सङ्गतिविशेषलाभादिदानीं केनोत्क्रमत इति प्रश्नोत्तरमुच्यत इत्यर्थः। अत एवोदानरूपेणोत्क्रमणमित्यनुपदमेव वक्ष्यति– **परमात्मना सहेति** ॥ 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुतेरिति भावः॥ **यथासङ्कल्पितमिति** ॥ 'यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम्' इति स्मृतेरिति भावः। इच्छार्थकस्य सङ्कल्पितशब्दस्य स्मृत्यर्थत्वे ज्ञापकमाह– **अत एवेति** ॥ यथाप्रतीतार्थत्वेऽप्यविरोध इत्याह– **स्वाभि-प्रेतमिति** ॥ अनेनात्मना स्वेन सङ्कल्पितमित्यपि योजनोक्ता भवति॥ **अनेनेति** ॥ प्राणरूपस्यैवोत्क्रमणहेतुत्वे तेजसा युक्त इति विशेषणं व्यर्थं स्यात्। अत उदानरूपेण जीवादीन् गृहीत्वा तेन साकं परमात्मानमनूत्क्रामतीति ज्ञेयमित्यर्थः। एवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्त इत्येतदर्थसङ्ग्रहाय विभुत्वमित्यस्य स्वाम्यं वेति व्याख्यानान्तरम्॥ **चशब्देनेति** ॥ समुच्चितमिति शेषः। बाह्यधारकत्वमादित्यपृथिव्यादिधारकत्वम्। उत्क्रमणं उदानरूपेणेति शेषः॥ ३-७ ॥

**अनन्तभट्टीय–**क्रमोल्लङ्घनस्याभिप्रायमाह– **सङ्गतीति**॥ तेजोऽधिष्ठातुरुदानस्य शरीरावस्थितत्वोपपादनाय सेन्द्रियस्य जीवस्य शरीरादुत्क्रमणोक्तिप्रसक्तौ सत्यामुदान एव जीवादीनादायोत्क्रमत इति वक्तुं सङ्गतिविशेषो लभ्यत इत्यर्थः॥ **परमात्मन इति** ॥ 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुतेरिति

भावः॥ **यथेति** ॥ 'यं यं वापि स्मरन् भावम्' इति स्मृतेरिति भावः। इष्टार्थस्य सङ्कल्पितशब्दस्य स्मृत्यर्थत्वे ज्ञापकमाह– **अत एवेति** ॥ यथाप्रतीतार्थत्वेऽप्यविरोध इत्याह– **स्वेति** ॥ आत्मनेत्यस्यार्थोऽयमेवेति। प्राणरूपस्यैवोत्क्रमणहेतुत्वे तेजसा युक्त इति विशेषणं व्यर्थं स्यादित्युदानरूपेण जीवादीन् गृहीत्वा तेन साकं परमात्मानमनूत्क्रामतीति ज्ञेयमित्यर्थः। एवमेवैष प्राण इत्येतदर्थसङ्ग्रहाय विभुत्वमित्यस्य स्वाम्यं वेति व्याख्यानान्तरम्॥ ३-७ ॥

**खण्डार्थ**–सङ्गतिविशेषलाभात् केनोत्क्रमत इति प्रश्नस्योत्तरमिदानीमुच्यत– **यच्चित्त इति**॥ एष पुरुषो यच्चित्तो मरणकाले यद्विषयचित्तो भवति तेन तद्विषयचित्तेन सह प्राणं मुख्यमायाति तत्समीपं प्राप्नोति। प्राणस्तु तेजसोदानेन युक्तः परमात्मना सह जीवेन यथासङ्कल्पितं तेन जीवेन मरणकाले यादृशः सङ्कल्पितः स्मृतः तथाविधं लोकं शरीरं नयति प्रापयतीति। अत एव यच्चित्त इत्युक्तम्। स्वाभिप्रेतमिति वा। अनेनोदानरूपेणोत्क्रमणमित्युक्तं भवति। एवम्भूतप्राणविज्ञानस्य फलमुच्यते– **य एवमिति**॥ यो विद्वानेवमुक्तलक्षणं प्राणं वेद विजानाति नास्य विदुषः प्रजा विहीयते, अविच्छिन्नसन्तानो भवतीत्यैहिकम्, परत्र चामृतो मुक्तो भवति। तदेष श्लोकः- प्राणस्योत्पत्तिं परमात्मना आयतिं प्रवर्तनं शरीरे तदिच्छया स्थानं पायूपस्थादि, पञ्चधा प्राणादिरूपेण विभुत्वं विविधभवनं स्वाम्यञ्च, तथाऽध्यात्मं धारकत्वं चशब्देन बाह्यधारकत्वमुत्क्रमणं चेत्येतद्विज्ञाय विशेषेण ज्ञात्वाऽमृतं मोक्षमश्नुते प्राप्नोति॥ ३-७॥

**नर**–सङ्गतिविशेषलाभात्केनोत्क्रमत इति प्रश्नोत्तरमिदानीमाह– **यच्चित्त इति** ॥ एष पुरुषो यच्चित्तः मरणकाले यद्विषयचित्तो भवति तेन तद्विषयचित्तेन सह प्राणं मुख्यमायाति। सः प्राणः तेजसोदानेन युक्तः परमात्मना सह जीवं यथासङ्कल्पितं सङ्कल्पः यथाविधः जीवनमरणकाले स्मृतं स्वाभिमतं वा। लोकं शरीरं नयति प्रापयति। एतेनोदानरूपेण उत्क्रमणमित्युक्तं भवति। एवं प्राणज्ञानफलमाह– **य एवमिति** ॥ यो विद्वानेवमुक्तलक्षणं प्राणं वेद जानाति, अस्य प्रजा न विहीयते। परत्र चामृतो मुक्तो भवति। तत्रैषः श्लोकः सम्मतित्वेन

वर्तते। प्राणस्येशादुत्पत्तिं ईशस्यायतिं प्रवर्तनं स्थानं शरीरे तदिच्छयावस्थानं पायूपस्थादिषु पञ्चधा प्राणादिषु विभुत्वं विविधभवनं स्वाम्यं वा आध्यात्मं धारकत्वम् । चशब्देन बाह्यधारकत्वं उत्क्रमणं च गृह्यते। एतद्विज्ञायामृतं मोक्षमश्नुते॥ ३-७ ॥

**उदय**–केनोत्क्रमते इत्यस्योत्तरमाह– **यच्चित्त इति** ॥ सङ्गतिलाभार्थं व्युत्क्रमेण प्रतिवचनम्। एषः पुरुषः जीवः, यच्चित्तः यस्मिन् चित्तं यस्य स तथोक्तः। यदभिप्रेतः भवति, तेन तद्विषयेण चित्तेन सह प्राणं मुख्यप्राणं आयाति तत्समीपं प्राप्नोति। 'यं यं वापि' इति स्मृतेः। प्राणः, तेजसोदानेन रूपेण, युक्तः सन् आत्मना परमात्मना सह यथासङ्कल्पितं जीवनमरणकाले यादृशं सङ्कल्पितं स्मृतं लोकं शरीरं जीवमिति शेषः। नयति प्रापयति। स्वाभिप्रेतमिति यावत्। उदानरूपेणोत्क्रमतीत्यर्थः। एवंवेत्तुः फलमाह– **य एवं विद्वानिति** ॥ यो विद्वान् ज्ञानी एवमुक्तलक्षणं प्राणं वेद । श्रुत्यन्तरसम्मतिमाह– **उत्पत्तिमिति** ॥ प्राणस्य परमात्मनः सकाशादुत्पत्तिं आयतिं प्रवर्तनम् । स्थानं सर्वशरीरे पायूपस्थादिषु पञ्चधा प्राणादिरूपेण तदिच्छयावस्थानम् । विभुत्वं विविधभवनञ्च । अध्यात्मं अध्यत्मधारकत्वं चशब्दादुत्क्रमणञ्च एतद्विज्ञाय विशेषेण ज्ञात्वा अमृतं मोक्षमश्नुते प्राप्नोति । अधिकारीति शेषः । द्विरुक्तिः प्रमेयावधारणार्था। अतो अखिलगुणगणाढ्यो नारायण एव जिज्ञास्य इति स्थितम्॥ ३-७ ॥

॥ इति तृतीयः प्रश्नः॥

# अथ चतुर्थः प्रश्नः

## उपनिषत्

**अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति । कतर एष देवः स्वप्नान् पश्यति। कस्यैतत् सुखं भवति कस्मिन् सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥**

**टीका**–॥ **अथ हैनं सौर्यायणीति**॥ उक्तं प्राणादेरखिलस्यापि जगतो भगवदधीनत्वम्। तन्न केवलं जाग्रदवस्थायाम्। किन्नाम, स्वप्नसुषुप्त्योरपीति दर्शयितुमुत्तरो ग्रन्थः। भगवन्, एतस्मिन् पुरुषे शरीरिणि स्वपति सति कानि दैवानि स्वपन्ति, स्वव्यापारादुपरमन्ते? भाव्यं हि केषाञ्चित् व्यापारोपरमेण। अन्यथा स्वापस्यैवासम्भवात्। कानि दैवान्यस्मिन् पुरुषे 'स्वपति जाग्रति स्वव्यापारं कुर्वन्ति? सर्वेषामुपरमे शरीरावस्थानासम्भवात्। स्वापोऽपि द्विविधः। स्वप्न-सुषुप्तिभेदात्। तत्र स्वप्ने य एष देवः स्वप्नान्स्वप्नस्थान्पदार्थान्पश्यति स कतरः? सर्वेन्द्रियाणामुपरतत्वात्केनेन्द्रियदेवेन जीवः स्वाप्नान् पदार्थाननुभवती-त्यभिप्रायः। सुषुप्तौ च यत् सुखं भवति तत्कस्य? तदोपरतकरणस्य जीवस्य विषयसंसर्गाद्यभावेन कथं सुखानुभवो घटते इत्याशयः। एते च स्वपन्तो जाग्रतः स्वप्नाद्यवस्थावन्तश्च न तावत्स्वतन्त्राः। बहूनां तदयोगात्। नच जीवाधीनाः। क्वचिदतद्वशत्वस्यापि दर्शनात्। नच मुख्यप्राणाधीनाः। तस्यापि जीवत्वेना-नवस्थितेरसम्भवाच्च। अतः पराधीना एते सर्वे कस्मिन्सम्प्रतिष्ठिता भवन्ति? परमेश्वरश्चेत्तदाश्रयः, तत्कुत इत्यभिप्रायः॥ १ ॥

**प्रकाशिका**–'कतर एष देवः' इत्यत्रैष जीवो यस्य बलात् स्वप्नान् स्वाप्नपदार्थान् पश्यति स कतर इत्यर्थः। टीकावाक्ये तु स्वाप्नस्थान् पदार्थान् पश्यति दर्शयतीत्यभिप्रेतम्। अत एवोत्तरवाक्ये केनेन्द्रियदेवेनेत्युक्तम्। 'अनवस्थितेरसम्भवाच्च' इत्यत्र नियामकजीवपरम्पराग्रहणे अनवस्थितेः।

मुख्यप्राणस्यापि जीवत्वाविशेषेणासम्भवाच्चेत्यर्थः। 'तत्कुतः' इत्यत्र तत् परमेश्वराधीनत्वं कुतः कस्मात् प्रमाणाद्वेदितव्यम्। प्रत्यक्षेण तस्यादर्शनादिति भावः॥ १ ॥

**श्रीनिवास–स्वेति** ॥ स्वस्य मुख्यप्राणस्येत्यर्थः॥ **तत्कस्येति** ॥ अधिकरणप्रश्नः। कस्य विषयस्य सकाशात्। एतदुत्तरं परब्रह्मलिङ्गेन सुखं भवतीत्युक्त्या परब्रह्मरूपविषयसम्बन्धादिति भविष्यति। अतद्वशत्वस्य जीववशत्वाभावस्य। जीवस्य जीवान्तरनियामकत्वेनानवस्थितिः। सति राज्ञि मण्डलेशाधीनत्वं प्रजानामिव सतीश्वरे मुख्यप्राणाधीनत्वं तच्छक्त्या तेषां युक्तं स्यात्। न ह्येष ईश्वरस्त्वया अङ्गीकृतः। अत इतरजीवान् प्रति तत्सजातीयस्यापि प्राणस्य नियोजकत्वं सम्भवतीत्यसम्भवः। सुप्तिगस्य जीवस्येत्यर्थः॥

**छलारी–॥ अथ हैनं सौर्यायणी** ॥ **स्वपतीति** ॥ इयं शेषोक्तिः। जाग्रदवस्थायां पुरुषशरीरे। इन्द्रियदेवतानामुपरमाभावात् येष्वप् शञि इत्यतः शतृप्रत्ययः। स्वापं प्राप्तवति सतीत्यर्थः। तत्त्वानीति तत्त्वाभिमानीनि दैवतानीत्यर्थः। **जाग्रतीति** ॥ जागृ निद्राक्षय इत्यतः शतृप्रत्यये प्रथमाबहुवनजसः नपुंसकत्वात्श्यादेशे 'जक्षित्यादयः षट्' इति अभ्यस्तसंज्ञकत्वात् 'नाभ्यस्ताच्छतुः' इति नुम्निषेधात् 'नपुंसकस्य झलचः' इति न नुम् । ननु स्वापकाले गाढनिद्रायुतत्वेन पदार्थ-दर्शनाभावात् कथं स्वाप्नपदार्थदर्शनप्रश्न इत्यत आह– **स्वापो द्विविध इति** ॥ ननु शरीरिणो जीवस्यैव स्वप्नद्रष्टुत्वादिन्द्रियदेवानां तदभावात्। कतर एष देवः स्वप्नान्पश्यतीति प्रश्नासम्भवमाशङ्क्य प्रश्नाभिप्रायमाह– **सर्वेन्द्रियाणामिति** ॥ तथा च पश्यतीत्येतदन्तर्णीतण्यर्थकमित्युक्तं भवति। योजना तु कतरः क इन्द्रियाभिमानी देवः स्वप्नावस्थापन्नं जीवं स्वाप्नान् स्वप्नपदार्थान् पश्यति दर्शयतीति ॥ **बहूनां तदयोगादिति**॥ एकस्मिन् शरीरे बहूनां स्वातन्त्र्ये एकस्मिन् क्षणे अनेकविरुद्धादिक्रियाप्राप्त्या शरीरमुन्मथ्येतेति भावः॥ **क्वचिदतद्वशत्वस्यापीति** ॥ निद्रारोगादिप्रतिबद्धेन्द्रियदेवानां जीवापेक्षितज्ञानाद्यकरणादिति भावः।

अनवस्थितेरिति जीवस्य मुख्यप्राणस्य जीवान्तरनियामकत्वे अस्येश्वरनियम्यत्वा-नङ्गीकारे जीवान्तरनियम्यत्वमङ्गीकार्यम्। तस्याप्येवमित्य-नवस्थानात्। मुख्यप्राणस्यापि जीवत्वाविशेषाज्जीवनियामकत्वासम्भवा-च्चेत्यर्थः॥ ४-१ ॥

**ताम्रपर्णीय**—ननु स्वप्ने मनसोऽनुपरतत्वेन स्वाप्नार्थसंसर्गेण सुखसम्भवा-त्कस्यैतत्सुखं भवतीत्याक्षेपोपपत्तिरित्यतो नायमाक्षेपः स्वप्नविषयः किन्तु सुषुप्तिविषय इति भावेन कानि स्वपन्तीति स्वापपदेनोभयोरपि प्रकृतत्वेन क्रमेण स्वप्नसुषुप्तिविषये विशेषप्रश्नो घटत इत्याह— **स्वापो द्विविध इति**॥ **विषय-संसर्गादिति**॥ आदिपदेन मनःपरिणामसुखाभावेन चेति गृह्यते॥ **क्वचिदिति**॥ जिघृक्षोर्ग्रहणाभावादस्वातन्त्र्यस्यानुभवसिद्धत्वादिति भावः॥ ४-१ ॥

**मङ्गालीय**—॥ **अथ हैनं सौर्यायणी** ॥ नन्वत्र क्रियमाणाः प्रश्नाः सर्वेऽप्य-नुपपन्नाः । केषाञ्चिद्व्यापारोपरमः केषाञ्चिन्नेति सिद्धे कानि स्वपन्ति कानि जाग्रति चेति प्रष्टव्यत्वाज्जीवस्यैव स्वप्नदर्शनं सुखञ्चेत्यनुभवसिद्धत्वेन सिद्धार्थतापातात्। सर्वेषामन्याधीनत्वे सिद्धे किमधीना इति प्रष्टव्यत्वाद्दर्शन-श्रवणादीनां इन्द्रियव्यापाराणां जीवप्रयत्नानुविधायितादर्शनेन जीवाधीनत्वस्य वा क्वचिज्जीवप्रयत्नव्यतिरेकेऽपि तद्दर्शनेन तदनियमावगमेऽपि 'प्राणस्यैतद्वशे सर्वम्' इत्यादिपूर्वोक्तरीत्या मुख्यप्राणाधीनत्वस्य वा तस्यापि जीवत्वेन स्वातन्त्र्यासम्भवे 'यथैषा पुरुषे च्छाया' इति सर्वस्य परमेश्वरवशत्वस्योक्तत्वेन परमेश्वरवशत्वस्य वा सम्भवेन प्रश्नानवकाशाच्चेत्यतो वक्ष्यमाणपरिहारानुसारेण तदभिप्रायं वदंस्तत्र तत्रान्यथाप्रतीतिश्च निराकुर्वन् व्याचष्टे— **भगवन्नित्यादि** ॥ **स्वपति सतीति** ॥ इयं शेषोक्तिः। जाग्रदवस्थायां पुरुषशरीरे इन्द्रियदेवानां उपरमाभावात्स्वापकाले गाढनिद्रायुतत्वेन स्वाप्नपदार्थदर्शनाभावात्कथं स्वाप्नपदार्थदर्शनप्रश्न इत्यत आह— **स्वप्नो द्विविध इति** ॥ ननु शरीरिणो जीवस्यैव स्वप्नद्रष्टृत्वात् इन्द्रियदेवानाञ्च तदभावात्कतर एष देवः स्वाप्ना-न्पश्यतीति प्रश्नासम्भवमाशङ्क्य तदभिप्रायमाह— **सर्वेन्द्रियाणामिति** ॥ तत्र तत्र पृथगेव वाऽवतारिका द्रष्टव्या। तथाच पश्यतीत्येतदन्तर्णीतण्यर्थकमित्युक्तं

भवति। योजना तु कतर इन्द्रियाभिमानी देवः स्वप्नावस्थापन्नं जीवं स्वप्नान्स्वाप्नपदार्थान् पश्यति दर्शयतीति। विषयसंसर्गादीत्यादिशब्देन विषयानुभवो गृह्यते॥ **बहूनां तदयोगादिति** ॥ एकस्मिन् शरीरे बहूनां स्वातन्त्र्ये एकस्मिन्नेव क्षणेऽनेकविरुद्धादिक्रियाप्राप्त्या शरीरमुन्मथ्येतेति भावः॥ **क्वचिदतद्वशत्वस्यापीति** ॥ निद्रारोगादिप्रतिबन्धे इन्द्रियदेवानां जीवापेक्षितज्ञानाद्यकरणदर्शनादिति भावः। 'अनवस्थितेरसम्भवाच्च नेतरः' इति सूत्रोक्तदूषणमाह– **तस्यापीति** ॥ तस्यापि जीवत्वेनेन्द्रियदेवादिवन्नियामकान्तरसापेक्षत्वे तस्याप्येवं तस्याप्येवमित्यनवस्थितिः। स्वातन्त्र्यश्चेदसम्भवः। अस्य जीवत्वमेव न स्यादिति भाव इति केचित्। जीवभूतस्य मुख्यप्राणस्य जीवान्तरनियामकत्वेऽस्येश्वरनियम्यत्वानङ्गीकारे जीवान्तरनियम्यत्वमङ्गीकार्यम्। तस्याप्येवं तस्याप्येवमित्यनवस्थानात्। मुख्यप्राणस्यापि जीवत्वाविशेषाज्जीवनियामकत्वासम्भवाच्चेत्यर्थ इत्यपरे॥ **तत्कुत इति** ॥ सर्वाश्रयत्वोपपादकं किमद्भुतं परमेश्वरस्य माहात्म्यमित्यर्थः॥ ४-१ ॥

**अनन्तभट्टीय–॥ अथ हैनं सौर्यायणी॥** नन्वत्र क्रियमाणाः सर्वेऽपि प्रश्नाः अनुपपन्नाः। केषाञ्चिद्व्यापारोपरमः केषाञ्चिन्नेति सिद्धे के ते स्वपन्तो जाग्रतश्चेति प्रष्टव्यत्वात् जीवस्यैव स्वप्नदर्शनं सुखं चेत्यनुभवसिद्धत्वेन सिद्धार्थत्वापातात्। सर्वेषामन्याधीनत्वे सिद्धे किमधीना इति प्रष्टव्यत्वाद्दर्शनश्रवणादीनामिन्द्रियव्यापाराणां जीवप्रयत्नानुविधायितादर्शनाज्जीवाधीनत्वस्य वा। 'उपलब्धिवदनियमः' इति तदनियामकत्वागमेऽपि 'प्रणस्यैतद्वशे सर्वम्' इत्युक्तरीत्या मुख्यप्राणाधीनत्वस्य वा, तस्यापि जीवत्वेन स्वातन्त्र्याभावे 'यथैषा पुरुषे च्छाया' इति सर्वस्य परमेश्वरवशत्वस्योक्तत्वेन प्रश्नानवकाशाच्चेत्यतो वक्ष्यमाणपरिहारानुसारेण तदभिप्रायं वदंस्तत्र तत्रान्यथाप्रतीतिं च पराकुर्वन्व्याचष्टे– **भगवन्नित्यादिकेनेति** ॥ एष देव इत्यत्र प्रेर्यप्रेरकयोरभेदोपचार इति भावः। विषयसंसर्गादीत्यादिपदेन विषयानुभवो गृह्यते। 'अवस्थितेरसम्भवाच्च नेतर' इति सूत्रोक्तदूषणमाह– **तस्यापीति**॥ तस्यापि जीवत्वेनेन्द्रियदेवादिवन्नियामकान्तरसापेक्षत्वे तस्याप्येवं तस्याप्येवमनव-

स्थितिः स्वातन्त्र्यं चेदसम्भवः। अन्यथा जीवत्वमेव न स्यादिति भावः॥ **तत्कुत इति** ॥ सर्वाश्रयत्वोपपादकं किमद्भुतं परमेश्वरस्य माहात्म्यमित्यर्थः॥ ४-१ ॥

**गूढकर्तृक–**य एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवतीति प्रश्नो न सम्भवति। स्वप्ने मनसोऽनुपरतत्वेन स्वाप्नार्थसंसर्गेण सुखोपपत्तेरित्यतः कस्यैतत्सुखं भवतीत्येतन्न स्वप्नविषयं किन्तु सुषुप्तिपरमिति भावेनाह– **स्वाप इति** ॥ **क्वचिदतद्वशत्वस्यापि दर्शनादिति**॥ जिघृक्षोर्ग्रहणाभावाद-स्वातन्त्र्यस्यानुभवसिद्धत्वादित्यर्थः॥ ४-१ ॥

**खण्डार्थ–॥ अथ हैनं सोर्यायणी**॥ उक्तं प्राणादेरखिलस्यापि जगतो भगवधीनत्वम्। तन्न केवलं जाग्रदवस्थायां किं नाम स्वप्नसुषुप्त्योरपीति दर्शयितुमुत्तरो ग्रन्थः। भगवन्नेतस्मिन् पुरुषे शरीरिणि स्वपति सति कानि दैवानि स्वपन्ति ? स्वव्यापारादुपरमन्ते। भाव्यं हि केषाञ्चिद्व्यापारोपरमेण। अन्यथा स्वापस्यैवा-सम्भावात्। कानि दैवान्यस्मिन् पुरुषे स्वपति सति जाग्रति, स्वव्यापारं कुर्वन्ति। सर्वेषामुपरमे शरीरावस्थानासम्भवात्। स्वापो द्विविधः स्वप्नसुषुप्ति-भेदात्। तत्र स्वप्ने य एष देवः स्वप्नान् स्वप्नस्थान् पदार्थान् पश्यति सः कतरः? सर्वेन्द्रियाणामुपरतत्वात् केनेन्द्रियदेवेन जीवः स्वाप्नान् पदार्थाननुभवती-त्यभिप्रायः। सुषुप्तौ च यत्सुखं भवति तत्कस्य? तदोपरतकरणस्य जीवस्य विषयसंसर्गाद्यभावेन कथं सुखानुभवो घटत इत्याशयः। एते च स्वपन्तो जाग्रतः स्वप्नाद्यवस्थावन्तश्च न तावत् स्वतन्त्राः। बहूनां स्वातन्त्र्यायोगात्। न च जीवाधीनाः, क्वचिदतद्वशत्वस्यापि दर्शनात्। न च मुख्यप्राणाधीनाः, तस्यापि जीवत्वेनानवस्थितेरसम्भवाच्च। अतः पराधीना एते सर्वे कस्मिन् सम्प्रतिष्ठिता भवन्ति? परमेश्वरश्चेदाश्रयः तत्कुत इत्यभिप्रायः ॥ ४-१ ॥

**नर–**चतुर्थप्रश्नप्रतिवचनमारभते– **अथेति** ॥ उक्तं प्राणादेरखिलस्यापि जगतो भगवदधीनत्वम्। तन्न केवलं जाग्रवदवस्थायां, किन्नाम? स्वप्न-सुषुप्त्योरपीति दर्शयति– **भगवन्निति** ॥ भगवन्नेतस्मिन्पुरुषे स्वपति सति कानि

तत्त्वदेवानि स्वपन्ति हि । भाव्यं हि केषाञ्चित् स्वव्यापारोपरमेण। अन्यथा स्वापस्यैवा-सम्भवात्। स्वप्नावस्थायां यो देवः स्वप्नान् स्वाप्नार्थान् पश्यति जीवाय दर्शयति। एष देवः कतरः । सुषुप्तौ यत्सुखं भवति तदेतत्कस्य भवति। उपरतकरणजीवस्य विषयभोगाभावेन सुखासम्भवात्। एते सर्वे स्वपन्तो जाग्रतः स्वाप्नाद्यवस्थावन्तश्च कस्मिन्प्रतिष्ठिता भवन्ति। इतरेषामस्वातन्त्र्याद्भवगवांश्चेत्कथमित्याशयः।। ४-१ ।।

**उदय**–एवं जाग्रदवस्थास्थितस्य प्राणादेरखिलजगतः आश्रयत्वं परमात्मनः प्रतिपाद्य, स्वप्नसुषुप्त्यवस्थे अपि परमात्माधीने इत्याह वेदपुरुषः— **अथेत्यादिना** ।। अथ तत्प्रश्नप्रतिवचनानन्तरं एनं ह गुरुमेव सौर्यायणी गार्ग्यः पप्रच्छ पृष्टवान्। हे भगवन् पूज्य गुरो एतस्मिन् पुरुषे जीवे स्वपति । सतीति शेषः । कानि दैवतानि स्वपन्ति । 'ञि ष्वञ् शये'। स्वव्यापारादुपरमन्तीत्यर्थः । अस्मिन् पुरुषे स्वपति सति कानि जाग्रति स्वव्यापारं कुर्वन्तीत्यर्थः। 'जागृ निद्राक्षय' इति धातोः रूपम्। शरीरावस्थानार्थं केषाञ्चिदवस्थानमपेक्षितमिति भावः । यः स्वप्नान् स्वप्नपदार्थान् पश्यति । जीव इति शेषः । एष कतरः कः देवः केनेन्द्रियदेवेन जीवः स्वप्नाननुभवतीत्यर्थः। स्वापस्य स्वप्नसुषुप्तिरूपद्वैविध्यात् पूर्वं स्वप्नं पृष्ट्वा सुषुप्तिं पृच्छति। कस्येति। सुषुप्तौ यत्सुखं भवति एतत् सुखं कस्य भवति। सर्वेन्द्रियाणामुपरतत्वेन विषयसम्बन्धाभावात् कथं सुखानुभव इति भावः । सर्वे मुख्यप्राणादयः कस्मिन् सम्प्रतिष्ठिता आश्रिताः भवन्ति सर्वेषामस्वातन्त्र्यात् कस्य वशे तिष्ठन्तीत्यर्थः।। ४-१ ।।

## उपनिषत्

**तस्मै स होवाच। यथा गार्ग्य मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति ताः पुनरुदयतः प्रचरन्त्येवं हैतत् सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते**

**नाभिवदते नाऽदत्ते नाऽनन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते॥ २॥**

**भाष्यम्**

**'रश्मीनामविशेषेऽपि ह्यन्यदृष्टिव्यपेक्षया।**
**सूर्यस्य मण्डलं यान्तीत्युच्यन्ते तददर्शनात्॥**
**एवं विष्णोस्तु सामीप्याद्देवानां सुप्तिगस्य तु।**
**व्यवहाराकरत्वाच्च एकीभाव इतीर्यते॥' इति च॥ २॥**

**टीका**—एवं पृष्टवते तस्मै स होवाच—**यथेत्यादि**॥ अत्रार्कमरीचीनां यत्तेजोमण्डलेऽस्तमये एकीभावकथनं, यच्चोदये तस्मात् पुनः प्रचारवचनं तदनुपपन्नम्। अत्रास्तमयेऽपि देशान्तरे पृथक्दर्शनादिनाऽऽदित्यरश्मीनामुदयास्तमययोरविशेषात्। इन्द्रियादिदेवानां चात्र स्वापे वक्तव्ये मनस्येकीभावकथनं कुत्र सङ्गच्छते? कथं वा युज्यते? नहि भिन्नयोरभेदः क्वचिद्दृष्टः। कथञ्च मनसः परदेवत्वमितीत्यत एतद्वाक्यं समञ्जसयितुं व्याख्यानरूपां स्मृतिमुदाहरति—**रश्मीनामिति**॥ सुप्तिगस्य देवानामिति तत्तदिन्द्रियाद्यभिमानिदेवानामित्यर्थः। सुप्तिगस्य तद्देवानां चेति वा। ततश्चायमर्थः— हे गार्ग्य, यथाऽर्कस्यास्तमदर्शनं गच्छतस्सतः सर्वा एव मरीचयस्सर्वेऽपि रश्मयः एतस्मिन्दृश्यमाने तेजोरूपमण्डले एकीभवन्ति तत्रैकीभूता इव दृश्यन्ते, प्रकाशनादिव्यापारादुपरमन्त इति यावत्, ताः पुनस्ते तु रश्मयोऽर्कस्य पुनरुदयतः सतः प्रचरन्ति तस्मान्मण्डलान्निर्गत्य लोके प्रचरन्तीव दृश्यन्ते, स्वव्यापारं कुर्वन्तीति यावत्। एवं खल्वेतत्सर्वं शरीरी तदिन्द्रियदेवताजातश्च परे देवे विष्णौ स्वप्नावस्थायां मनसि स्थिते, सुषुप्तौ तु हृदयाकाशस्थे एकीभवति। जागरे तु प्रचरति। अनेन स्वप्ने मनोव्यतिरिक्तानामेवोपरमः। सुषुप्तौ तु तस्यापीति सूचितम्। यत एवं तेन कारणेन, तर्हि तदा स्वापे एषः पुरुषो जीवो न शृणोतीत्यादि। नेयायते न गच्छति। स्वप्नविवक्षया चैतत्। सुषुप्तौ तु न मनुत इत्याद्यपि द्रष्टव्यम्। यत एवं जीवः स्वापे परं देवं प्राप्नोति, अत एव हि तदा स्वपितीत्याचक्षते विद्वांसः। स्वं स्वतन्त्रं देवमप्येतीति कृत्वेति॥ २॥

**वामन–** अथ 'यथा गार्ग्य मरीचय' इत्यादिवाक्यानामभिप्रायं वक्ति– **रश्मीना-मविशेषेऽपीत्यादि प्रभञ्जनवाक्येन**॥ यथा सूर्यस्यास्तं गच्छतो मरीचयस्तन्मण्डलं प्रविश्य तस्मिन्नेकीभवन्तीति स्थूलदृग्व्यवहारेऽपि न तत्सत्यम्। नहि तासां तदैक्यं केनचित्प्रमाणेन सिद्धम्। सूक्ष्मदृग्बुद्धौ तासां पूर्ववद् भेदेन तस्मिन् स्थित्यवगमात्। एवं देवादीनामपि भगवत्सामीप्या-दिनिमित्तात्तस्मिन्नेकीभाव-वद्व्यवाहर एवाल्पज्ञैः क्रियते। नत्वेकीभावोऽस्ति। सर्वप्रमाणबाध्यत्वात्। तस्य परस्य प्रतियोगित्वानुक्तेः। परे देव इत्यधिकरण-त्वोक्तेश्च। सुप्तजीवस्तु परेण ग्रस्तकरणत्वात् श्रवणादिकं न करोति। तदा जीवं सेन्द्रियं स्वपितीत्याचक्षते, न ह्येकीभूत इति॥ ४-२ ॥

**प्रकाशिका–** मनस्येकीभवतीत्येतदुपलक्षणमिति भावेनाऽऽह– **सुषुप्तौ हृदयाकाशस्थ इति**॥ तदा मनसोऽप्युपरतत्वादित्यर्थः। 'न मनुते इत्याद्यपि द्रष्टव्यम्' इत्यत्रादिशब्देन न स्वप्नान् पश्यति, नापि स्वाप्नविषयभोगजसुख-मनुभवतीत्यादि गृह्यते। 'स्वं स्वतन्त्रमप्येति' इति वदता स्वं ह्यपीतो भवतीति श्रुत्यन्तरे व्याख्यानात् स्वपितीत्यत्रापि पिधानार्थकापीत्युपसर्गाद् 'इण् गतौ' इति धातोश्च गुणस्य चाविवक्षायां 'समाने पूर्वलोप' इति वचनात्तदुपपदेऽकार-लोपे च सति स्वपीत्यपीतीत्यर्थः सूचितः॥ २ ॥

**श्रीनिवास–**॥ **व्यवहाराकरत्वाच्चेति** ॥ सुप्तिगस्य तद्देवानां च सामीप्यादे-कीभाव उक्तः। निमित्तान्तरं चाह– **व्यवहारेति** ॥ जीवे स्थित्वा येन देवेन यो भेदेन स्वोचितो व्यवहारः जीवेन करणीयस्तस्य तेन क्रियमाण-त्वादेकीभाव इवोच्यत इत्याहुः॥ **न मनुत इत्यादीति**॥ स्वप्ने मनोव्यापारस्य सत्वान्न मनुत इति नोक्तम्। सुषुप्तौ तदभावान्न मनुत इति द्रष्टव्यमित्युक्तम्। आदिपदेन न पश्यतीत्यादि ग्राह्यम्।

**छलारी–**॥ **स्वापे वक्तव्य इति**॥ इन्द्रियप्रेरणरूपव्यापारजनकत्वेनेत्यर्थः॥ **सुप्तिगस्येति** ॥ सुप्तिगस्य सुप्त्यवस्थापन्नस्य जीवस्येत्यर्थः। शरीरी जीवः॥ **मनसि स्थित इति** ॥ मनसीत्यनन्तरं स्थित इति श्रुतौ शेषोक्तिः। तैजसनामक-

विष्णुविशेषणञ्चैतत् ॥ **उपनिषद्यन्यदप्यध्याहार इति** ॥ **सुप्तावित्यादिना** ॥ **हृदयाकाश इति** ॥ तत्स्थप्राज्ञनामके विष्णावित्यन्वयः। अनेन उपनिषदि मनसीति वचनेन यत एवमिति स्वप्ने मनोव्यतिरिक्तसर्वेन्द्रियाणामुपरम इति शेषः ॥ **नेयायते न गच्छतीति** ॥ इण् गतावित्यतः 'कण्ड्वादिभ्यो यक्' इति सूत्रेण कण्ड्वादेराकृतिगणत्वाङ्गीकारात्। तत्र कण्ड्वादिगणे इण् गतावित्यकारान्तमाश्रित्येण्धातोः ङित्वादात्मने पदे लटि तप्रत्यये मध्ये कण्ड्वादित्वाद्यक् प्रत्ययेऽकृत्सार्वधातुकयोर्दीर्घ इति अशब्दस्य दीर्घे ईयायते इति रूपमिति भावः। अत एव धातुवृत्तिकारेण माधवेनोक्तम्। अस्य कण्ड्वादेराकृतिगणत्वात् रैधवलादिभ्यो रैयति धवलयतीति चोक्तमिति। एवं श्रुतावपि रसयते इत्यत्र रसं गृह्णातीत्यर्थः। रसशब्दात्प्रातिपादकात् धात्वर्थे बहुलमिष्टवच्चेति सूत्रेण ग्रहणार्थे णिचि आतो लोपस्य स्थानिवद्भावेनात उपधाया इति न दीर्घः। एवमानन्दयत इत्यत्रानन्दशब्दादनुभवार्थे अनेनैव णिच् । स्पृशतेत्यादावात्मनेपदं तु व्यत्ययो बहुलमिति बोध्यम्॥ **स्वप्नविवक्षया चैतदिति** ॥ दशेन्द्रियमात्रव्यापारराहित्यकथनमित्यर्थः ॥ **न मनुत इति** ॥ सङ्कल्पादिरूपमनोव्यापारं न करोतीत्यर्थः। श्रुतौ सर्वेन्द्रियव्यापाराभावोक्त्यनन्तरं स्वपितीत्याचक्षत इत्यस्यासङ्गतत्वशङ्कावारणार्थं पूर्वोक्तहेत्वनुवादपूर्वकं कर्त्रध्याहारञ्च कुर्वन् तद्वाक्यं योजयति– **यत एवमित्यादिना** ॥ आचक्षते जीवमिति शेषः। आङ्पूर्वात् चक्षिङ् व्यक्तायां वाचीत्यतः लटि बहुवचनम्। अदादित्वाच्छपो लुकि 'आत्मनेपदेष्वनतः' इति अस्यादादेशे टित आत्मनेपदानामिति एत्वे चक्षत इति रूपम्। वदन्तीत्यर्थः। अत्र श्रुत्यन्तरे स्वं ह्यपीतो भवतीत्युक्तं हेतुमर्थकथनपूर्वकमत्र योजयति– **स्वतन्त्रमिति** ॥ अपिहितः प्राज्ञेनालिङ्गितः। एति प्राज्ञं प्राप्नोतीत्यर्थः॥ ४-२ ॥

**ताम्रपर्णीय**–रश्मीनामिति भाष्यस्यायमर्थः। सूर्यरश्मीनामुदयास्तमययोरविशेषेऽपि तददर्शनादस्तमये तेषां रश्मीनां अदर्शनाद्व्यवहाराकरत्वाच्च अज्ञदृष्टिमपेक्ष्य रश्मयः सूर्यस्य मण्डलं यान्तीत्युच्यन्ते। एवं सुप्तिगस्य स्वप्नगस्य तदिन्द्रियाभिमानिदेवानाञ्च स्वप्नावस्थायां हृदयस्थविष्णोः सामीप्याज्जाग्र-

द्व्यवहारोपरमाच्च मनसि स्थिते तैजसनामके विष्णावेकीभाव इतीर्यते श्रुतौ नत्वैक्यादिति। तथा सुप्तिगस्य सुषुप्तिगस्य तदिन्द्रियदेवानां मनआद्यभिमानिनाञ्च हृदयाकाशस्थप्राज्ञाख्यविष्णोरतिसामीप्यात्तत्प्रवेशात् जाग्रत्स्वप्नव्यवहाराकरत्वाच्चैकीभाव इतीर्यत इति।

हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति ।
समीपस्थस्तथा स्वप्नं स्वपित्यस्मिन् लयं व्रजन् ।।

इति वचनात्। 'मनस्यन्तस्तु तैजसः। आकाशे च हृदि प्राज्ञः' इति श्रुतेश्च॥ ४-२ ॥

**मङ्गालीय**—यथा गार्ग्येति वाक्यस्य प्रतीतार्थे लेशतोऽनुपपत्तिं प्रदर्श्यार्थान्तरमुच्यते भाष्ये। तत्र भाष्योक्तामनुपपत्तिं विवृण्वन् तद्दिशा दार्ष्टान्तिकवाक्यस्यापातप्रतीतार्थेऽप्यनुपपत्तिं वदन् भाष्यमवतार्य किञ्चिद्व्याचष्टे— **अत्रार्कमरीचीनामित्यादिना** ॥ **अत्रेति** ॥ अस्मिन्वाक्य इत्यर्थः॥ **अत्रेति** ॥ एतद्देश इत्यर्थः। पृथग्दर्शनादिनेत्यादिशब्देन प्रकाशनादिव्यापार उच्यते॥ **स्वापे वक्तव्य इति** ॥ इन्द्रियप्रेरणारूपव्यापारोपरम इत्यर्थः॥ **सुप्तिगस्येति** ॥ सुप्त्य-वस्थापन्नस्य जीवस्य सम्बन्धिनो ये देवास्तेषामित्यर्थमभिप्रेत्य सम्बन्धप्रदर्शनाय तदिन्द्रियाद्यभिमानीत्युक्तमित्यर्थः। सुप्तिगस्यापि भगवत्सामीप्यस्य प्रमितत्वाच्चशब्दमध्याहृत्य द्वितीयं व्याख्यानम्॥

ततश्चायं समग्रभाष्यार्थः— अन्यदृष्टिव्यपेक्षया अन्येषां देशान्तरगतानां पृथग्दर्शनान्निमित्तात्। उपलक्षणमेतत्। प्रकाशनादिव्यापाराच्च सूर्यरश्मीनामुदयास्तमययोरविशेषेऽपि अस्तमये तददर्शनात्। तेषां रश्मीनामेतद्देशगतैः प्रकाशनादिव्यापारहेतुत्वेनादृष्टत्वात् जातरश्मयः सूर्यमण्डलं यान्तीति भ्रान्त्या तथा व्यवह्रियन्ते। एवमुदयेऽपि मण्डलमात्रदर्शनानन्तरं रश्मीनां क्रमेण दृष्टेर्मण्डलान्निर्गत्य चरन्तीति भ्रान्त्यैवोच्यन्त इति द्रष्टव्यम्। तथाच भ्रान्तिप्रतीतार्थो दृष्टान्ततयात्रोच्यत इत्युक्तं भवति। अत्र दृष्टान्तवाक्ये तेजोमण्डल एकीभवन्तीति भ्रान्त्यनुवादेन मरीचीनां सूर्यमण्डललक्षणैकस्थानप्राप्तभ्रम-

निमित्तत्वं प्रकाशतापनादिव्यवहारहेतुत्वञ्चेति यत्प्रमेयद्वयमभिप्रेतं तदनुसारेण दार्ष्टान्तिकवाक्यार्थ उच्यते– **एवमिति** ॥ ईर्यते श्रुताविति शेषः। एकीभावशब्दप्रयोगस्य स्वरूपैक्यप्राप्तौ क्वाप्यदृष्टत्वात्। 'गावः सायं गोष्ठे एकीभवन्ति' इत्यादौ एकस्थाननिवासप्राप्तौ च दृष्टत्वात्। बहुतरक्षीरेणैकीभूतस्य पृथग्व्यवहारादर्शनेनैकीभावशब्दस्य तत्कार्ये प्रवृत्त्यकारणत्वे च लक्षणासम्भवादिति भावः। अत्र देवानां स्वस्वव्यापारकर्तृत्वमेव प्रकृतप्रश्नस्योत्तरतयाभिप्रेतं भगवत्सामीप्यप्राप्तिस्तु स्वस्वस्थानेषु स्थितानां तेषां व्यापाराभावासम्भवात्तदुपपादकतयोक्ता । अन्यथाऽसङ्गतेः। तेन तर्ह्येष पुरुषो न शृणोतीत्यादिप्रपञ्चनाच्चेति। शरीरी जीवः॥ **मनसि स्थित इति** ॥ मनसीत्यनन्तरं स्थित इति श्रुतौ शेषोक्तिः। तैजसनामकविष्णुविशेषणञ्चैतत्। उपनिषदि अन्यदप्यध्याहरति– **सुषुप्तावित्यादिना** ॥ प्राज्ञनामकविष्णुविशेषणमेतत्॥ **अनेनेति** ॥ उपनिषदि मनसीति वचनेनेत्यर्थः॥ **यत एवमिति** ॥ स्वप्ने मनोव्यतिरिक्तसर्वेन्द्रियाणामुपरम इत्यर्थः॥ **स्वप्नविवक्षया चैतदिति** ॥ दशेन्द्रियमात्रव्यापारराहित्यकथनमित्यर्थः॥ **न मनुत इत्याद्यपीति** ॥ आदिशब्देन न बुद्ध्यते नाहं करोति न चेतयत इत्यादिपरिग्रहः। सङ्कल्पादिरूपमनोव्यापारादिकं न करोतीत्यर्थः। श्रुतौ सर्वेन्द्रियव्यापाराभावोक्त्यनन्तरं स्वपितीत्याचक्षते इत्यस्यासङ्गतत्वशङ्कावारणार्थं पूर्वोक्तहेत्वनुवादपूर्वकं कर्त्रध्याहारं कुर्वंस्तद्वाक्यं योजयति– **यत एवमिति** ॥ आचक्षते जीवमिति शेषः। अत्र 'स्वं ह्यपीतो भवति' इति श्रुत्यन्तरोक्तहेतुमर्थकथनपूर्वकं योजयति– **स्वं स्वतन्त्रमिति** ॥ **अप्येतीति** ॥ अपि अपिहितः प्राज्ञेनालिङ्गितः। एति प्राज्ञं प्राप्नोतीत्यर्थः॥ २॥

**अनन्तभट्टीय**–यथा गार्ग्येति वाक्यस्य प्रतीतार्थे लेशतोऽनुपपत्तिं प्रदर्श्यार्था-न्तरमुच्यते। भाष्ये तत्र भाष्योक्तानुपपत्तिं विवृण्वन् तद्दिशा दार्ष्टान्तिकवाक्येऽपि तद्वतीत्यर्थे अनुपपत्तिं वदन् भाष्यमवतार्य किञ्चिद्व्याचष्टे– **अत्रास्तेति** ॥ पृथक्दर्शनादिनेत्यादिपदेन प्रकाशनादिव्यापार उच्यते। सुप्तिगस्थोऽपि भगवत्सामीप्यस्य प्रमितत्वाच्च शब्दमध्याहृत्य द्वितीयं व्याख्यानम्।

ततश्चायं समग्रभाष्यार्थः—अन्यदृष्टिव्यपेक्षया अन्येषां देशान्तरगतानां पृथक् दर्शनान्निमित्तात् । उपलक्षणमेतत् । प्रकाशनादिव्यापाराच्च । सूर्यरश्मीनामुदयास्तमययोरविशेषे अस्तमये तददर्शनात्तेषां रश्मीनामेतद्देशगतप्रकाशनादिव्यापारहेतुत्वेनादृष्टत्वाज्जातया 'रश्मयः सूर्यमण्डलं यान्ति' इति भ्रान्त्या तथा व्यवह्रियन्ते। एवमुदयेऽपि मण्डलमात्राद् द्रष्टव्यम् । तथाच भ्रान्तप्रतीतार्थे दृष्टान्ततया अत्रोच्यत इत्युक्तं भवति। अत्र दृष्टान्तवाक्ये तेजोमण्डल एकीभवन्तीति भ्रान्त्यनुवादेन मरीचीनां सूर्यमण्डललक्षणैकस्थान प्राप्तिभ्रान्तिनिमित्तम्। प्रकाशनतापनादिव्यवहारहेतुत्वश्चेति यत्प्रमेयद्वयं तदभिप्रेत्य । एकीभावशब्दप्रयोगस्वरूपैक्यप्राप्तौ काप्यदर्शनाद्गावः सायं गोष्ठे एकीभवन्तीत्यादावेकस्थाननिवासप्राप्तौ च दृष्टत्वाद्बहुतरक्षीरेणैकीभूतस्य नीरस्य पृथग्व्यवहारदर्शनेनैकीभावशब्दस्य तत्कार्ये प्रवृत्तिकारणत्वे च लक्षणासम्भवादिति भावः। अत्र देवानां स्वस्वव्यापाराकर्तृत्वमेव प्रकृतप्रश्नस्योत्तरतया अभिप्रेतम्। भगवत्सामीप्यप्राप्तिस्तु स्वस्वस्थानेषु स्थितानां तेषां व्यापाराभावासम्भवात्तदुपपादकतयोक्ता। अन्यथा सङ्गतेः तेन तर्ह्येष पुरुषो न शृणोतीत्यादिप्रपञ्चनाच्चेति।। ४-२ ।।

।। इति अनन्तभट्टविरचितं षट्प्रश्नटीकाविवरणम् ।।

**गूढकर्तृक**—यद्यपि सर्वत्रातद्वशा एव तथापि तदभिमानापेक्षयेयमुक्तिः। सुप्तिगम्यदेवानाञ्च कः सम्बन्धो येन षष्ठी घटत इत्यत आह– **तदिन्द्रियेति** ।। ततश्चायं भाष्यार्थः। सूर्यरश्मीनामुदयास्तमययोरविशेषेऽपि अस्तसमये तददर्शनान्निमित्तात्सूर्यस्य मण्डलं यान्तीत्यज्ञदृष्टिमपेक्ष्य श्रुतौ रश्मयः सूर्यस्य मण्डलं यान्तीति यथोच्यते एवं सुप्तिगस्य देवानां विष्णोश्च सामीप्याज्जाग्रत्स्वप्नव्यवहाराकारत्वाच्च सुप्तिगस्य देवानां विष्णोश्च एकीभाव इत्युच्यत इति।। ४-२ ।।

**खण्डार्थ**—एवं पृष्टवते स होवाच– **यथेत्यादि** ।। हे गार्ग्य, यथाऽर्कस्यास्तमदर्शनं गच्छतः सर्वा एव मरीचयः सर्वेऽपि रश्मयः एतस्मिन् दृश्यमाने तेजोमण्डले एकीभवन्ति, तत्रैकीभूता इव दृश्यन्ते, प्रकाशादिव्यापारादुपरमन्त

इति यावत्, ताः पुनस्ते तु रश्मयोऽर्कस्य पुनरुदयतः सतः प्रचरन्ति । तस्मात् मण्डलान्निर्गत्य लोके प्रचरन्तीव दृश्यन्ते। स्वव्यापारं कुर्वन्तीति यावत्। एवं खल्वेतत्सर्वं शरीरितदिन्द्रियदेवताजातश्च परे देवे विष्णौ स्वप्नावस्थायां मनसि स्थिते, सुषुप्तौ हृदयाकाशस्थ एकीभवन्ति। जागरे तु प्रचरन्ति। अनेन स्वप्ने मनोव्यतिरिक्तानामेवोपरमः, सुषुप्तौ तु तस्यापीति सूचितम्। यत एवं तेन कारणेन तर्हि तदा स्वापे एष पुरुषो जीवो न शृणोतीत्यादि। नेयायते न गच्छति। स्वप्नविवक्षया चैतत्। सुषुप्तौ तु न मनुत इत्याद्यपि द्रष्टव्यम्। यत एवं जीवः स्वापे परं देवं प्राप्नोति, अत एव हि तदा स्वपितीत्याचक्षते विद्वांसः, स्वं स्वतन्त्रं देवमप्येतीति कृत्वेति ॥ ४-२॥

**नर**–एवं पृष्टवते तस्मै स होवाच– **यथेति** ॥ हे गार्ग्य यथार्कस्यास्तमदर्शनं गच्छतः सतः सर्वा एव मरीचयः सर्वे रश्मयोऽर्कस्य तस्मिन् दृश्यमाने तेजोमण्डले एकीभवन्ति। तत्र एकीभूता इव दृश्यन्ते। ताः पुनस्ते तु रश्मयो-ऽर्कस्य पुनरुदयतः सतः चरन्ति मण्डलान्निर्गत्य प्रचरन्तीव दृश्यन्ते। एवं खलु तत्सर्वं शरीरतच्चक्षुरादिदेवादिकं स्वप्नावस्थायां मनसि तदभिमानिरुद्रे स्थिते परे देवे विष्णौ तिष्ठन्ति। सुषुप्तौ मनसोऽप्युपरतत्वात्। हृदयाकाशे स्थिते विष्णौ एकीभवन्ति। एकीभूता इव दृश्यमानाः स्वप्नादुपरमन्ते जागरे प्रचरन्ति । यत एवं तेन कारणेन। तर्हि तदा स्वापे एष पुरुषो जीवः न शृणोतीत्यादि । नेयायते न गच्छति। स्वप्नविवक्षयैतत्। सुषुप्तौ तु न मनुते नानुसन्धत्ते इत्यपि द्रष्टव्यम्। स्वं स्वतन्त्रं देवमप्येतीति कृत्वा एनं जीवं स्वपितीत्याचक्षते विद्वांसः॥ ४-२॥

**उदय**–एवं प्रश्नान् श्रुत्वा गार्ग्याय सदृष्टान्तं प्रथमप्रश्नोत्तरमाह– **यथेति** ॥ गार्ग्य यथाऽस्तं गच्छतोऽर्कस्य सूर्यस्य सर्वा मरीचय एतस्मिन् दृश्यमाने तेजोमण्डले तेजःसमूहरूपे एकीभवन्ति एकीभूता इव दृश्यन्ते। स्वव्यापारादुपरमन्ते इत्यर्थः। उदयतः सूर्यस्य सम्बन्धिनस्ते रश्मयः पुनः प्रचरन्ति। तस्मान्मण्डलान्निर्गत्य लोकं प्रचरन्तीव दृश्यन्ते। स्वव्यापारं कुर्वन्तीत्यर्थः। एवं हवा एवमेव खलु एतत्सर्वं शरीरेन्द्रियदेवतासमूहात्मकम् । परे देवे सर्वोत्कृष्टतैजसात्मके भगवति

स्वप्नावस्थायां मनसि इन्द्रियप्रेरकत्वेन स्थित इति शेषः। सुषुप्तौ हृदयाकाशस्थ इति ज्ञातव्यम्। एकीभवति तत्समीपं तिष्ठति। च्विप्रयोगेण स्वरूपाभेदं निवारयति। अनेन स्वप्नमनोऽतिरिक्तानामिन्द्रियाणां उपरम इत्युक्तं भवति। सुषुप्तौ तु मनसोऽपि लयः। तेन कारणेन तदा स्वप्ने एष पुरुषः जीवः न शृणोति न बाह्यशब्दजातम्, श्रवणेन्द्रियस्योपरतत्वादिति भावः। नच पश्यति बाह्यचक्षुषः उपरमात् बाह्यं, रूपवत्पदार्थजातं, न जिघ्रति बाह्यं गन्धजातम्। घ्राणेन्द्रियस्योपरमात्। 'घ्रा गन्धोपादाने' इति धातुः। न रसयते रसनेन्द्रियस्योपरतत्वात्। न स्पृशति त्वगिन्द्रियस्योपरमात्। ज्ञानेन्द्रियोपरममुक्त्वा कर्मेन्द्रियोपरममाह– **नाभिवदत इति** ॥ नाभिवदते बाह्यवागिन्द्रियेण न वक्तीत्यर्थः। नादत्ते वा हस्ताभ्यां न गृह्णाति न ददाति च। नानन्दयते बाह्योपस्थेन, न विसृजति बाह्यपायुना । नेयायते न गच्छति बाह्यपादाभ्यां 'इण् गतौ' इत्यस्य रूपम्। यतो जीवः परं प्राप्नोति तेन कारणेन जीवः स्वपितीति विद्वांसः आचक्षते ॥ ४-२ ॥

## उपनिषत्

**प्राणाग्नय एवैतस्मिन् पुरे जाग्रति। गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद् गार्हपत्यात् प्रणीयते। प्रणयनादाहवनीयः प्राणो यदुच्छ्वास-निःश्वासावेतावाहुती समं नयति स समानः। मनो ह वाव यजमान इष्टफलमेवोदानः। स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ३ ॥**

**टीका**–कानि जाग्रतीत्यस्योत्तरम्–**प्राणाग्नय इति** ॥ स्वापकाले एतस्मिन्पुरे शरीरे प्राणाः प्राणादिमुख्यप्राणरूपाण्येवाग्नयः प्राणाग्नय एव जाग्रति शरीरधारणा-दिस्वव्यापारं कुर्वन्ति। अग्नय इत्युपलक्षणम्। ऋत्विग्भावस्यापि वक्ष्यमाणत्वात्। कथं तेषामग्न्यादित्वमित्युच्यते– **गार्हपत्य इत्यादि** ॥ तेषां प्राणानामेषोऽपानो गार्हपत्यः पश्चिमत्वसाम्यात्। व्यानोऽन्वाहार्यपचनो दक्षिणाग्निः होमाङ्गत्वसाम्यात्।

यस्माद्गार्हपत्यादाहवनीयः प्रणीयते। प्राणोऽप्यपानात्। तस्मात्प्रणयनात् प्रणयनसाम्यात्प्राण आहवनीयः। यद्यस्माद् द्वावेतौ उच्छ्वासनिश्वासौ ते एवाऽऽहुती समं यथाकालं नयति। तस्मादाहुत्योस्समं नयनसाम्यात्समानः सोऽध्वर्युरिति यावत्। तत्र मननान्मनो जीवो यजमानः। पराधीनफलप्राप्तिसाम्यादित्युत्तरार्थं वचनम्। उदानः इष्टफलम्। यज्ञफलप्रतिपादक उद्गातेति यावत्। फलप्रतिपादकत्वसाम्यात्। कथमुदानस्य फलप्रतिपादकत्वम्? स उदानो ह्येनं यजमानं जीवमहरहः प्रतिदिनम्। सुप्ताविति यावत्। ब्रह्म सुषुम्नागतं गमयति प्रापयतीति। य एवं वेद तेनैवमिष्टं भवति। नित्यं ब्रह्मप्राप्तिफलश्च तस्य भवतीति ज्ञापनायेदमुक्तम्। यत एवं मनोव्यतिरिक्तानामेवोपरमः स्वप्ने तस्माज्जीवस्य मनसः स्वप्नदर्शनं युक्तमिति॥ ३॥

**वामन**–एवमेतस्मिन्पुरे कानि स्वपन्तीत्यस्योत्तरमुक्त्वा कान्यस्मिन् जाग्रती-त्यस्योत्तरमाह– **प्राणाग्नय एवेति** ॥ गार्हपत्य इत्यादिना प्राणाग्नीनां विशेष उच्यते। उत्तराग्न्योरपानस्थानत्वाद्गार्हपत्य अपान इत्युक्तः । गार्हपत्याद्विभज्यानीयत इति व्यानोऽन्वाहार्यपचनः। गार्हपत्यात्प्रज्वलन्नेवानीयत इत्याहवनीयनाम्ना प्राण उच्यते। अत्र ह्युच्छ्वासनिश्वासावेव पूर्वोत्तरे द्वे आहुती । प्राणश्रद्धादिषोडशकलासु समं नयतीति समानोऽग्निरुक्तः। अन्याग्निस्त्वग्निहोत्रे पय आहुती द्वे परेण हूयमाने रुद्रवाय्वादिषोडशकलासु सन्नयति हुतवहत्वात्। 'रौद्रं गविसत् । वायव्यमपावसृष्टम् । आश्विनं दुह्यमानम् । सौम्यं दुग्धम् । वारुणमधिश्रितम् । पौष्णं समुदयन्तम् । मारुतं विष्यन्दमानम् । वैश्वदेवं बिन्दुमत् । मैत्रं शरोगृहीतं। द्यावापृथिवीयमुद्वासितम् । सावित्रं प्रक्रान्तम् । वैष्णवं ह्रियमाणम् । बार्हस्पत्यमुपसन्नम् । अग्नेः पूर्वाहुतिः । प्रजापतेरुत्तरा । ऐन्द्रं हुतम्। एतद्वा अग्निहोत्रं वैश्वदेवं षोडशकलम्' इति हि श्रुतिः। अथ ते द्वे आहुती जुह्वन् मनस्वी जीवो यजमानस्तस्मा इष्टफल उदानोऽग्निः पुण्यलोकप्राप्तिनिमित्तत्वात्। किञ्च स एनं जीवं स्वप्नावस्थायां ब्रह्मसमीपं गमयति। सुप्त्यवस्थायामेव ह्यन्तःप्रवेशः ॥ ४-३ ॥

**प्रकाशिका**–'ऋत्विग्भावस्यापि' इत्यत्र समानोदानयोरध्वर्यूद्गात्राख्यर्त्विग्भावस्यापि वक्ष्यमाणत्वादित्यर्थः। उपलक्षणञ्चैतत्। अग्निवद्धोमाङ्गत्व-

साम्येन समानोदानयोरग्नित्वमपि द्रष्टव्यम्। एवञ्च सति प्राणाग्नय इत्युक्तमुपपन्नमिति ज्ञेयम्। व्यानोऽन्वाहार्यपचन इत्यत्रान्वाहार्यपचन इति दक्षिणाग्नेर्नाम। यद्यपि सर्वशरीरगतस्य व्यानस्य दक्षिणाग्निवत् दक्षिणभाग एव स्थितत्वं नास्ति । तथाऽपि श्वासरूपाहुतेः सर्वशरीरनाडीषु प्रापणेन श्वासरूपहोमाङ्गत्वसाम्यात् व्यानोऽन्वाहार्यपचन इति भावः। 'आहुतीः समं नयति' इत्यत्र समं स्थूलनाडीषु स्थूलतया मध्यमनाडीषु मध्यमतया सूक्ष्मनाडीषु सूक्ष्मतयेति नाडीनां समं यथा भवति तथा श्वासवायुं प्राणाग्निहोत्राङ्गभूतान्नाख्याहुतिरसं च नयतीति कृत्वा समान इत्यर्थः। आहुतीनां च समीकृत्य दानमध्वर्योः कृत्यम्। तस्मादयमध्वर्युरिति भावः। अहरहर्ब्रह्म गमयतीत्युक्तब्रह्मगमनाख्यफलस्य जीवयोग्यत्वान्मनुत इति मनो जीवः। यज्ञफलभोक्तृत्वात्स एव यजमान इत्यर्थः॥ **इत्युत्तरार्थमिति** ॥ उदानस्येष्टफलप्रतिपादकत्वसाम्येनोद्गातृत्वं वक्ष्यते। कस्मै इष्टफलं प्रयच्छत्युदान इति शङ्कायाः जीवरूपयजमानायेत्युत्तरप्रदानार्थमित्यर्थः। 'इष्टं फलम्' इत्यत्रेष्टं फलं य उद्गायति स उद्गातोदान इत्यर्थः। इष्टफलप्रतिपादकसाम्नां गानकर्तोद्गातेवोदानोऽप्युत्कृष्टं ब्रह्म सुषुम्नानाड्या प्रापयित्वेष्टफलं भोजयति। तस्मादुदान उद्गातेति भावः। एतदेव स्पष्टयति– **स य एवमिति**॥ एवमुद्गातृवत्। अत्र सुप्ते स्वप्नस्थानं गतेऽस्मिन्नेव जीवे। स्वप्नावस्थायामिति फलितकथनम् ॥ ३ ॥

**श्रीनिवास–** ऋत्विग्भावस्य। समानोदानयोः अध्वर्यूद्गातृत्वरूपऋत्विक्त्वस्य। उत्तरार्थमित्युक्तं दर्शयति– **य एवं वेदेति** ॥ उपनिषदभिप्रेतं पूरितमिति ज्ञेयम्।

**छलारी–**प्राणाग्नय इति पदे प्राणा अग्नय इव इति विग्रहं मनसि निधाय 'उपमितं व्याघ्रादिभिः' इति समासं कृत्वा प्राणशब्दाग्निशब्दनिष्ठबहुवचनस्याद्यर्थकत्वमाश्रित्य व्याचष्टे– **प्राणाः प्राणादीति** ॥ शरीरधारणादीत्यादिशब्दाद्भुक्तान्नसमनयनं सुषुप्तिकाले प्राज्ञमूर्तिं प्रति जीवप्रापणञ्च ग्राह्यम्। ननु प्राणापानव्यानानामेवोत्तरत्राग्नित्वस्य समानस्याध्वर्युत्वस्योदानस्योद्गातृत्वस्य वक्ष्यमाणत्वात्कथं प्राणादीनां पञ्चानामग्नित्वमुक्तमित्यत आह– **अग्नय इत्युपलक्षणमिति**

॥ उपलक्षणबीजमाह— **ऋत्विग्भावस्यापीति** ॥ प्राणादीनां पञ्चानां मध्य इति शेषः। पश्चिमद्वारगुदेन्द्रियनिष्ठत्वात् पश्चिमत्वमपानस्य व्यानोऽन्वाहार्यपचन इति दक्षिणाग्निरित्यर्थः॥ **होमाङ्गत्वसाम्यादिति**॥ नायं स्वाहेत्याहुतिग्रहण-होमाङ्गत्वसाम्यादित्यर्थः ॥ **प्राणोऽप्यपानादिति** ॥ यथा गार्हपत्याग्नेः पृथक्कृत्वाहवनीयकुण्डे नीतोऽग्निराहवनीय इत्युच्यते। तथापानदेशादपानरूप-मुख्यप्राणात्पृथक्कृतः श्वासरूपःप्राणमुपनीतः आहवनीय इति भावः॥ **पराधीनेति** ॥ यथा प्रसिद्धयजमाने स्वर्गादिफलं ऋत्विगधीनं तथा सुषुप्तौ जीवस्य सुखफलप्राप्तेरुदानाधीनत्वादिति भावः। ननु प्राणादिमुख्यप्राणरूपेषु मनसोऽभावात् श्रुतौ मनो हवा यजमान इति किमर्थमधिकमुक्तमित्यत आह— **उत्तरार्थं वचनमिति** ॥ स एनं यजमानमहरहर्ब्रह्म गमयतीति वक्ष्यमाणफलप्राप्तेर्यजमानाभावेऽसम्भवात्पृथगुक्तिरिति भावः। ननूदानस्य कथमिष्टफलत्वमित्यत आह— **लक्षणयेति** ॥ इष्टफलशब्दं व्याचष्टे— **यज्ञफलप्रतिपादकमिति**॥ इष्टफल-प्रतिपादकत्वेन कथमत्रोपयोग इत्यत आह— **उद्गातेति यावदिति** ॥ उदानस्य फलप्रतिपादकत्वेऽपि कथमुद्गातृत्वमित्यत आह— **फलप्रतिपादकत्व-साम्यादिति** ॥ उद्गातुर्यज्ञफलप्रतिपादकत्वेनोदानस्यापि तत्साम्यादिति भावः। उदानस्याहरहर्ब्रह्मगमकत्वे श्रवणादिसाधनवैयर्थ्यमित्यतो विवक्षितब्रह्मगमनमाह— **सुषुम्नागतमिति** ॥ प्राज्ञमित्यर्थः। प्राणादीनां जागरणज्ञानेऽस्त्विष्टत्वमित्यत आह— **नित्यं ब्रह्म प्राप्तमिति** ॥ मोक्षफलमित्यर्थः॥ ४-३ ॥

**ताम्रपर्णीय**—॥ **पश्चिमत्वसाम्यादिति**॥ पृष्ठभागस्थत्वसाम्यादित्यर्थः॥ गार्हपत्य आहवनीयात्पश्चिमदेशस्थः । अपानोऽपि मुख्यस्थप्राणात्पृष्ठभागस्थ इति भावः। यद्वा पश्चिमत्वं पूर्वभावित्वं तत्साम्यादित्यर्थः। गार्हपत्यादाहवनीयस्य प्रणयनादेवमपानत्प्राणस्य प्रणयनेन तस्य पूर्वभावित्वादिति भावः ॥ **होमाङ्गत्वसाम्यादिति**॥ दक्षिणाग्नौ होमविशेषकरणेन तस्य होमाङ्गत्ववत् श्वासोच्छ्वासरूपाहुतेर्नाडीद्वारकत्वेन सर्वनाडीगतव्यानस्य होमाङ्गत्वादिति भावः। यद्वा प्राणापानव्यानेषु मध्ये प्राणस्यापाने तस्य व्याने उदानसामानयोश्च व्याने आहुतेश्च तु होमाधिकरणत्वेन होमाङ्गत्वसाम्यादित्यप्याह— **यद्गार्हपत्या-**

**दिति**।। यथैवाहवनीयोऽग्निर्गार्हपत्यात्प्रणीयत इति भारते श्रौते च प्रसिद्ध-मेतदिति भावः। प्राणोऽप्यपानात्प्रणीयते इत्यनुवर्तते। तथाच प्रथमस्कन्धो-दाहृता श्रुतिः। प्राणमपाने तं व्याने समानोदानौ तेषु तांश्च मूलप्राण इति। तत्र च प्राणस्य अपाने लयकथनेनापाने उत्पन्नत्वात्प्रणीयत इति युक्तमेवेति भावः। यद्यपि दक्षिणाग्नेरपि गार्हपत्याद्विभक्तत्वमस्ति, तथापि गार्हपत्याद्विभज्य दक्षिणकुण्डे निक्षिप्य प्रज्वलनम्, आहवनीयस्तु गार्हपत्यात्प्रज्वलन्नेवानीयत इति आहवनीयत इति प्रणयनमत्र मुख्यमिति यद्गार्हपत्यात्प्रकर्षेण नीयत इति विशिष्योक्तमिति भावः। तदुक्तं प्राचीनटीकायां गार्हपत्यात्प्रज्वलन्नेवानीयत इति आहवनीयात्मा प्राण उच्यत इति।। **उत्तरार्थमिति**।। **इष्टं फलमिति**।। येन फलस्योच्यमानत्वात्तद्भोक्ता जीवोऽत्र यजमानत्वेनोक्त इत्यर्थः।। **फलप्रति-पादकत्वेति**।। उद्गाता ह्युद्गानेन देवताः प्रतोष्य तद्द्वारा फलं प्रयच्छतीति भावः। ननु सुप्तौ ब्रह्मप्राप्तेः पुरुषार्थत्वात्कथं श्वासोच्छ्वासाहुतियजनफलं उदाना-त्प्राप्यमुच्यत इत्यत आह– **य एवं वेदेति**।। य एवं प्राणादे-रग्न्यादित्वं वेद तेन इष्टं भवतीति ज्ञापनाय तस्य नित्यमनपायिब्रह्म प्राप्तिलक्षण-फलश्च मुक्तौ भवतीति च ज्ञापनायेदमुक्तमित्यर्थः।। ४-३ ।।

**मङ्गालीय–**।। **प्राणाः प्राणादीति** ।। प्राणा एवाग्नयः इति विवक्षितविग्रह-गतबहुवचनार्थः– **प्राणादीति** ।। ननु प्राणापानव्यानानामेवोत्तरत्राग्नित्वस्य समानोदानयोरध्वर्यूद्गातृभावस्य वक्ष्यमाणत्वात्कथं प्राणादीनां पञ्चानामग्नित्व-मुक्तमित्यत आह– **अग्नय इत्युपलक्षणमिति** ।। उपलक्षणे बीजमाह– **ऋत्विग्भावस्यापीति** ।। प्राणादीनां पञ्चानां मध्य इति शेषः।। **अग्न्यादित्व-मित्युच्यत इति** ।। अग्नित्वं ऋत्विक्त्वञ्च कथमित्यत उच्यत इत्यर्थः।। **पश्चिमत्वेति** ।। पश्चिमद्वारभूते गुदे विद्यमानत्वेनापानस्य पश्चिमत्वमित्यर्थः।। **होमाङ्गत्वसाम्यादिति** ।। व्यानाय स्वाहेति होमाङ्गत्वसाम्यादित्यर्थः ।। **प्राणोऽप्यपानादिति** ।। यथा गार्हपत्याग्नेः पृथक्कृत्वाऽऽहवनीयकुण्डे नीतो-ऽग्निराहवनीय इत्युच्यते तथाऽपानप्रदेशादपानरूपमुख्यप्राणात्पृथक्कृतः श्वास-रूपः मुखे नीत आहवनीय इति भावः ।। **पराधीनेति** ।। यथा प्रसिद्धयज-

मानस्य स्वर्गादिफलं ऋत्विगधीनं तथा सुषुप्तौ जीवस्य सुखरूपफलप्राप्ते-रुदानाधीनत्वादिति भावः। ननु 'प्राणाग्नय एवैतस्मिन्पुरे जाग्रति' इत्युक्त-प्राणाग्नित्वाद्युपपादनार्थं 'गार्हपत्यो हवा' इत्यादेः 'ब्रह्म गमयति' इत्यन्तस्य वाक्यस्य प्रवृत्ततया 'मनो ह वाव यजमान' इत्यनेन मनःशब्दितजीवस्य यजमानत्ववचनं प्रकृतासङ्गतमेवेत्यत आह– **इत्युत्तरार्थं वचनमिति** ॥ उदान-स्योद्गातृत्वोपपादनार्थं प्रवृत्ते 'स एष एनं यजमानमहरहर्ब्रह्म गमयति' इत्यस्मिन्वाक्ये एनं यजमानमिति परामर्शार्थं उपोद्घातसङ्गत्या जीवस्य यजमान-त्वमुक्तमिति भावः। उदानस्य कथमिष्टफलत्वमित्यतो लक्षणयेष्टफलशब्दं व्याचष्टे– **यज्ञफलप्रतिपादक इति** ॥ इष्टफलप्रतिपादकत्वकथनस्य कथ-मत्रोपयोग इत्यत आह– **उद्गातेति यावदिति** ॥ उदानस्य फलप्रतिपादकत्वे कथमुद्गातृत्वमित्यत आह– **फलप्रतिपादकत्वसाम्यादिति** ॥ उद्गातुर्यज्ञफल-प्रतिपादकत्वेनोदानस्य तत्साम्यादिति भावः । ननूदानस्याहरहर्ब्रह्मगमकत्वे श्रवणादिसाधनवैयर्थ्यमित्यतो विवक्षितं ब्रह्मगमनमाह– **सुषुम्नागतमिति** ॥ प्राज्ञमित्यर्थः। ननु कानि जाग्रतीति प्रश्नस्य प्राणा जाग्रतीति जागरणवचनेनैव परिहर्तव्यत्वादपृष्टप्राणाग्नित्वऋत्विक्त्वकथनमसङ्गतमेवेत्यत आह– **य एवं वेदेति** ॥ **ब्रह्मप्राप्तिफलमिति** ॥ ब्रह्मप्राप्तिलक्षणं मोक्षफलमित्यर्थः॥ ४-३॥

**गूढकर्तृक–पश्चिमत्वसाम्यादिति** ॥ पायूपस्थयोर्मुखमपेक्ष्य पृष्ठभागस्थ-त्वादिति भावः॥ **होमाङ्गत्वसाम्यादिति** ॥ दक्षिणाग्नौ विशेषहोमेन होमा-ङ्गत्ववत् व्यानेऽपि हुतान्नस्य विविधं नयनेन होमाङ्गत्वसाम्यमित्यर्थः। श्वासोच्छ्वासरूपाहुतेः नाडीद्वारकत्वेन नाडीगतव्यानस्य होमाङ्गत्वसाम्यादिति वा॥ **प्राणोऽप्यपानादिति** ॥ प्रणीयत इत्यनुवर्तते। यथैवाहवनीयोऽग्नि-र्गार्हपत्यात्प्रणीयत इति भारतवचनाद्गार्हपत्यादुद्धृत्य कुण्डे निक्षिप्याहवनीया-वाहनं क्रियत इति गार्हपत्यादाहवनीय उत्पद्यते। एवं प्राणोऽप्यपानादुत्पद्यते। प्राणमपाने तं व्याने समानोदानौ तेष्विति प्रथमतात्पर्योपात्तश्रुतौ प्राणस्यापाने लयकथनेन प्राणोऽप्यपानादुत्पद्यत इति प्राण आहवनीय इति भावः॥ ४-३ ॥

**खण्डार्थ**—कानि जाग्रतीत्यस्योत्तरम्– **प्राणाग्नय इति** ॥ स्वापकाले एतस्मिन् पुरे शरीरे प्राणाः प्राणादिमुख्यप्राणरूपाण्येवाग्नय प्राणाग्नय एव जाग्रति शरीरधारणादिस्वव्यापारं कुर्वन्ति। अग्नय इत्युपलक्षणम्; ऋत्विग्भावस्यापि वक्ष्यमाणत्वात्। कथं तेषामग्न्यादित्वमित्यत उच्यते– **गार्हपत्य इत्यादि** ॥ तेषां प्राणानामेषोऽपानो गार्हपत्यः। पश्चिमत्वसाम्यात्। व्यानोऽन्वहार्यपचनः दक्षिणाग्निः, होमाङ्गत्वसाम्यात्। यद्यस्माद् गार्हपत्यादाहवनीयः प्रणीयते प्राणोऽप्यपानात्, तस्मात् प्रणयनात् प्रणयनसाम्यात् प्राण आहवनीयः। यद्यस्माद् द्वावेतावुच्छ्वासनिश्वासौ तावेतावाहुती समं यथाकालं नयति तस्मादाहुत्योस्समं नयनसाम्यात् समानः। सोऽध्वर्युरिति यावत्। तत्र मननान्मनो जीवो यजमानः। पराधीनफलत्वसाम्यादित्युत्तरार्थं वचनम्। अन्यथा पूर्वं प्राणादीनामेव प्रकृतत्वेन जीवस्य यजमानत्वोक्तिरयुक्ता स्यात्। अत उत्तरवाक्ये उदानस्य यजमानफलप्रतिपादकत्वेनोद्गातृत्वार्थं जीवस्य यजमानत्वोक्तिरुपपन्नेति भावः। उदानः इष्टफलं यज्ञफलं प्रतिपादकः उद्गातेति यावत्, फलप्रतिपादकत्वसाम्यात्। कथमुदानस्य फलप्रतिपादकत्वम्? स उदानो ह्येनं यजमानं जीवमहरहः प्रतिदिनं सुप्ताविति यावत्, ब्रह्म सुषुम्नागतं गमयति प्रापयतीति य एवं वेद तेनैवमिष्टं भवति। नित्यं ब्रह्मप्राप्तिफलश्च तस्य भवतीति ज्ञापनायेदमुक्तम्। ॥ ४-३ ॥

**नर**—कानि जाग्रतीत्यस्य उत्तरमाह– **प्राणाग्नय इति** ॥ स्वापकाले एतस्मिन् पुरे प्राणाः प्राणादिमुख्यप्राणरूपाण्येवाग्नयः जाग्रति शरीरधारणादिस्वव्यापारं कुर्वन्ति। उपलक्षणमेतत्। ऋत्विग्भावस्यापि वक्ष्यमाणत्वात् । कथं तेषामग्न्यादित्वमित्यत आह– **गार्हपत्येति** ॥ गार्हपत्योऽपानः पश्चिमत्वसाम्यात्। अन्वाहार्यपचनो व्यानः दक्षिणाग्निः होमाङ्गत्वसाम्यात्। यद्गार्हपत्यादाहवनीयः प्रणीयते। प्राणोऽप्यपानात्। तस्मात्प्रणयनात् प्रणयनसाम्यात्। प्राण आहवनीयः यद्यस्मात् यावेतावुच्छ्वासनिश्वासौ एत आहुतिं समं नयति, तस्मादाहुत्योः समं नयनसाम्यात्समानः सोऽध्वर्युः। मननान्मनो जीवो यजमानः पराधीनफलप्राप्तिसाम्यात्। तदुपपादयति– **स इति** ॥ स उदानः उद्गातेति यावत्। एनं यजमानं जीवं अहरहः प्रतिदिनं सुप्तौ ब्रह्म सुषुम्नागतं ब्रह्म गमयति प्रापयति।

य एवं वेद तेन ज्ञानेन तस्येष्टं भवति॥ ४-३ ॥

**उदय**–कानि जाग्रतीत्यस्योत्तरमाह– **प्राणाग्नय इति** ॥ एतस्मिन् पुरे शरीरे प्राणा एव पञ्च मुख्यप्राणरूपाण्येव अग्नय इव प्राणाग्नय एव जाग्रति शरीरधारणादिव्यापारं कुर्वन्तीत्यर्थः। कथं प्राणानामग्नित्वमित्यत आह– **गार्हपत्य इति** ॥ एषः अपाननामा मुख्यः गार्हपत्यनामकः। व्याननामाऽन्वाहार्यपचनसंज्ञः। यस्मात् गार्हपत्यनामकात्प्रणीयते अतः प्रणयनात्प्राणः आहवनीयनामकः । यत् यौ उच्छ्वासनिश्वासरूपे एतौ एते आहुती समं नयति प्रापयति तेन कारणेन स समाननामकः । मनो ह वा मननान्मनोनामा जीवः प्रसिद्धमेतत्। यजमानस्थानभूतः इष्टं फलं वक्तीति शेषः। यज्ञफलप्रतिपादकत्वात् स उदाननामा उद्गातृस्थानीयः। कथमुदानस्य फलप्रतिपादकत्वमित्यत आह– **एनमिति**॥ स य एव पूर्वोक्त उदान एव एनं यजमानं जीवं अहरहः प्रतिदिनं ब्रह्म गमयति प्रापयति । एवं यो वेत्ति तस्य ब्रह्मप्राप्तिलक्षणं फलं भवतीत्यर्थः ॥ ४-३ ॥

### उपनिषत्

**अत्रैष देवः स्वप्ने महिमानमनुभवति यद् दृष्टं दृष्टमनु-पश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरे च। प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति। दृष्टं चादृष्टञ्च श्रुतं चाश्रुतञ्चानुभूतञ्चाननुभूतञ्च सच्चासच्च सर्वं पश्यति सर्वः पश्यति। स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान्न पश्यति। अथ यदेतस्मिञ्छरीरे सुखं भवति ॥ ४ ॥**

### भाष्यम्

भगवतः शरीरवत् सादृश्ययुक्ते जीवे सुखं भवति। कस्यैतत्सुखं भवतीति पृष्टत्वात्। न ह्यचेतनस्य शरीरस्य सुखं भवति। यस्याऽत्मा शरीरमिति च श्रुतिः।

**'सादृश्याद्देहवज्जीवो विष्णोस्तस्य सुखं भवेत्।**
**सुप्तौ तस्य सुखार्थं हि भगवान् सुप्तिमानयेत्॥' इति च॥ ४॥**

**टीका**–तृतीयस्य परहिार उच्यते– **अत्रेत्यादि**॥ अत्रैतस्यामवस्थायां, मनोव्यतिरिक्तेन्द्रियोपरमे इति यावत्। एष देवो मनोनामा तेनानुगृहीतो जीव इति यावत्। स्वप्ने महिमानमात्मनो महत्त्वमन्यच्चानुभवति। तत्र च यमर्थं पश्यति तं प्राग्दृष्टमेवानुपश्यति। यः प्राक्श्रुतस्तं श्रुतमेवार्थं शब्दं स्वप्नेऽनुशृणोति। एवमन्यदप्यनुभूतमेवानुभवति। नाननुभूतम्। किमस्मिन्नेव देशेऽनुभूतमेवानुभवति? न, किन्तु देशान्तरे दिगन्तरे च यत्प्रत्यनुभूतं पुनः पुनरनुभूतं तदेव स्वप्ने पुनःपुनः प्रत्यनुभवति। भ्रान्त्या तदेवेदमिति प्रत्यभिजानाति। नाप्यस्मिन्नेव जन्मन्यनुभूतमनुभवतीति नियमः। किन्त्वस्मिन्जन्मनि दृष्टमदृष्टञ्च, जन्मान्तरे दृष्टम्। एवमुत्तरत्रापि। अनुभूतम्। अननुभूतमिन्द्रियान्तरेण। सच्च तदानीम्, असच्च निवृत्तं चेत्येवं सर्वं पश्यति। स्वयं च सर्वोऽनेकप्रकारः संस्तत्पश्यति।

चतुर्थं परिहर्तुमुच्यते– **स यदेत्यादि**॥ एवं स्वप्ने वर्तमानः स जीवो यदा तेजसा भगवदीयेनाभिभूतः आवृतो भवति, भगवन्तं प्रविशतीति यावत्। अत्रैतस्यां सुषुप्तिसञ्ज्ञायामवस्थायामेव देवो मनः स्वप्नान्न पश्यति। मनसोऽप्युपरतत्वान्न जीवः स्वप्नान् पश्यतीति यावत्। यस्मादेवं परमेश्वरतेजसाऽभिभूतो भवत्यथ तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तदस्मिन्शरीरे भवतीति न काचिदनुपपत्तिरिति।

अत्र शरीरशब्देन प्रसिद्धं शरीरमेवोच्यत इत्यन्यथाप्रतीतिनिरासायाऽऽह– **भगवत इति**॥ प्रातीतिक एवार्थः किन्न स्यादित्यत आह– **कस्येति**॥ कस्यैतत्सुखं भवतीति प्रश्नस्य हीदमुत्तरम्। नतु कुत्र जीवस्य सुखं भवतीति प्रश्नोऽस्ति। येन शरीरे प्रसिद्धे सुखं भवतीति परिहारः सङ्गतः स्यात्। अतः शरीरशब्देन परेणापि जीवो लक्षणीयः। ततो वरं शरीरशब्दस्तद्वाचकः इत्यङ्गीकरणमिति भावः। ननु प्रसिद्धशरीरस्यैव सुखं भवतु। ततो लक्षणाश्रयणमन्तरेणैव प्रश्नानुगुण्यं परिहारस्य भविष्यतीत्यत आह– **नहीति**॥ ननु भवताऽपि शरीर-

शब्दस्य जीवे गौणी वृत्तिराश्रीयते। यथा भगवच्छरीरं भगवत्सदृशमेवं जीवोऽपि भगवच्छरीरमुच्यत इत्युक्तत्वात्। मयाऽपि शरीरशब्देन शरीरी लक्ष्यत इत्युच्यते। अतः को विशेष इत्यत आह– **यस्येति**॥ न जीवे शरीरशब्दो गौणोऽङ्गीक्रियते। येनाविशेषः स्यात्। किन्नाम, अबाधितश्रौतप्रयोगबलात्तद्वाचक एवाभ्युपगम्यते। तथाऽपि जीवादि-प्रसिद्धशब्दं परित्यज्याप्रसिद्धशरीरशब्दोपादाने किं तात्पर्यमिति शङ्कानिरासाय भगवतः शरीरवत्सादृश्ययुक्तो जीव इति तात्पर्यमनेनोक्तम्। तथाहि– सुप्तौ सर्वेन्द्रियाणामुपरतत्वात्किं निमित्तं सुखम्, केन जीवोऽनुभवतीत्यभिप्रायेण पृष्टे परमेश्वरसन्निधानसामर्थ्योद्भूतं सुखमात्मस्वरूपज्ञानेनासावनुभवतीति परिहारोऽभि-प्रेतः। तत्राऽऽत्मनो ज्ञानस्वरूपत्वज्ञापनाय प्रसिद्धपदपरित्यागेन एतत्पदप्रयोग इति भावः। स्मृतिसमाख्यानाच्चायमेवार्थ इत्याह– **सादृश्यादिति**॥ सादृश्यञ्च ज्ञानस्वरूपत्वम्॥ ४ ॥

**वामन**–कतर एष देवः स्वप्नान् पश्यतीत्यस्योत्तरमाह– **अत्रैष देव इति**॥ अत्र ब्रह्मसमीपे एष देवः पञ्चधा वर्तमानः मुख्यप्राणस्तु भगवन्महिमान-मनुभवति। यथा सर्वं पश्यति ब्रह्माख्यो विष्णुदेवस्तु स्वमहिमानं स्वयमेवा-नुभवति। 'न ते महित्वमन्वश्नुवन्ति' इत्यादेरयं भावः। जीवो जाग्रदवस्थायां दृष्टं दृष्टं स्वप्नेऽनुपश्यति। तत्प्रकटनादिभिः स्वप्नः भगवन्महिमा न केवलं तद्देशकालगं तत्रैव प्रकटयति। नापि सकृद्दृष्टं सकृदेवेत्याह– **देशेति** ॥ चशब्दाद्वस्तुविशेषाणामावापोद्वापतश्च प्रकटयति। तदेव विशिनष्टि– **दृष्टञ्चेति** ॥ पुरुषो विषाणी भाषते इत्यादिकं सुघटं दुर्घटञ्चेति सर्वं पश्यति संसारी यतश्च यतः सर्वशक्तिर्भगवानेवं पश्यति दर्शयति जीवाय । स जीवो यथा तेजसोदानेन प्रेरकेण प्राज्ञे विष्णौ प्रवेशनात् तेजसाविर्भूतो भवति। अत्र निद्रावस्थायामेष देवः स्वप्नावस्थायां पदार्थान्दर्शयति। कस्यैतत्सुखमित्यस्योत्तरमाह– **अथ यदिति** ॥ भगवत इत्यादेस्तद्भाष्यस्यायमर्थः। अथ यत्कस्यैतदिति पृष्टं सौप्तिकं सुखं तद्भगवतः शरीरवत् सादृश्ययुक्तत्वाच्छरीरशब्दिते जीवे भवति। अचेतनस्य शरीरस्य सुखभोक्तृत्वासम्भवात् सादृश्याद्देहवज्जीव इत्यादिप्रभञ्जनवाक्यञ्चात्र प्रमाणमाह ॥ ४-४ ॥

**प्रकाशिका**–'एवमन्यदप्यनुभूतमेव' इत्यत्रान्यत् दृष्टश्रुतयोरन्यत्। एवं स्वप्ने यमर्थं जिघ्रति रसयते स्पृशयति च तमपि प्रागाघ्रातं प्राग्रसितं प्राक् स्पृष्टं तत्तदिन्द्रियैरनुभवति। नत्वनाघ्रातमनास्वादितमस्पृष्टञ्चेति भावः। विप्रकृष्ट-देशान्तरे दिगन्तरे च सकृदनुभूतस्य दृढसंस्काराभावेन स्वप्ने दर्शनायोगात् प्रत्यनुभूतं प्रति प्रति वारं वारमनुभूतमित्युक्तम्। जन्मान्तरे दृष्टमित्यत्र जन्मान्तरे दृष्टं स्वशिरश्छेदादिकमित्यर्थः। अत्यन्तासतः स्वप्नेऽपि दर्शनायोगात् सदि-दानीं विद्यमानमसन्नष्टश्चेत्यर्थः। सर्वः शूद्रचण्डालव्याघ्रादिनानारूपवान् ॥ ४ ॥

**श्रीनिवास**– अदृष्टाश्रुतवस्तुविषये वासनायोगेन स्वप्ने दर्शनायोगादाह– **प्राक्दृष्टमेवेत्यादि** ॥ **अदृष्टं चेति** ॥ अस्मिन् जन्मनि। तर्हि दर्शनायोग इत्यत उक्तम्॥ **जन्मान्तर इति** ॥ **एवमिति** ॥ अस्मिन् जन्मनि श्रुतमस्मिन्जन्मन्य-श्रुतमपि जन्मान्तरे श्रुतम्। एवं प्राचीनदेहसम्बन्धीन्द्रियान्तरेणानुभूतमेत-ज्जन्मीयेन्द्रियेणाननुभूतमित्यर्थः।

**छलारी–तृतीयस्येति** ॥ कतर एष देवः स्वप्नान् पश्यतीत्यस्येत्यर्थः। एतस्या-मेवावस्थायां स्वप्नावस्थायामित्यर्थः। ननु 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरो-क्तेर्देवानामस्वप्नत्वादेष देवः स्वप्ने महिमानमनुभवतीति कथमुक्तमित्यत आह– **तेनानुगृहीतो जीव इति यावदिति** ॥ महिमानमिति महच्छब्दात् भावे पृथिव्यादित्वादिमनिचि टेरिति टिलोपे रूपमिति भावेनाह– **महत्त्वमिति** ॥ ननु स्वस्य दुःखित्वादेरप्यनुभवात् कथं महिमानमित्यतोऽपेक्षितमध्याहरति– **अन्यच्चेति** ॥ दुःखादिकञ्चेत्यर्थः। दृष्टं दृष्टमनुपश्यतीत्यादेर्वीप्सायां द्विर्वचनमिति भ्रान्तिं निवारयति– **यमर्थं पश्यतीत्यादिना** ॥ अनेन दृष्टं दृष्टमिति द्विरुक्तेः नित्यवीप्सयोरित्यत्र नित्यशब्दस्यावधारणार्थत्वमाश्रित्य दृष्टमेवार्थमित्यर्थानुवादः कृतः। उत्तरत्र श्रुतमेवेत्यादावेवकारस्तु अस्यैवार्थस्य स्पष्टीकरणार्थः ॥ **एवमुत्त-रत्रेति**॥ अस्मिञ्जन्मनि श्रुतमस्मिन्जन्मन्यश्रुतमपि जन्मान्तरे श्रुतमेव स्वप्ने शृणोतीत्यर्थः। तदानीं स्वप्ने सत् क्वचिद्विद्यमानं असत् निवृत्तं स्वप्नात्पूर्वं ध्वस्त-मित्यर्थः। यद्यप्येतयोः सदसतोः स्वप्नावस्थायां दर्शनाभावः । वासनामयत्वा-

भावात्। तथाप्यत्र सदसच्छब्दाभ्यां तत्सदृशयोर्ग्रहणमिति भावः॥ **चतुर्थमिति**॥ कस्यैतत्सुखं भवतीत्येतत्प्रश्नमित्यर्थः॥ **भगवन्तं प्रविशतीति**॥ प्राज्ञरूपमित्यर्थः॥ **परमेश्वरसन्निधानसामर्थ्योद्भूतसुखमिति**॥ अत्र स्वरूपसुखमनुभवतीति वक्तव्ये परमेश्वरेत्यादिवचनं तमोयोग्यानां स्वरूपसुखाभावात् सुषुप्तिकाले सुखानुभवसमर्थनार्थम् । परमेश्वरपदग्रहणेन सुषुप्तिकाले मनस उपरमेऽपि अचिन्त्यशक्त्यैश्वर्यवशात् स्वसन्निधाननिमित्तेन वृत्तिरूपं सुखं जनयित्वा सुखानुभवकारणस्य विवक्षितत्वात्। मुक्तियोग्यनित्यसंसारिणां तु स्वरूपसुखस्य सत्वेन तदनुभवसम्भवात्। सुषुप्तिकाले बाह्येन्द्रियोपरमेऽपि स्वरूपेन्द्रियेणैव सौषुप्तिकसुखानुभवस्याचार्यैरेवोपपादनात्॥ **आत्मस्वरूपज्ञानेनानुभवतीति**॥ साक्षिरूपेणेन्द्रियेणेत्यर्थः॥ ४-४ ॥

**ताम्रपर्णीय**–ननु–

'देहाद्देहान्तरगतौ प्रविशेत्प्राणमेव तु ।
जीवः प्राणः परमात्मानं एवं सुप्तावपि स्फुटम् ॥'

इति सुप्तजीवस्य भगवत्प्रवेशोक्तेः कथं स यदा तेजसाभिभूतो भवतीत्युच्यत इत्यत आह– **भगवन्तं प्रविशतीति यावदिति**॥ एतेन प्राज्ञेनात्मना सम्परिष्वक्त इत्यत्र सम्परिष्वङ्गो नाम प्रवेश एवेत्यविरोध इत्युक्तं भवति॥ **परमेश्वरसन्निधानसामर्थ्योद्भूतमिति** ॥ मोक्षयोग्यश्चेत्परमेश्वरसन्निधानसामर्थ्येन व्यक्तं स्वरूपसुखमात्म स्वरूपज्ञानेनानुभवति। अयोग्यश्चेत्परमेश्वरसन्निधानसामर्थ्येन भिन्नाभिन्नतया जातं सुखं स्वरूपज्ञानेनानुभवतीत्यर्थः। अत एव परमेश्वरसन्निधानसामर्थ्योद्भूतमिति सामान्येनोक्तम्। नतु स्वरूपज्ञानेनेतिवत्स्वरूपसुखमिति विशेषितम्। सादृश्याद्देहवज्जीव इत्यत्रापि सादृश्यश्च स्वरूपज्ञानमिति ज्ञानमात्रेण सादृश्यश्चोक्तं ज्ञेयम्। उक्तश्च तत्त्वप्रकाशिकाभावबोधे– सज्जीवानां किञ्चिदभिव्यक्तस्वरूपसुखस्यान्येषां परमात्मसम्बन्धलक्षणनिमित्तोत्पन्नसुखस्यानुभवात्। यथोक्तं षट्प्रश्नभाष्यटीकायाम्– 'यस्मादेवं परमेश्वरतेजसाभिभूतो भवति तस्मात्सन्निधानसामर्थ्योद्भूतं यत्सुखं तस्मिन् शरीरे भवति'

इत्यादि। अत्रोद्भूतमित्यनेन योग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मसम्बन्धनिमित्तजन्यसुखमुच्यत इति सम्प्रदायविद इति। केचित्तु न सुप्तावयोग्यानां सुखानुभवः किन्तु सुखाभावस्यैव सुखमहमस्वाप्समित्यौत्तरिकानुस्मृतिस्तुभ्रान्तिरेवेत्याहुः॥ ४-४ ॥

**मङ्गालीय**–॥ **तृतीयस्येति** ॥ कतर एष देवः स्वप्नान्पश्यतीत्यस्येत्यर्थः। ननु देवानामस्वप्नत्वादेष देवः स्वप्ने महिमानमनुभवतीत्ययुक्तमित्यत आह– **तेनानुगहीतो जीव इति यावदिति** ॥ ननु स्वस्य दुःखित्वादेरप्यनुभवात्कथं महिमानमित्युक्तमित्यतोऽपेक्षितमध्याहरति– **अन्यच्चेति** ॥ दुःखादिकञ्चेत्यर्थः। 'दृष्टं दृष्टमनुपश्यति' इत्यत्र वीप्सायां द्विर्वचनमिति भ्रान्तिं निवारयति– **यमर्थं पश्यतीत्यादिना** ॥ अनेन दृष्टं दृष्टमिति द्विरुक्तेर्नित्यवीप्सयोरित्यत्र नित्यशब्दस्यावधारणार्थत्वमाश्रित्य दृष्टमेवार्थमित्यर्थपरत्वमुक्तं भवति। उत्तरत्र श्रुतमेवार्थमित्यादावेवकारस्तु अस्यैवार्थस्य स्पष्टीकरणार्थः। दृष्टश्रुतयोर्ग्रहणं स्पृष्टादेरुपलक्षणार्थमित्यभिप्रेत्याह– **एवमन्यदपीति** ॥ अदृष्टमित्यस्य सर्वथाऽदृष्टमित्यर्थप्रतीतेराह– **जन्मान्तर इति** ॥ तत्समभिव्याहृतदृष्टशब्दस्य प्रतियोगिसमर्पकस्यास्मिञ्जन्मनि दृष्टमित्यर्थकत्वेनास्य तद्भिन्नजन्मान्तरे दृष्टमित्यर्थकत्वमिति भावः॥ **एवमुत्तरत्रापीति** ॥ अस्मिन् जन्मनि श्रुतं श्रुतं जन्मान्तरेऽश्रुतं अश्रुतं घ्राणादिनाऽस्मिन् जन्मनि आघ्रातादिकं अनुभूतं जन्मान्तरे आघ्रतादिकमननुभूतमिति द्रष्टव्यमित्यर्थः। ननु अनुभूतञ्चाननुभूतं चेत्यस्य दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतं चेत्यनेन पौनरुक्त्यमाशङ्क्य गोबलीवर्दन्यायेन दृष्टादृष्टश्रुताश्रुतेत्येवंरूपविशेषवाचिपदसमभिव्याहृतानुभूताननुभूतवाचिपदयोः अस्मिन् जन्मनि स्पृष्टादिकं । अनुभूतं जन्मान्तरे स्पृष्टादिकमननुभूतमित्यर्थकत्वान्न दोष इत्याह– **अनुभूतमननुभूतमिन्द्रियान्तरेणेति** ॥ इन्द्रियान्तरेणेत्यस्य दृष्टिश्रुत्यतिरिक्तत्वगादीन्द्रियेणेत्यर्थः। तदानीं स्वप्नकाले। सत्क्वचिद्विद्यमानम्। असन्निवृत्तं स्वप्नात्पूर्वं ध्वस्तम्। यद्यप्येतयोः सदसतोः स्वप्नावस्थायां दर्शनाभावः वासनामयत्वाभावात्। तथाप्यत्र सदसच्छब्दाभ्यां तत्सदृशयोर्ग्रहणमिति भावः॥ **चतुर्थमिति** ॥ कस्यैतत्सुखं भवतीत्येतं प्रश्नमित्यर्थः॥ **भगवन्तमिति**

॥ प्राज्ञमित्यर्थः॥ ननु शरीरशब्दस्याबाधितश्रौतप्रयोगबलाज्जीववाचित्वाङ्गीकारे भगवतः शरीरवदिति पूर्वभाष्ये जीवे शरीरशब्दस्य गौणवृत्तिप्रदर्शनमसङ्गतमित्यत आह– **तथापीति** ॥ शरीरशब्दस्य जीवे गौणवृत्त्यनङ्गीकारेऽपीत्यर्थः। तात्पर्यमेवोक्तमित्यत्र न गौणी वृत्तिः प्रदर्शितेत्यवधारणार्थः। किं तत्तात्पर्यमित्यतः तदुपपादयति– **तथाहीति** ॥ **परमेश्वरसन्निधानसामर्थ्योद्भूतमिति** ॥ अत्र स्वरूपसुखमनुभवतीति वक्तव्ये परमेश्वरेत्यादिवचनं तमोयोग्यानां स्वरूपसुखाभावेऽपि सुषुप्तिकाले सुखानुभवसमर्थनार्थम्। परमेश्वरपदग्रहणेन सुषुप्तिकाले मनस उपरमेऽपि अचिन्त्यैश्वर्यवशात्स्वसन्निधानेन निमित्तेन वृत्तिरूपं सुखं जनयित्वा सुखानुभवकारणस्य सूचितत्वात्। मुक्तियोग्यनित्यसंसारिणां तु स्वरूपसुखस्य सत्त्वेन तदनुभवसम्भवः। सुषुप्तिकाले बाह्येन्द्रियाणामुपरमेऽपि स्वरूपेन्द्रियेणैव सौषुप्तिकसुखानुभव इति ज्ञातव्यम्॥ **आत्मस्वरूपज्ञानेनेति** ॥ साक्षिरूपेणेन्द्रियेणेत्यर्थः॥ ४-४ ॥

**गूढकर्तृक**–ननु–

देहाद्देहान्तरगतौ प्रविशेत्प्राणमेव तु।
जीवः प्राणः परात्मानमेवं मुक्तावपि स्फुटम्॥

इति सुप्तौ जीवस्य भगवत्प्रवेशोक्तेः कथं तेजसाभिभूतो भवेदितीत्युच्यत इत्यत आह– **भगवन्तं प्रविशन्तीति यावदिति** ॥ प्राज्ञेनात्मना सम्परिष्वक्तवचनं तु रूपान्तरविवक्षयेति न विरोधः॥ **परमेश्वरसन्निधानसामर्थ्योद्भूतं सुखमिति** ॥ नन्वयोग्यानां सुप्तौ कथं सुखानुभवः। नचायं भ्रमः। बाधकाभावात्। नच दुःखाभावानुभवः। अतिप्रसङ्गात्। मैवम्। तेषामपि भगवत्सम्बन्धेन स्वरूप एव भिन्नाभिन्नसुखोत्पादस्योररीकरणात्। उक्तमेव तत्त्वप्रकाशिकाभावबोधे। सज्जीवानां किञ्चिदभिव्यक्तं स्वरूपसुखम्। अन्येषां परमात्मसम्बन्धलक्षणनिमित्तोत्पन्नसुखस्यानुभवसम्भवादिति भावः। यथोक्तं षट्प्रश्नभाष्यटीकायाम्– यस्मादेवं परमेश्वरतेजसाभिभूतो भगवत्यथ तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तदस्मिन् शरीरे भवतीत्यादि। अत्रोद्भूतमित्यनेन योग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मसम्बन्धनिमित्तजन्यं सुखमुच्यत

इति सम्प्रदायविद इति॥ ४-४ ॥

**खण्डार्थ–**यत एवं मनोव्यतिरिक्तानामेवोपरमस्स्वप्ने तस्माज्जीवस्य मनसा स्वप्नदर्शनं युक्तमिति भावेन कतर एष देवस्स्वप्नान् पश्यतीति तृतीयप्रश्नस्य परिहार उच्यते– **अत्रेत्यादि**॥ अत्रैतस्यामवस्थायां मनोव्यतिरिक्तेन्द्रियोपरम इति यावत्, एष देवो मनोनामा तेनानुगृहीतो जीव इति यावत्, स्वप्ने महिमानमात्मनो महत्त्व-मन्यच्चानुभवति । तत्र च यमर्थं पश्यति तं प्राक् दृष्टमेवानुपश्यति। यः प्राक् श्रुतः तं श्रुतमेवार्थं शब्दं स्वप्नेऽनुशृणोति। एवमन्यदप्यनुभूतमेवानुभवति। नाननुभूतम्। किमस्मिन्नेव देशेऽनुभूतमनुभवति ? न। किं तु देशान्तरे दिगन्तरे च यत् प्रत्यनुभूतं पुनः पुनरनुभूतं तदेव स्वप्ने पुनः पुनः प्रत्यनुभवति। भ्रान्त्या तदेवेदमिति प्रत्यभिजानाति। नाप्यस्मिन्नेव जन्मन्यनुभूतमनुभवतीति नियमः। किं त्वस्मिन् जन्मनि दृष्टमदृष्टञ्च जन्मान्तरे दृष्टम्। एवमुत्तरत्रापि अनुभूतं अननुभतं इन्द्रियान्तरेण। सच्च तदानीम् असच्च निवृत्तश्चेत्येवं सर्वं पश्यति जानाति। स्वयञ्च सर्वः नानाकर्मभिः नरवानराद्यनेकप्रकारस्सन् तत् पश्यति। कस्यैतत्सुखं भवतीति चतुर्थप्रश्नं परिहर्तुमुच्यते– **स यदेत्यादि** ॥ एवं स्वप्ने वर्तमानस्य जीवो यदा तेजसा भगवदीयेनाभिभूतः आवृतो भवति भगवन्तं प्रविशतीति यावत्, अत्रैतस्यां सुषुप्तिसंज्ञायामवस्थायां एष देवो मनः स्वप्नान्न पश्यति। मनसोऽप्युपरतत्वान्न जीवस्स्वप्नान् पश्यतीति यावत्। यस्मादेवं परमेश्वरतेजसाऽभिभूतो भवत्यथ तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत् सुखं तदेतस्मिन् भगवच्छरीरवत् ज्ञानात्मकत्वेन तत्सादृश्ययुक्ते जीवे भवतीति न काचिदनुपपत्तिरिति॥ ४-४॥

**नर–** कतर एष देव इति तृतीयप्रश्नस्य परिहारमाह– **अत्रेति** ॥ अत्र एतस्यां स्वप्नावस्थायां एष देवो मनोभिमानी रुद्रः तेनानुगृहीतो जीवः स्वप्ने महिमानं आत्मनो महत्त्वमन्यच्चानुभवति। तत्र यमर्थं पश्यति तं प्राग्दृष्टमनुपश्यति। यः प्राक् श्रुतः तं श्रुतमेवार्थं शब्दं स्वप्ने अनुशृणोति। एवमन्यदप्यनुभूतमेवा-नुभवति। नाननुभूतम् । किमस्मिन्नेव देशेऽनुभूतमनुभवति । न । किन्तु देशान्तरे दिगन्तरे च यत्प्रत्यनुभूतं पुनः पुनरनुभूतं तदेव स्वप्ने पुनः पुनः प्रत्यनुभवति। भ्रान्त्या तदेवेदमिति प्रत्यभिजानाति। तथास्मिन् जन्मनि दृष्टं यज्जन्मान्तरे दृष्टम्,

एवमुत्तरत्रापि। अनुभूतमिन्द्रियान्तरेण । सच्च तदानीं असन्निवृत्तं च इत्येवं सर्वं पश्यति। स्वयं च सर्वः राजाद्यनेकप्रकारः सन् तत्पश्यति। चतुर्थप्रश्नोत्तरमाह– **स यदेति** ॥ स्वयं स्वप्ने वर्तमानः स जीवः यदा तेजसा भगवदीयेन अभिभूत आवृतो भवति। प्राज्ञेन सम्परिष्वक्तो भवति। अत्र सुषुप्त्यवस्थायां एष देवो मनः स्वप्नान्न पश्यति। मनसोऽप्युपरतत्वात्। यस्मादेवं परमेश्वरं प्राप्तो भवति अथ तस्मात्तत्सन्निधानसामर्थ्योद्भूतं यत्सुखं तदस्मिञ्छरीरे ज्ञानात्मकत्वेनेश्वरशरीर-सदृशशरीरे शरीरशब्दवाच्ये जीवे सुखं भवति। कस्यैतत्सुखं भवतीत्यस्यायं परिहारः॥ ४-४ ॥

**उदय**–मनोव्यतिरिक्तानामिन्द्रियाणामुपरतत्वान्मनसा जीवस्य स्वप्नदर्शनं युक्तमिति भावः स्वाप्नपदार्थदर्शनं केनेत्यस्य प्रश्नस्य परिहारमाह– **अत्रैष देव इति** ॥ अत्र स्वप्ने तस्यां स्वप्नावस्थायां एष देवः व्यवहारादिकर्ता मनोनामा जीवः । महिमानं आत्मनो महत्त्वमन्यच्च अनुभवति पश्यतीत्यर्थः। यमर्थं दृष्टं जाग्रदवस्थायां दृष्टमनुपश्यति तुल्यत्वेनेत्यदेः अनु पूर्वं तुल्यत्वेन श्रुतमेवार्थं शब्दं शृणोति। न केवलमस्मिन्नेव देशेऽनुभूतं किन्तु देशदिगन्तरे च देशान्तरे दिगन्तरेषु प्रत्यनुभूतं पुनःपुनरनुभूतं तदेव स्वप्ने प्रत्यनुभवति। पुनःपुनरनुभवतीत्यर्थः। ननु येन देशान्तरं न दृष्टं स्वप्ने च तस्य देशान्तरगमनं जायते तत्कथमित्यत आह– **दृष्टश्चेति** ॥ यदस्मिन् जन्मन्यदृष्टं जन्मान्तरे च दृष्टम्। एवं श्रुतमश्रुतञ्च। अनुभूतं इन्द्रियान्तरेण । अननुभूतं चास्मिन् जन्मनि सच्च भावरूपं तदानीमसच्च निवृत्तञ्च सर्वं पदार्थजातं पश्यति। स्वयं स सर्वः अनेकप्रकारः सन् पश्यति। अनेन स्वशिरोहननादिकमपि व्याख्यातं भवति। अत एव ‘अदृष्टादश्रुताद्भावान्न भाव उपजायते’ इत्यनुव्याख्याने भगवान् भाष्यकार आह । व्याख्यातञ्च सुधायाम्। परमेश्वर एव नानाविधपदार्थाननेकजन्मदृष्टान् वासनामयान् सृष्ट्वा जीवाय दर्शयतीति भावः। तदेतत् ‘मायामात्रं तु कार्त्स्न्येन’ इत्यत आह भगवान् बादरायणः। व्याख्यातश्चाचार्यैः सपरिकरमिति। सुषुप्तिविषये प्रश्नप्रतिवचनमाह– **स यदेति** ॥ स स्वप्नानुभवी जीवः यदा यस्मिन् काले तेजसा भगवत्सम्बन्धिना अभिभूतः आवृतो भवति। भगवन्तं प्रविशतीत्यर्थः। अत्रास्यामवस्थायां सुषुप्तिरूपायां एष

देवः जीवः स्वप्नपदार्थान् न पश्यति। मनसोऽप्युपरतत्वादिति भावः। अथ तस्माद्यत् सुखं भगवत्सन्निधानसामर्थ्यभवम्। एतस्मिन् शरीरे भगवच्छरीरसादृश्याच्छरीरशब्दवाच्ये जीवे भवति।। ४-४ ।।

उपनिषत्

**स यथा सोम्य वयांसि वासोवृक्षं सम्प्रतिष्ठन्ते एवं हैतत् सर्वं परे आत्मनि सम्प्रतिष्ठते। पृथिवी च पृथिवीमात्रा चाऽपश्चाऽपोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाऽकाशश्चाऽकाशमात्रा च। चक्षुश्च द्रष्टव्यञ्च श्रोत्रञ्च श्रोतव्यञ्च घ्राणञ्च घ्रातव्यञ्च रसनञ्च रसयितव्यञ्च त्वक् च स्पर्शयितव्यञ्च वाक् च वक्तव्यञ्च हस्तौ च दातव्यं च पादौ च गन्तव्यञ्च पायुश्च विसर्जयितव्यं चोपस्थश्चानन्दयितव्यञ्च मनश्च मन्तव्यञ्च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यञ्च चित्तञ्च चेतयितव्यञ्च तेजश्च विद्योतयितव्यञ्च प्राणश्च विधारयितव्यञ्च।। ५।।**

**टीका**—अन्तिमप्रश्नपरिहारः सदृष्टान्त उच्यते— **स यथेत्यादि**।। सोम्य सोमार्ह। सः दृष्टान्तः—यथा वयांसि पक्षिणो वासो यत्राऽत्मनां तं वृक्षं सम्प्रतिष्ठन्ते अभिगच्छन्ति तमाश्रित्य तिष्ठन्ति च। एवं खल्वेतत् सर्वं पृथिव्यादितत्त्वजातं परे आत्मनि विष्णौ सम्प्रतिष्ठन्ते। तदाधारमेव वर्तत इति। अत्र पृथिवीत्यादिना पञ्चमहाभूतान्युच्यन्ते। पृथिवीमात्रा चेत्यादिना गन्धादिपञ्चतन्मात्राः। चक्षुश्चेत्यादिना दशेन्द्रियाणि। द्रष्टव्यं चेत्यादिना रूपादितद्विषयाः। मन इत्यादिनान्तःकरणपञ्चकम्। मन्तव्यं चेत्यादिना तद्विषयाः। तेजःशब्देन चेतना गृह्यन्ते इति सर्वस्यापि सङ्ग्रहः। प्राणो मुख्यो धारकस्तेन विधारयितव्यं पृथिव्यादिकं सर्वम्।। ५ ।।

**वामन**–वयसां निवासवृक्षवद्विष्णुरेव सर्वस्याश्रयः॥ ४-५॥

**श्रीनिवास**– सोम्य सोमार्हेति। ननु–

नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु।
सोमाधिकारो वेदोक्तः............. ॥

इत्युक्तत्वेन देवानामेव तद्योग्यत्वादस्य ऋषेस्तद्योग्यत्वं बाधितमिति चेत् सत्यम्। नात्र यज्ञे आहुतिरूपेण दत्तसोमयागार्हत्वमुच्यते किन्नाम 'सोमं पिबेत्' इति नित्यविधिसंरक्षणाय यज्ञ आहुतिरूपेण सोमे हुते पात्रे किञ्चित्सोमरसोऽवशिष्यते। तस्य यज्ञशिष्टस्य सोमस्य भक्षणं ऋत्विग्भिः क्रियते। तादृशसोमभागपानार्हत्वमभिप्रेतमिति मन्तव्यमिति सम्प्रदायविदः। एतादृशसोमार्हतापि न सर्वेषामस्तीति तत्प्रशंसा युक्ता।

**छलारी**–स दृष्टान्तो **यथेति**॥ तच्छब्दस्य प्रसिद्धार्थकस्य दृष्टान्तपरत्वमाश्रित्येदं वचनं ज्ञेयम्। परमेश्वरस्य सर्वाश्रयत्वं वृक्षस्य पक्ष्याश्रयत्वं येन प्रकरेण तेन प्रकारेणेति भावः। वासो यत्रेति उपनिषदि वासो यत्रेति षष्ठीतत्पुरुषः। तस्य तात्पर्यार्थः॥ **वासो यत्रात्मनां तं वृक्षमिति**॥ अत्रात्मशब्दार्थः स्वात्मार्थः । वासो निवासः 'वस निवास' इत्यतः वसेर्णिच्चेति भावे असुन्प्रत्यये णित्वात् वृद्धौ वास इति सान्तः शब्दः। सम्प्रतिष्ठन्त इत्येतत् प्रपूर्वतिष्ठतेर्गमनार्थमाश्रित्य व्याचष्टे– **सम्प्रतिष्ठन्ते अभिगच्छन्तीति**॥ 'प्रस्थानं गमनं गमः' इत्यमरोक्तेः। केषाञ्चिच्छब्दानामप्रतीतार्थत्वाद्विविच्यार्थमाह– **तमाश्रित्य तिष्ठन्ति चेति**। सम्प्रशब्दयोरुपसर्गत्वात् साधनक्रियाप्रतिपादकत्वेन तमाश्रित्येति व्याख्यातम्। पृथिवीत्यादिशब्दानां सङ्कलय्योक्तेः केषाञ्चिच्छब्दानामप्रतीतार्थत्वाद्विविच्यार्थमाह– **अत्र पृथिवीत्यादिनेति** ॥ श्रुतौ आपोमात्रेति समासपदे षष्ठ्याःसुपां सुपो भवन्तीति वार्तिकेन छान्दसः जसादेशः ॥ **गन्धादिपञ्चकमिति**॥ गन्धरसरूपस्पर्शशब्दा इत्यर्थः। **दशेन्द्रियाणीति**। चक्षुःश्रोत्रघ्राणवाक्पाणिपादपायूपस्था इति कर्मेन्द्रियपञ्चकमेवं मिलित्वा दशेत्यर्थः॥ **रूपादीति** ॥ आदिशब्देन शब्दगन्धरसस्पर्शाः वक्तव्यपञ्चकञ्चेति

दश गृह्यन्त इत्यर्थः ॥ **अन्तःकरणपञ्चकमिति** ॥ अन्तःकरणभेदपञ्चकमित्यर्थः। तत्र सङ्कल्पविकल्पात्मकं मनः। करोमि न करोमीति सङ्कल्पविकल्पौ। निश्चयात्मिका बुद्धिः । अस्वरूपे स्वरूपप्रतीतिरहङ्कारः । स्वातन्त्र्यबुद्धिरिति यावत्। अस्थिरस्मरणं चित्तम्। चित्तस्य विषयेषु व्याप्तिश्चेतना। बहुविषयत्वमिति यावत्। ननु स्थलान्तरे मनोबुद्धिरहङ्कारश्चित्तं चेतनमिति। अत्र तु पञ्चमं तेज इति कथ्यते अतस्तद्विरोध इत्यत आह– **तेजःशब्देनेति** ॥ एवं हैतत्सर्वं परे आत्मनि सम्प्रतिष्ठन्ति इति यत्परमात्मनः सर्वनियामकत्वमुक्तं तदयुक्तम्। पृथिवी चेत्यादौ प्रकृत्यादेरनुक्तत्वादित्यत आह– **सर्वस्यापीति** ॥ प्रकृत्यादेः सर्वस्यापीत्यर्थः। एवं मुख्यं नियम्यमुक्त्वा अमुख्यनियम्यमाह– **प्राण इति** ॥ तस्य कथं पृथिव्याद्यपेक्षया मुख्यनियम्यत्वमित्यत आह– **मुख्य इति** ॥ मुख्यवायुत्वादित्यर्थः। तदुपपादयति– **धारक इति** ॥ सर्वस्य धारकत्वात्। अयं भावः पृथिव्यादेः साक्षान्मुख्यप्राणनियम्यत्वम्। मुख्यप्राणस्य साक्षाद्भगवन्नियम्यत्वमिति॥ तदेव दर्शयति– **विधारयितव्यं पृथिव्यदिकं सर्वमिति** ॥ तथाच मुख्यप्राणद्वारा सर्वस्येश्वरनियम्यत्वमिति ज्ञातव्यम् ॥ ४-५ ॥

**मङ्कालीय–**॥ **अन्तिमप्रश्नेति** ॥ पराधीना एते सर्वे कस्मिन् प्रतिष्ठिता भवन्ति। परमेश्वरश्चेदाश्रयः तत्कुत इत्यन्तिमप्रश्नेत्यर्थः॥ **स दृष्टान्तो यथेति** ॥ तच्छब्दस्य प्रसिद्धार्थकस्य दृष्टान्तपरत्वमाश्रित्येदं वचनं ज्ञेयम्। परमेश्वरस्य सर्वाश्रयत्वं वृक्षस्य पक्ष्याश्रयत्वं येन प्रकारेण तेन प्रकारेणेति भावः॥ **वासो यत्रेति** ॥ अत्र वाससो निवासस्य वृक्षो वासोवृक्ष इति षष्ठीतत्पुरुषः । तस्य तात्पर्यार्थः॥ **वासो यत्रात्मनां तं वृक्षमिति** ॥ अत्रात्मशब्दः स्वात्मार्थः । वासो निवासः। वस निवास इत्यतः वसेर्णिच्चेति भावेऽसुन्प्रत्यये णित्वाद्वृद्धौ वासस् इति सान्तः शब्द इति केचिद्व्याचक्षते। वास इत्यस्याकारान्ततां सान्ततां वाऽभ्युपेत्य भिन्नपदत्वमाश्रित्य यत्रात्मनामित्यस्याध्याहारश्चाङ्गीकृत्य वासो यत्रात्मनामिति व्याख्यानमित्यपि भाति। सम्प्रतिष्ठन्त इत्येतत्प्रपूर्वकतिष्ठतेर्गमनार्थत्वमाश्रित्य व्याचष्टे– **सम्प्रतिष्ठन्ते अभिगच्छन्तीति** ॥ 'प्रस्थानं गमनं

गम' इत्यमरोक्तेः । रूढ्याश्रयेणार्थमुक्त्वा योगाश्रयेणाप्यर्थमाह– **तमाश्रित्य तिष्ठन्ति चेति** ॥ सम्प्रशब्दयोरुपसर्गत्वात् ससाधनक्रियाप्रतिपादकत्वेन तमाश्रित्येति व्याख्यातम्। पृथिव्यादिशब्दानां सङ्कलय्योक्तेः। केषाञ्चि-च्छब्दानामप्रतीतार्थत्वाद्विविच्यार्थमाह– **अत्र पृथिवीत्यादिनेति** ॥ श्रुतौ आपोमात्रेति समासपदे षष्ठ्याः सुपां सुपो भवन्तीति वार्तिकेन च्छान्दसो जसादेशः॥ **अन्तःकरणपञ्चकमिति** ॥ अन्तःकरणप्रभेदपञ्चकमित्यर्थः। तत्र सङ्कल्पविकल्पात्मकं मनः। करोमि न करोमीति सङ्कल्पविकल्पौ । निश्चया-त्मिका बुद्धिः। अस्वरूपे स्वरूपत्वबुद्धिरहङ्कारः। स्वातन्त्र्यबुद्धिरिति यावत्। अस्थिरस्मरणं चित्तम्। चित्तस्य विषयेषु व्याप्तिश्चेतना। बहुविषयकत्वमिति यावत्। ननु स्थलान्तरे मनोबुद्धिरहङ्कारश्चित्तं चेतनेति कथ्यते। अत्र तु पञ्चमं तेज इति अतस्तद्विरोध इत्यत आह– **तेजःशब्देनेति** ॥ एवं ह वै तत्सर्वं परे आत्मनि सम्प्रतिष्ठत इति परमात्मनः सर्वनियामकत्वमुक्तम्। तदयुक्तम्। पृथिवी चेत्यादौ प्रकृत्यादेरनुक्तत्वादित्यत आह– **सर्वस्यापीति** ॥ प्रकृत्यादेः सर्वस्यापीत्यर्थः। सङ्ग्रहः कर्तव्य इति शेषः। उपलक्षणया प्रकृत्यादेर्ग्रहणं कार्यमिति यावत्। एवममुख्यनियम्यमुक्त्वा मुख्यनियम्यमाह– **प्राण इति** ॥ तस्य कथं पृथिव्या-द्यपेक्षया मुख्यनियम्यत्वमित्यत आह– **मुख्य इति** ॥ मुख्यवायुत्वादित्यर्थः। तदुपपादयति– **धारक इति** ॥ सर्वस्य धारकत्वात्। अयं भावः। पृथिव्यादेः साक्षान्मुख्यप्राणनियम्यत्वं मुख्यप्राणस्य साक्षाद्भगवन्नियम्यत्वमिति। तदेव दर्शयति– **तेन विधारयितव्यं पृथिव्यादिकं सर्वमिति** ॥ ४-५ ॥

**खण्डार्थ–**कस्मिन् सर्वे प्रतिष्ठिता भवन्तीत्यन्तिमप्रश्नपरिहारस्सदृष्टान्त उच्यते– **स यथेत्यादि** ॥ सेम्य सोमार्ह, स दृष्टान्तो यथा वयांसि पक्षिणो वासो यत्राऽऽत्मनां तं वृक्षं सम्प्रतिष्ठन्ते, अभिगच्छन्ति तमाश्रित्य तिष्ठन्ति च। एवं खल्वेतत् सर्वं पृथिव्यादितत्त्वजातं परे आत्मनि विष्णौ सम्प्रतिष्ठते। तदाधारमेव वर्तत इति। अत्र पृथिवीत्यादिना पञ्चमहाभूतान्युच्यन्ते। पृथिवीमात्रा चेत्यादिना गन्धादिपञ्चतन्मात्राः । चक्षुश्चेत्यादिना दशेन्द्रियाणि। द्रष्टव्यश्चेत्यादिना रूपादितद्विषयाः। मनइत्यादिनाऽन्तःकरणपञ्चकम्। मन्तव्यश्चेत्यादिना तद्विषयाः।

तेजश्शब्देन चेतना गृह्यन्ते इति सर्वस्यापि सङ्ग्रहः। प्राणो मुख्यप्राणो धारकः तेन विधारयितव्यश्च पृथिव्यादिकं सर्वम् ॥ ४-५॥

**नर**–कस्मिन्सर्वे प्रतिष्ठिता भवन्तीत्यन्तिमपरिहारमाह– **स यथेति**॥ हे सोम्य सोमपानार्ह स दृष्टान्तो यथा वयांसि पक्षिणो वासो यत्र आत्मनां तं वृक्षं सम्प्रतिष्ठन्ते अभिगच्छन्ति तमाश्रित्य तिष्ठन्ति च। एवं खल्वेतत्सर्वं पृथिव्यादि-तत्त्वजातं परमात्मनि विष्णौ सम्प्रतिष्ठन्ते। तेजःशब्देन चेतना गृह्यन्ते। प्राणो मुख्यधारकः तेन विधारयितव्यश्च पृथिव्यादिकं सर्वम्॥ ४-५ ॥

**उदय**–अत्र दृष्टान्तयति– **यथा सोम्येति** ॥ हे सौम्य सोमपानार्ह । यथा दृष्टान्ते। यथा तस्मिन् विषयेऽयं दृष्टान्त इत्यर्थः। वयांसि पक्षिणो यथाऽत्मनो वासस्थानं तं वृक्षं सम्प्रतिष्ठन्ते अभिगच्छन्ति। तमाश्रित्य तिष्ठन्तीत्यर्थः । एवं हवा प्रसिद्धं एतत्सर्वं पृथिव्यादि जातं परे आत्मनि विष्णौ सम्प्रतिष्ठन्ते तदाधारत्वेन वर्तन्त इत्यर्थः। सर्वमेव विशदयति– **पृथिवीत्यादिना** ॥ मात्राशब्देन विषयाः। द्रष्टव्यं द्रष्टुं योग्यं पदार्थम्। श्रोतव्यं श्रोतुं योग्यं शब्दम्। एवमन्येऽपि तत्तद्विषयाः ग्राह्याः। चित्तशब्देन चेतनाः ग्राह्याः । प्राणः मुख्यप्राणः। विधारयितव्यं विधारयितुं योग्यम्। पृथिव्यादिकम् । अनेन सर्वाधारकस्यापि मुख्यप्राणस्येश्वरा-धीनत्वमुच्यते॥ ४-५ ॥

## उपनिषत्

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स यो हैतमच्छायमशरीर-मलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वं भवति। तदेष श्लोकः–**

**विज्ञानात्मा सह देवैश्च सर्वैः**
**प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र।**

**तदेतदक्षरं वेदयते यस्तु सोम्य**
**स सर्वज्ञः सर्वमेवाविवेश ॥ इति ॥ ६॥**

**टीका**–कथं सर्वस्य तदधीनतेत्युच्यते– **एष हीति**॥ चक्षुरादीनामेतेषामेष हि दर्शनादिशक्तिप्रदः। स्वयञ्च विज्ञानात्मा विज्ञानस्वरूपः सर्वज्ञ इति यावत्। पुरुषः पूर्णत्वात्। अतश्चोपपन्नं तस्य सर्वाश्रयत्वमिति। तदस्य विज्ञानात्मनो वेदनस्य फलमुच्यते– **स य इति**॥ स विज्ञानात्मा पुरुषो यो यादृशलक्षणमेवंविध-मच्छायमविद्यारहितमत एवाशरीरं, तस्मादेवालोहितं लोहितादिरूपरहितम्, शुभ्रं शुद्धं प्राकृतरूपाद्यभावेऽपि अप्राकृतशुभ्रादिरूपयुक्तं वा , अत एवाक्षरं, न क्षरतीति हे सोम्य यो वेदयते विजानाति, स सर्वज्ञः सर्वप्रधानस्य सर्वकारणस्य च परिज्ञानात्सर्वज्ञ इव। तत्सदृशत्वात्सर्वस्य सर्वज्ञ एव वा। सर्वस्यापि कर्मादेर्ज्ञानस्य फलं परमात्मज्ञानं प्राप्तमनेनेति वा ज्ञानी स्तूयते। सर्वं भवति सर्वं परिपूर्णं परं ब्रह्म तद्भवति। तद्भूत इव तत्प्रविशतीति यावत्। तदेष श्लोकः। विज्ञानात्मा विज्ञानस्वरूपो जीवः शरीरे सुखं भवतीति ह्युक्तः। प्राणाश्चक्षुरादयः तद्विषयाश्च रूपादयो भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्देवैरभिमानिभिः सूर्याद्यैस्सह यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति सम्प्रतिष्ठन्ते, तदेतदक्षरं वेदयते विजानाति, यः पुरुषः सोम्येति कस्यचित्सम्बुद्धिः, स उक्तप्रकारेण सर्वज्ञः। सर्वं परं ब्रह्माऽविवेशै-वाविष्ट एव ध्रुवमाविशत्येवेति॥ ६ ॥

**वामन**–अथ पृथिवी चेत्याद्युत्तरवाक्यैरेतदेव सविस्तरमाह– **एष हि द्रष्टेत्या-दिना** ॥ दर्शनादिस्वातन्त्र्यात् निमित्तात् पृथिव्यादिधारणं युक्तमेवा-स्येत्युपपादयति। विज्ञानात्मा पुरुषः विशिष्टज्ञानानन्ददेहो विष्णुः तद्वेत्ता सर्वज्ञः सर्वपुरुषार्थवान् भवति। तत्र एष श्लोकोऽस्ति॥ **विज्ञानात्मेति** ॥ स पूर्वोक्तः सर्वज्ञः सर्वमेवाविवेश। सर्वः परिपूर्णो विष्णुस्तमेव प्रविशतीत्यर्थः॥ ४-६ ॥

**श्रीनिवास**– ॥ **तत्सदृशत्वादिति**॥ भगवत्सदृशत्वेन सर्वस्यापि सामा-न्यतो ज्ञातत्वात्सामान्येन सर्वज्ञ एवेत्यर्थः। यद्वा सर्वज्ञानफलस्य प्राप्तत्वा-त्सर्वज्ञ इत्युपचार इत्याशयेनाह– **सर्वस्यापीति** ॥ ननु जीवस्य कथं

तेजश्शब्देन चेतना गृह्यन्ते इति सर्वस्यापि सङ्ग्रहः। प्राणो मुख्यप्राणो धारकः तेन विधारयितव्यश्च पृथिव्यादिकं सर्वम् ॥ ४-५॥

**नर**–कस्मिन्सर्वे प्रतिष्ठिता भवन्तीत्यन्तिमपरिहारमाह– **स यथेति**॥ हे सोम्य सोमपानार्ह स दृष्टान्तो यथा वयांसि पक्षिणो वासो यत्र आत्मनां तं वृक्षं सम्प्रतिष्ठन्ते अभिगच्छन्ति तमाश्रित्य तिष्ठन्ति च। एवं खल्वेतत्सर्वं पृथिव्यादि-तत्त्वजातं परमात्मनि विष्णौ सम्प्रतिष्ठन्ते। तेजःशब्देन चेतना गृह्यन्ते। प्राणो मुख्यधारकः तेन विधारयितव्यश्च पृथिव्यादिकं सर्वम्॥ ४-५ ॥

**उदय**–अत्र दृष्टान्तयति– **यथा सोम्येति** ॥ हे सौम्य सोमपानार्ह । यथा दृष्टान्ते । यथा तस्मिन् विषयेऽयं दृष्टान्त इत्यर्थः। वयांसि पक्षिणो यथाऽत्मनो वासस्थानं तं वृक्षं सम्प्रतिष्ठन्ते अभिगच्छन्ति। तमाश्रित्य तिष्ठन्तीत्यर्थः । एवं हवा प्रसिद्धं एतत्सर्वं पृथिव्यादि जातं परे आत्मनि विष्णौ सम्प्रतिष्ठन्ते तदाधारत्वेन वर्तन्त इत्यर्थः। सर्वमेव विशदयति– **पृथिवीत्यादिना** ॥ मात्राशब्देन विषयाः। द्रष्टव्यं द्रष्टुं योग्यं पदार्थम्। श्रोतव्यं श्रोतुं योग्यं शब्दम्। एवमन्येऽपि तत्तद्विषयाः ग्राह्याः। चित्तशब्देन चेतनाः ग्राह्याः । प्राणः मुख्यप्राणः। विधारयितव्यं विधारयितुं योग्यम्। पृथिव्यादिकम् । अनेन सर्वाधारकस्यापि मुख्यप्राणस्येश्वरा-धीनत्वमुच्यते॥ ४-५ ॥

### उपनिषत्

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स यो हैतमच्छायमशरीर-मलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वं भवति। तदेष श्लोकः–**

**विज्ञानात्मा सह देवैश्च सर्वैः**
**प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र।**

**तदेतदक्षरं वेदयते यस्तु सोम्य**
**स सर्वज्ञः सर्वमेवाविवेश ॥ इति ॥ ६॥**

**टीका**—कथं सर्वस्य तदधीनतेत्युच्यते— **एष हीति**॥ चक्षुरादीनामेतेषामेष हि दर्शनादिशक्तिप्रदः। स्वयश्च विज्ञानात्मा विज्ञानस्वरूपः सर्वज्ञ इति यावत्। पुरुषः पूर्णत्वात्। अतश्चोपपन्नं तस्य सर्वाश्रयत्वमिति। तदस्य विज्ञानात्मनो वेदनस्य फलमुच्यते— **स य इति**॥ स विज्ञानात्मा पुरुषो यो यादृशलक्षणमेवंविध-मच्छायमविद्यारहितमत एवाशरीरं, तस्मादेवालोहितं लोहितादिरूपरहितम्, शुभ्रं शुद्धं प्राकृतरूपाद्यभावेऽपि अप्राकृतशुभ्रादिरूपयुक्तं वा , अत एवाक्षरं, न क्षरतीति हे सोम्य यो वेदयते विजानाति, स सर्वज्ञः सर्वप्रधानस्य सर्वकारणस्य च परिज्ञानात्सर्वज्ञ इव। तत्सदृशत्वात्सर्वस्य सर्वज्ञ एव वा। सर्वस्यापि कर्मादिर्ज्ञानस्य फलं परमात्मज्ञानं प्राप्तमनेनेति वा ज्ञानी स्तूयते। सर्वं भवति सर्वं परिपूर्णं परं ब्रह्म तद्भवति। तद्भूत इव तत्प्रविशतीति यावत्। तदेष श्लोकः। विज्ञानात्मा विज्ञानस्वरूपो जीवः शरीरे सुखं भवतीति ह्युक्तः। प्राणाश्चक्षुरादयः तद्विषयाश्च रूपादयो भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्देवैरभिमानिभिः सूर्याद्यैस्सह यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ति सम्प्रतिष्ठन्ते, तदेतदक्षरं वेदयते विजानाति, यः पुरुषः सोम्येति कस्यचित्सम्बुद्धिः, स उक्तप्रकारेण सर्वज्ञः। सर्वं परं ब्रह्माऽविवेशै-वाविष्ट एव ध्रुवमाविशत्येवेति॥ ६ ॥

**वामन**—अथ पृथिवी चेत्याद्युत्तरवाक्यैरेतदेव सविस्तरमाह— **एष हि द्रष्टेत्या-दिना** ॥ दर्शनादिस्वातन्त्र्यात् निमित्तात् पृथिव्यादिधारणं युक्तमेवा-स्येत्युपपादयति। विज्ञानात्मा पुरुषः विशिष्टज्ञानानन्ददेहो विष्णुः तद्वेत्ता सर्वज्ञः सर्वपुरुषार्थवान् भवति। तत्र एष श्लोकोऽस्ति॥ **विज्ञानात्मेति** ॥ स पूर्वोक्तः सर्वज्ञः सर्वमेवाविवेश। सर्वः परिपूर्णो विष्णुस्तमेव प्रविशतीत्यर्थः॥ ४-६ ॥

**श्रीनिवास**— ॥ **तत्सदृशत्वादिति**॥ भगवत्सदृशत्वेन सर्वस्यापि सामा-न्यतो ज्ञातत्वात्सामान्येन सर्वज्ञ एवेत्यर्थः। यद्वा सर्वज्ञानफलस्य प्राप्तत्वा-त्सर्वज्ञ इत्युपचार इत्याशयेनाह— **सर्वस्यापीति** ॥ ननु जीवस्य कथं

विज्ञानात्मकत्व-मित्यत उक्तम्॥ **शरीर इति** ॥ जीवे भगवच्छरीरसादृश्येन शरीरशब्दस्य प्रयुक्तत्वाज्जीवस्य विज्ञानात्मकत्वं श्रुतिभिरभिप्रैतीति गम्यत इति भावः॥

**ताम्रपर्णी–**॥ **सर्वप्रधानस्येति**॥ सर्वस्य कर्मदेवतादेः प्रधानस्य परमात्मनः परिज्ञानादप्रधानपरिज्ञानेन जायमानफलस्य तेन लाभात्सर्वज्ञ इति। तथा सर्वकारणस्य परिज्ञानात्सर्वमपि तत्स्रष्टृत्वादिरूपेण ज्ञायत एवेति सर्वजगत्कारणत्वेन ब्रह्मज्ञानी उपदेशं तदर्थं विनाप्युपदेशेन सर्वज्ञ इवेति योज्यम्। सर्वज्ञ इवेत्येतदुत्तरेणापि सम्बद्ध्यते। सर्वस्य चेतनाचेतनप्रपञ्चस्य प्रामाणिकत्वेन भगवत्सदृशत्वात्सत्त्वेन भगवति ज्ञाते जगदपि तथा ज्ञायते। सर्वस्य मोक्षयोग्यस्य जनस्य चेतनत्वेन भगवत्सदृशत्वाज्ज्ञानानन्दादिरूपेण भगवति ज्ञाते सोऽपि तथा ज्ञायत एव। तथाच सर्वस्य तत्सदृशत्वाद्योऽक्षरं वेद स उपदेशं विनैव उपदेशेन सर्वज्ञ इवेति योज्यम्। एवं सर्वशास्त्रोपदेशेन सर्वजगत्कारणत्वेन सच्चिदानन्दरूपेण च भगवज्ज्ञानी ब्रह्मकार्यत्वादिना सत्यत्वज्ञानानन्दाद्यात्मकत्वेन च सर्वज्ञ इव शास्त्रेणैव सर्वं जानात्येव। शास्त्रोपदेशकार्यस्य ज्ञानस्य ब्रह्मज्ञानेनैव लाभादित्युक्तम्। अधुना सर्वजगत्कारणत्वेन सत्यज्ञानानन्दात्मकत्वेन च भगवज्ज्ञानी सर्वस्य तत्कार्यत्वं विना तस्य कारणत्वानुपपत्त्यनुमानेन सर्वं तत्कार्यतया जानात्येव। प्रामाणिकत्वं चेतनत्वसादृश्यलिङ्गेन सत्यज्ञानादिरूपेण जानात्येवेत्यानुमानिकं सार्वज्ञं मुख्यमित्याह– **सर्वज्ञ एवेति**॥ प्रकारान्तरेण व्याचष्टे– **सर्वस्यापीति** ॥ सर्वज्ञ इत्यत्र मध्यमपदफले सस्य लोपः। 'ज्ञा अवबोधने' इत्यस्माद्भावे कप्रत्ययः। सर्वस्य कर्मादेः फलं ज्ञानं यस्य सर्वज्ञ इति विग्रहः। तथाच योऽक्षरं वेद स सर्वज्ञः सर्वस्य कर्मादेः फलभूतं यद्ब्रह्मज्ञानं तत्प्राप्तिमानेवायमिति न तदर्थकमवश्यकर्मादिशास्त्रनिष्ठा कार्येति मूलार्थ इति भावः॥ **तद्भूत इवेति**॥ यद्यपि भवतेः प्राप्त्यर्थत्वात् सर्वमेवाविवेशेति श्लोकानुगुण्याच्च सर्वं पूर्णं ब्रह्म प्रविशतीत्यर्थो युक्तः। तथापि भू प्राप्तावात्मनेपदीति वचनादात्मनेपदत्वे प्राप्त्यर्थत्वादत्र सत्तार्थकत्वमेवोपेत्य तद्भूत इवेत्युक्तम्। तद्भूतो यथा पृथङ् न दृश्यते। एवं प्रविष्टोऽपि सर्वमेव विषयजातं

भवत्यनुभवतीति प्राचीनटीकायामिव व्याख्याने श्लोकानानुगुण्यमिति भावः॥ ४-६ ॥

**छलारी–॥ इत्युच्यत इति॥** इति शङ्कायामिति शेषः। ननु द्रष्टा स्प्रष्टेत्यादिना द्रष्टृत्वाद्युक्तिप्रतीतेश्चक्षुरादीनामीश्वराधीनत्वोक्तिः कथमित्यतः द्रष्टेत्यादावन्तर्णीत-ण्यर्थत्वमाश्रित्य चक्षुरादीनामित्यध्याहृत्येश्वराधीनत्वं दर्शयति– **चक्षुरादीना-मिति** ॥ तथाच द्रष्टा स्प्रष्टेत्यत्र चक्षुरादीनामिन्द्रियाणां तदभिमानिदेवानाञ्च दर्शितेत्यादि प्रतिपदं ज्ञेयम्। दर्शनादिशक्तिप्रद इति तु तात्पर्यार्थो बोध्यः। ननु तर्हि विज्ञानात्मेत्यत्रापि अन्तर्णीतण्यर्थत्वे द्रष्टेत्यादिना पुनरुक्तिः स्यादित्यत आह– **स्वयमिति** ॥ विज्ञानात्मा पुरुष इत्यस्योपयोगं दर्शयति– **अतश्चेति** ॥ सर्वज्ञत्वात्पूर्णत्वाच्चेत्यर्थः ॥ **तदस्य विज्ञानात्मन इति** ॥ स चासावयश्च तदयं तस्य तदस्य तच्छब्देन पृथिव्याद्याधारत्वपरामर्शः। तथाच तदस्य पूर्वोक्तपृथिव्या-द्याधारस्य विज्ञानात्मनो वेदनस्य ज्ञानस्येत्यर्थः॥ **एतमेवंविधमिति**॥ एतदित्यस्य प्रतिपदमेवमिति । तद्व्याख्यानम्– **एवंविधमिति** ॥ **अच्छायमविद्यारहित-मिति**॥ 'छाया त्वविद्या संप्रोक्ता' इति काठकभाष्योक्तेरिति भावः॥ **अत एवेति**॥ संसारकारणीभूताविद्यारहितत्वादेवेत्यर्थः॥ **वेदयते विजानातीति** ॥ चुरादित्वा-त्स्वार्थे णिजिति भावः। **सर्वप्रधानस्येति**। सर्वो विष्णुस्तं जानातीति विग्रहः। विष्णोः सर्वत्वं नाम 'स्वातन्त्र्ये च विशिष्टत्वे' इत्युक्तेः सर्वप्राधान्यम्। तथाच सर्वं सर्वप्रधानं ब्रह्म जानातीति सर्वज्ञ इति तात्पर्यार्थः॥ **सर्वकारणस्येति**॥ सर्वशब्दस्य तत्कारणे ब्रह्मणि लक्षणेति भावः। यद्वा सर्वज्ञशब्दस्यैव गौणी-वृत्तिमाश्रित्याह– **तत्सदृशत्वात्सर्वस्येति**। ब्रह्मसदृशत्वाज्जगत इत्यर्थः। पक्षान्तरमाह– **सर्वकर्मादेरिति**॥ तथाच सर्वं कर्मादिकं जानातीत्येव विग्रहः। ज्ञानिनः अशेषकर्मज्ञानस्य बाधितत्वात् सर्वशब्देनाशेषकर्मसाध्यज्ञानविषयीभूतं ब्रह्म गृह्यते। यद्यप्येकैकस्य ज्ञानिनः सर्वकर्मकरणं नास्ति तथापि बहूनां तत्कर्मजन्यज्ञानसम्भवात्सर्वकर्मजन्यज्ञानविषयत्वं ब्रह्मणः सम्भवति। तथाच सर्वज्ञत्वं नाम बह्वधिकारिकृतसर्वकर्मजन्यज्ञानविषयीभूतब्रह्मज्ञत्वमिति भावः।

**प्राप्तमनेनेति** ।। ज्ञाधातोः 'आतोऽनुपसर्गे कः' इति कृतस्य कप्रत्ययस्याभिप्राय-कथनं बोध्यम्। ज्ञानिनः सर्वं भवतीति सर्वत्वकथनं बाधितमित्यतस्तत्सङ्गमयति- **ज्ञानी स्तूयत इति** ।। **सर्वं परिपूर्णमिति** ।। सर्वशब्दस्य विश्वशब्दपर्यायत्वात्।।

'विश्वं पूर्णमिहोच्यते' इत्यभिधानात् सर्वशब्दस्य पूर्णार्थकत्वमिति भावः ।। **तद्भवतीति** ।। 'स यो ह वै तदच्छायम्' इत्यादिनोक्तं परं ब्रह्म अत्र सर्वशब्देनोच्यत इत्यभिप्रेत्य तदित्यध्याहृतम्। तथापि ब्रह्मभवनस्य ब्रह्मैक्यरूपज्ञानिनः सर्वप्रमाण-बाधितत्वात्। उत्तरत्र प्रमाणवाक्ये सर्वमेवाविवेशेति व्याख्यातत्वाच्च तदनुसारेण व्याचष्टे- **तद्भूत इव तत्प्रविशतीति यावदिति** ।। तद्भूत इवेति भवतीति श्रौतपदस्य गौणीवृत्तिप्रदर्शनम् ।। **विज्ञानात्मेति विज्ञानस्वरूपो जीव इति** ।। अत्र विशब्देन नित्यत्वोत्तमत्वरूपविशिष्टत्वं गृह्यते। आत्मशब्देन स्वरूपत्वं देहो जीवश्च गृह्यते। ज्ञानशब्दश्चानन्दाद्युपलक्षकः। तथाच नित्यं सर्वदा विद्यमानम्। दुःखाद्यसम्भिन्नम्। यत् ज्ञानानन्दादिकं स एवात्मा देहो यस्य स ज्ञानीत्यर्थः। एतस्य कुत्रोपयोग इत्यत आह- **शरीरे सुखं भवतीत्युक्तमिति** ।। आविवेशेत्यस्य अतीतार्थत्वभ्रान्तिं निवारयति- **ध्रुवमाविशत्येवेति** ।। 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यते' इति वचनादिति भावः ।। ४-६ ।।

**मङ्गालीय**-।। **कथं सर्वस्य तदधीनतेतीति** ।। कथं मुख्यप्राणद्वारा सर्वस्येश्वरनियम्यत्वं ज्ञातव्यमिति शङ्कायामित्यर्थः। ननु द्रष्टा स्प्रष्टेत्यादिना द्रष्टृत्वाद्युक्तिप्रतीतेश्चक्षुरादीनामीश्वराधीनत्वोक्तिः कथमित्यतो द्रष्टेत्यादावन्त-र्णीतण्यर्थत्वमाश्रित्य चक्षुरादीनामित्यध्याहृत्य ईश्वराधीनत्वं घटयति- **चक्षु-रादीनामिति** ।। तथाच द्रष्टेत्यादौ चक्षुरादीनामिन्द्रियाणां तदभिमानिदेवतानां च दर्शयितेत्यादि प्रतिपदं बोध्यम्। दर्शनादिशक्तिप्रद इति तु तात्पर्योक्तिः। ननु विज्ञानात्मेत्यत्रापि अन्तर्णीतण्यर्थत्वे द्रष्टेत्यादिना पुनरुक्तिः स्यादित्यत आह- **स्वयश्चेति** ।। विज्ञानात्मा पुरुष इत्यस्योपयोगं दर्शयति- **अतश्चेति** ।। सर्वज्ञत्वात्पूर्णत्वाच्चेत्यर्थः ।। **तदस्येति** ।। स चासावयं च तदयम्। तस्य तदस्य। तच्छब्देन पृथिव्याद्याधारत्वपरामर्शः। तथाच तदस्य पूर्वोक्तपृथिव्या-

द्याधारस्यास्य विज्ञानात्मनो वेदनस्य ज्ञानस्येत्यर्थः॥ **अच्छायमविद्यारहित-मिति** ॥ 'छाया त्वविद्या सम्प्रोक्ता' इति काठकभाष्योक्तेरिति भावः॥ **वेदयते विजानातीति** ॥ चुरादित्वात्स्वार्थे णिजिति भावः॥ **सर्वप्रधानस्येति** ॥ सर्वो विष्णुस्तं जानातीति विग्रहः। विष्णोः सर्वत्वं नाम 'स्वातन्त्र्ये च विशिष्टत्वे' इत्युक्तेः सर्वप्राधान्यमित्यर्थः॥ **सर्वकारणस्य चेति** ॥ सर्वशब्दस्य तत्कारणे ब्रह्मणि लक्षणेति भावः। सर्वज्ञशब्दस्यैव गौणी वृत्तिमाश्रित्य पक्षान्तरमाह– **तत्सदृशत्वादिति** ॥ ब्रह्मसदृशत्वाज्जगत इत्यर्थः। पक्षान्तरमाह– **सर्वस्यापि कर्मादेरिति** ॥ तथाच सर्वं कर्मादिकं जानातीति विग्रहः। ज्ञानिनोऽशेष-कर्मज्ञानस्य बाधितत्वात्सर्वशब्देनाशेषकर्मसाध्यज्ञानविषयीभूतं ब्रह्म गृह्यते। यद्यप्येकैकस्य ज्ञानिनः सर्वकर्मकरणं नास्ति। तथापि बहूनां तत्तत्कर्मजन्य-ज्ञानसम्भवात्सर्वकर्मजन्यज्ञानविषयत्वं ब्रह्मणः सम्भवति। ततश्च सर्वज्ञत्वं नाम बह्वधिकारिकृतसर्वकर्मजन्यज्ञानविषयीभूतब्रह्मज्ञत्वमेवेति भावः॥ **प्राप्तमनेनेति** ॥ ज्ञाधातोः 'आतोऽनुपसर्गे कः' इति कर्तरि कप्रत्यय इति भावः। ज्ञानिनो ब्रह्मैक्यस्य बाधितत्वात् उत्तरत्र प्रमाणवाक्ये सर्वमेवाविवेशेति व्याख्यातत्वा-च्चेत्यत आह– **तद्भूत इवेति** ॥ **विज्ञानस्वरूपो जीव इति** ॥ अत्र विशब्देन नित्योत्तमत्वरूपविशिष्टत्वं गृह्यते। आत्मशब्देन स्वरूपं देहो जीवश्च गृह्यते। ज्ञानशब्दश्च आनन्दाद्युपलक्षकः। तथाच वि सर्वदा विद्यमानं दुःखाद्यसम्भिन्नं यज्ज्ञानानन्दादिकं स एवात्मा देहो यस्य स जीवो विज्ञानात्मेत्यर्थः। एतस्य कुत्रोपयोग इत्यत आह– **शरीरे सुखं भवतीति ह्युक्तमिति** ॥ सौर्यायणेर्गार्ग्यस्य प्रश्नोत्तरगतत्वात्सोम्येति तस्यैवाभिमुखीकरणमिति न भ्रमितव्यमित्याह– **सोम्येति कस्यचित्सम्बुद्धिरिति** ॥ अस्य श्लोकगतत्वादिति भावः। आवि-वेशेत्यस्य लिट्त्वाद्भूतार्थत्वमात्रत्वभ्रान्तिं वारयति– **ध्रुवमाविशत्येवेति** ॥ 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यते' इति वचनादिति भावः॥ ४-६ ॥

**खण्डार्थ**–कथं सर्वस्य परात्मशब्दितविष्णवधीनत्वमित्यत उच्यते– **एष हीति** ॥ चक्षुरादीनामेतेषामेष हि दर्शनादिशक्तिप्रदः। स्वयञ्च विज्ञानात्मा विज्ञानस्वरूपः, सर्वज्ञ इति यावत्। पुरुषः पूर्णत्वात्। अतश्चोपपन्नं तस्य

सर्वाश्रयत्वमिति। तस्य विज्ञानात्मनो वेदनस्य फलमुच्यते– **स य इति** ॥ स विज्ञानात्मा पुरुषो यो यादृशलक्षणः एतमेवंविधं अच्छायमविद्यारहितम्, अत एवाशरीरं तस्मादेवालोहितं लोहितत्वादिरूपरहितम् । शुभ्रं शुद्धम् । प्राकृतरूपाद्यभावेऽपि अप्राकृतशुभ्रादिरूपयुक्तं वा, अत एवाक्षरं, हे सोम्य यो वेदयते विजानाति सः सर्वज्ञः सर्वप्रधानस्य सर्वकारणस्य च परिज्ञानात् सर्वज्ञ इव, तत्सदृशत्वात् सर्वस्य सर्वज्ञ एव वा, सर्वस्यापि कर्मादेः ज्ञानस्य फलं परमात्मज्ञानं प्राप्तमनेनेति वा ज्ञानी स्तूयते। सर्वं भवति सर्वं परिपूर्णं परं ब्रह्म तद्भवति तद्भूत इव तत्प्रविशतीति यावत्। तदेष श्लोकः। विज्ञानात्मा विज्ञानस्वरूपो जीवः, शरीरे सुखं भवतीति ह्युक्तम्। प्राणाश्चक्षुरादयः तद्विषयाश्च रूपादयः भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्देवैरभिमानिभिः सूर्याद्यैः सहैव यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठन्ते तदेतदक्षरं वेदयते विजानाति यः पुरुषः सोम्येति कस्यचित् सम्बुद्धिः। स उक्तप्रकारेण सर्वज्ञः सर्वं परं ब्रह्म आविवेशैवाऽविष्ट एव ध्रुवमाविशत्येवेति। ॥ ४-६ ॥

**नर**–कथं सर्वस्य भगवदधीनतेत्यत आह– **एष हीति** ॥ चक्षुरादीनां एतेषां एष हि दर्शनादिशक्तिप्रदः। स्वयञ्च विज्ञानात्मा विज्ञानस्वरूपः पूर्णज्ञानस्वरूपः पूर्णज्ञानपुरुषः। ततश्चोपपन्नं तस्य सर्वाश्रयत्वम्। तज्ज्ञानफलमुच्यते– **स इत्यादि** ॥ स विज्ञानात्मा पुरुषो यो यादृशलक्षणः एवमेवंविधं अच्छायमविद्यारहितं अत एवाशरीरं प्राकृतभौतिकदेहरहितं तस्मादेवालोहितं लोहितादिजातरूपरहितं, शुभ्रं शुद्धं जडरूपाभावेऽपि ज्ञानानन्दात्मकरूपयुक्तं वा, अत एवाक्षरं नित्यं हे सोम्य यो वेद जानाति सः सर्वज्ञः सर्वप्रधानपरिज्ञानात्सर्वज्ञ एव। सर्वं पूर्णं भवति। तदुद्भूत इव तत्प्रविशति। तदेष श्लोकः– विज्ञानात्मा विज्ञानस्वरूपो जीवः प्राणाः चक्षुरादयः तद्विषयाश्च भूतानि पृथिव्यादीनि तन्मात्राश्च सर्वैर्देवैरभिमानिभिः सूर्याद्यैः स यत्र यस्मिन्नक्षरे ब्रह्मणि सम्प्रतिष्ठितं तदक्षरं वेदयते विजानाति। यः पुरुषः सोम्येति कस्यचित्सम्बुद्धिः स उक्तप्रकारेण सर्वज्ञः सर्वं ब्रह्म आविवेशैव ध्रुवमाविशत्येवेति॥ ४-६ ॥

**उदय**–सर्वस्यापि भगवदधीनता कथमित्यत आह— **एष हीति** ॥ द्रष्टा चक्षुषो दर्शनशक्तिप्रदः । स्प्रष्टा त्वचो स्पर्शनशक्तिप्रदः । एवं तत्तदिन्द्रिय-शक्तिप्रदः। स्वयं तु विज्ञानात्मा विज्ञानरूपः । सर्वज्ञ इत्यर्थः। पुरुषः पूर्णः । तस्मात् परमात्मनो भगवत एव सर्वाधारत्वं नान्यस्येति भावः। एवंवेत्तुः फलमाह– **स यो हवा इति** ॥ स विज्ञानरूपः पुरुषः यादृशलक्षणः । हवा निश्चयेन । एतद्गुणविशिष्टम्। अच्छायं अविद्यारहितम् । अशरीरं प्राकृतशरीररहितम् । अत एवालोहितं लोहितादिवर्णरहितम् । शुभ्रं निर्दोषम् । अक्षरं न क्षरति इति अव्ययमित्यर्थः। यस्तु अधिकार्येव हे सोम्य वेदयते व्यत्ययाद्विजानाति। स अधिकारी सर्वज्ञः सर्वप्रधानस्य भगवतो ज्ञानात्सर्वज्ञः भवति । सर्वं परिपूर्णं ब्रह्म भवति प्राप्नोति, तत्प्रविशतीत्यर्थः । स्वोक्ते श्रुत्यन्तरं प्रमाणयति– **तदेष श्लोक इति** ॥ तस्मिन् एषः श्लोकः मन्त्रः । प्रमाणमिति शेषः । विज्ञानात्मा जीवः । प्राणाः इन्द्रियाणि । भूतानि पृथिव्यादीनि । सर्वैः देवैः सह तत्तदभिमानिभिः सह यत्र यस्मिन्नक्षरे सम्प्रतिष्ठन्ति । तत् अक्षरं ब्रह्म । हे सोम्येति कस्यचित्सम्बुद्धिः । यस्तु अधिकारी वेदयते जानाति स सर्वज्ञः सन् सर्वं पूर्णं ब्रह्मैव आविवेश प्रविशति। तस्मात्स्वप्नादिकर्तृत्वं सर्वाधारत्वञ्च परब्रह्मणः एवेति सिद्धम् ॥ ४-६ ॥

॥ इति चतुर्थः प्रश्नः ॥ ४ ॥

# अथ पञ्चमः प्रश्नः

## उपनिषत्

**अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो हैत-द्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति। तस्मै स होवाच। एतद्वै सत्यकाम परश्चापरश्च ब्रह्म यदोङ्कारः। तस्माद् विद्वानेतेनैवा-यनेनैकतरमन्वेति॥ १॥**

**टीका**–॥ **अथ हैनं शैब्यः** ॥ एवमुक्तलक्षणं परं ब्रह्म येन मन्त्रेणोपासितव्यम्, उपासितश्च यत्फलं प्रयच्छति, तदिदानीं वक्तुमयमुत्तरो ग्रन्थः। भगवन्नेतदेतेषु मनुष्येषु स यो यः कश्चित्प्रायणान्तं प्रयाणपर्यन्तं, यावच्छरीरादुत्क्रमणं तावदिति यावत्। ओङ्कारमोमित्याक्रियमाणं परमात्मानमभिध्यायीत। सर्वदा चिन्तयेदोमिति मन्त्रेणेत्यभिप्रायः। स पुरुषस्तेन ध्यानेन कतमं लोकं जयति प्राप्नोतीत्येवं पृष्टवते तस्मै स होवाच। यदोङ्कारः ओमित्याक्रियमाणं वस्तु तदेतत्परश्चापरश्च ब्रह्म। यस्मात्प्रणवो मुख्यतः परमात्मनः प्रतिपादकः, यस्माच्च तत्प्रतिमात्वेनामुख्यतो विरिञ्चप्रतिपादकश्च तस्माद्विद्वान्प्रणवेनोपासकः एतेनैवोपासनाख्येनायनेन गमनसाधनेन परापरब्रह्मणोरेकतरमन्वेति प्राप्नोति॥ १ ॥

**वामन**–ओमित्याक्रियमाणत्वादोङ्कारो विष्णुर्भगवान् एतदेव हि पूर्वोत्तरकाल-वर्ति ब्रह्म एतदेव सर्वेषामभीष्टलोकप्रापकम्। अनेनैव त्रयाणां लोकानामेकतर-मन्वेत्युपासकः ॥ ५-१ ॥

**प्रकाशिका**–'परश्चापरश्च' इत्यत्र परं वैकुण्ठादिलोकस्थितमन्यानधिष्ठितं ब्रह्म, अपरं चतुर्मुखाख्यप्रतिमान्तर्गतं ब्रह्म। तदिदमुक्तं टीकाकृता– **अमुख्यतो विरिञ्चप्रतिपादक इति**॥ गङ्गावाचकगङ्गापदस्य तत्सम्बन्धिनि तीरे अमुख्य-प्रयोगवत् ब्रह्मान्तर्गतविष्णुवाचकप्रणवेन तत्सन्निधानात् लक्षणया विरिञ्चेऽपि

प्रयोग इति भावः। 'अहमेवाखिलगुणो वाचकः प्रणवो मम' इति स्मृतेः 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' इति गीतोक्तेश्च नारायणादिनामवत्प्रणवस्यापि विष्ण्वसाधारणनामत्वादिति भावः। 'प्रणवोपासनाख्यायनेन' इत्यत्र 'अय पय गतौ' इति धातोः ब्रह्मगमनहेतुत्वात् प्रणवोपासनमेवायनमित्युच्यते॥ १ ॥

**छलारी–**॥ **अथ हैनं शैब्यः** ॥ **एवमुक्तलक्षणमिति**॥ पृथिव्यादिसर्वाधारत्वादिलक्षणमित्यर्थः। विष्ण्वादिशब्देषु सत्सु ओङ्कारमित्युक्तेरभिप्रायमाह– **ओमित्यनेन मन्त्रेणेति** ॥ ५-१ ॥

**ताम्रपर्णीय–** ॥ **तत्प्रतिमात्वेनेति**॥ ननु नामुख्यतोऽपि ब्रह्मण ओङ्काराभिधेयत्वम्। तथात्वे तद्व्याख्यानरूपव्याहृत्यादिसर्ववेदैरमुख्यतः प्रतिपाद्यत्वापातेन 'पूर्वप्रसिद्धिवर्जं तु शक्रान्ता देवता मताः' इत्यादिवचनविरोधः।

'ऋते नारायणादीनि नामानि पुरुषोत्तमः।
प्रादादन्यत्र भगवान्............ ॥'

इति वचनविरोधश्चेति चेदत्रेदं रहस्यम्। अस्तु चतुर्मुखस्य व्याख्येयोङ्कारप्रतिपाद्यत्वम्। मा भूद्यावत्तद्व्याख्यानप्रतिपाद्यता। नहि पुरन्दरस्य व्याख्येयेन्द्रशब्दवाच्यत्वमात्रेण यावत्तद्व्याख्यानप्रतिपाद्यतास्ति । तथा सति तस्य निरुपचरितपरमैश्वर्यापत्तेः। नच वाच्यमीश्वरः सर्ववेदार्थः। तद्व्याख्येयोङ्कारप्रतिपाद्यत्वात्, यो यद्व्याख्येयार्थः स तदर्थ इति सुधोक्तानुमानस्यैवं सतीन्द्रे व्यभिचारः स्यात्। यदि तत्र साध्यसत्त्वं तर्हि पुनरायातो विरोधपिशाच इति। तत्रोङ्कारमुख्यप्रतिपाद्यत्वहेतुत्वात्। यद्वा चतुर्मुखस्य वर्णत्रयात्मकोङ्कारप्रतिपाद्यत्वमेव। नत्वष्टवर्णात्मकप्रणवप्रतिपाद्यत्वम् । तस्यैवात्र प्रकृतत्वात्। व्याहृत्यादिकं विशिष्टप्रणवव्याख्यानरूपं विशिष्टप्रणवस्यैव तदसाधारणनामत्वमित्यविरोधः। प्राचीनटीकायां तु–ओमित्याक्रियमाणत्वाद्य ओंकारो विष्णुर्भगवानेतदेव हि परश्चापरश्च पूर्वोत्तरकालवर्ति एतद्ब्रह्म तदेव सर्वेषामभीष्टलोकप्रापकम्। अनेनैव त्रयाणां लोकानां एकतरमन्वेत्युपासकः॥ ५-१ ॥

**मङ्कालीय**–॥ **अथ हैनं शैब्यः** ॥ **एवमुक्तलक्षणमिति** ॥ पृथिव्यादि-सर्वाधारत्वलक्षणमित्यर्थः। ओङ्कारं प्रणवमित्यन्यथाप्रतीतिनिरासायाह– **ओमित्याक्रियमाणमिति** ॥ विष्ण्वादिशब्दान् विहाय ओङ्कारमित्युक्तेरभि-प्रायमाह– **ओमिति मन्त्रेणेति** ॥ ५-१ ॥

**गूढकर्तृक**–॥ **तत्प्रतिमात्वेनेति** ॥ ननु नामुख्यतोऽपि ब्रह्मणः ओङ्कारा-भिधेयता। तत्त्वे अमुख्यतया प्रणवार्थाः व्याहृतय इत्युक्तन्यायेन सर्ववेद-प्रतिपाद्यत्वप्राप्त्या 'पूर्वप्रसिद्धवर्जं तु शक्रान्ता देवता मताः' इति वचनविरोध इति चेत्। अस्तु व्याख्येयोङ्कारप्रतिपाद्यत्वम्। मास्तु यावत्तद्व्याख्यान-प्रतिपाद्यता। नहि पुरन्दरस्य व्याख्येयेन्द्रशब्दवाच्यत्वमात्रेण ईश्वरः सर्ववेदार्थः। तद्व्याख्येयोङ्कारप्रतिपाद्यत्वात्। यो यद्व्याख्येयार्थः स तदर्थ इति सुधोक्ता-नुमानस्य तर्हि चतुर्मुखे व्यभिचारः। यदि तत्र साध्यसत्त्वं तर्हि पुनरागतो विरोध इति। तत्रोङ्कारमुख्यप्रतिपाद्यत्वस्य हेतुत्वादिति। यद्वा चतुर्मुखस्य वर्णत्रया-त्मकप्रणवप्रतिपाद्यत्वमेव। नतु विशिष्टप्रणवेन। अत्र स यद्येकमात्रमभिध्यायीत द्विमात्रेणेति तदेकदेशस्यैव प्रकृतत्वात्। व्याहृत्यादिकं तु विशिष्टप्रणव-व्याख्यानरूपमिति न विरोधः॥ ५-१ ॥

**खण्डार्थ**–॥ **अथ हैनं शैब्यः**॥ एवमुक्तलक्षणं परं ब्रह्म येन मन्त्रेणो-पासितव्यम्, उपासितश्च यत्फलं प्रयच्छति तदिदानीं वक्तुमयमुत्तरो ग्रन्थः। भगवन्नेतदेतेषु मनुष्येषु स यो यः कश्चित् प्रायणान्तं प्रयाणपर्यन्तं यावच्छरीरा-दुत्क्रमणं तावदिति यावत्, ओङ्कारं ओमित्याक्रियमाणं परमात्मानं अभिध्यायीत सर्वदा चिन्तयेत्, ओमित्यनेन मन्त्रेणेत्यभिप्रायः, स पुरुषः तेन कतमं लोकं जयति प्राप्नोतीति पृष्टवते तस्मै स होवाच। यदोङ्कारः ओमित्याक्रियमाणं वस्तु तदेत-त्परश्चापरश्च ब्रह्म। यस्मात् प्रणवो मुख्यतः परमात्मप्रतिपादकः तत्प्रतिमा-त्वेनामुख्यतः विरिञ्चप्रतिपादकश्च तस्माद्विद्वान् प्रणवेनोपासक एतेनैवोपासना-ख्येनायनेन गमनसाधनेन परापरब्रह्मणोरेकतरमन्वेति प्राप्नोति॥ ५-१ ॥

**नर**–पञ्चमप्रश्नमारभते– **अथेति** ॥ एवमुक्तलक्षणं ब्रह्म एतन्मन्त्रेणो-पासितव्यं उपासितश्च यत्फलं प्रयच्छति तदिदानीं वक्तुमाह– **भगवन्निति** ॥

भगवन्नेतदेतेषु मनुष्येषु स यः यः कश्चित् प्रायणान्तं यावच्छरीरादुत्क्रमणं तावत् ओंङ्कारं ओमित्याक्रियमाणं परमात्मानं अभिध्यायीत सर्वदा चिन्तयेत् स ओमित्यनेन मन्त्रेण ईश्वरं चिन्तयन् तेन ध्यानेन कतमं लोकं जयति प्राप्नोति। एवं पृष्टवते तस्मै स होवाच। यदोङ्कारः ओमित्याक्रियमाणं वस्तु तदेतत्परश्च परब्रह्म यस्मात्प्रणवः मुख्यतः परमात्मप्रतिपादकः तत्प्रतिमात्वेनामुख्यतो विरिश्चप्रतिपादकश्च तस्माद्विद्वान् प्रणवोपासकः एतेनैवोपासनाख्येनोपायेन मार्गेण परापरब्रह्मणोरेकतरमन्वेति। प्रथमतो विरिश्चं प्रप्य तदनुज्ञातश्च परमं प्राप्नोति॥ ५-१॥

**उदय**–एवमुक्तलक्षणं परब्रह्म येन मन्त्रेणोपास्यं उपासितश्च यत्फलं ददाति तदिदानीमाह वेदपुरुषः– **अथ हैनमिति** ॥ अथ अनन्तरं शैब्यः सत्यकामः ह अतिनम्रतया एनं गुरुं पप्रच्छ । किमित्याह– **स यो हवा इति** ॥ हे भगवन् पूज्यगुरो सः यः कश्चित्, हवा प्रसिद्धम् । एतत् एतेषु मनुष्येषु प्रायणान्तं प्रयाणपर्यन्तं मरणपर्यन्तम् । यावच्छरीरादुत्क्रमणं तावदित्यर्थः । ओङ्कारं ओमित्याक्रियमाणं परमात्मानं अभिध्यायीत सर्वदा चिन्तयेत् । ओमिति मन्त्रेणेति शेषः । सः पुरुषः तेन ध्यानेन कतमं वाव कमेव लोकं जयति प्राप्नोतीति । एवं पृष्टवते तस्मै सत्यकामाय स एव उवाच । किमित्याह । हे सत्यकाम एतद्वै एतत् त्वया पृष्टमेव ओमित्येतदेव परमपरश्च ब्रह्म । मुख्यतः परब्रह्मवाचकः अमुख्यतो विरिश्चवाचक-श्चेति भावः। यदोङ्कारः यस्मादोङ्कारः उभयवाचकः तस्मात् कारणात् विद्वान् प्रणवोपासकः एतेनैवायनेनोपासनाख्येन गमनसाधनेन परापरब्रह्मणोरेकतरं अन्यतरं परं वापरं वेत्यर्थः। अन्वेति प्राप्नोति ।। ५-१ ॥

## उपनिषत्

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते। तमृचो मनुष्यलोकमुपनयन्ते। स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमान-मनुभवति। अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्त-**

**रिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूति-मनुभूय पुनरावर्तते। यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्माना विनि-र्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम् । स एतस्मा-ज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते ॥ २ ॥**

**भाष्यम्**

**'प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च।**
**ज्ञानं चतुर्मुखात्प्राप्य मुच्यते नात्र संशयः' ॥ २ ॥**

**टीका**–किं प्रणवोपासनमात्रेणैकतरमन्वेति? मैवम्। यथावज्ज्ञात्वोपासनेनैवे-त्युच्यते– **स इत्यादि**॥ अकारोकारमकाराख्यांशत्रययुक्तो हि प्रणवः। तत्र स उपासको यद्येकमात्रमेका मात्रा वाचिका यस्य तं परमात्मानं प्रणवेनाभिध्यायीत, कामप्येकामेव मात्रां सम्यग्विदित्वा इतरे अविज्ञायेति यावत्। तर्हि स उपासकस्तेनैव ध्यातेन परमात्मना संवेदित एहीति सम्बोधित इव देहपातानन्तरं क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते प्राप्नोति। जन्मेति शेषः। कथं कीदृशं जन्मेति। तमुपासकमृचः ऋग्वेदाभिमानिदेवताः पृथिव्यां मनुष्यलोकं मनुष्यशरीरं द्विजाग्र्यलक्षणमुपनयन्ते प्रापयन्ति। सच तत्र जन्मनि तपआदिसम्पन्नस्तत्फलरूपं महिमानमनुभवति।

अथ यदि द्विमात्रेण द्वे मात्रे वाचिके यस्य तेन परमात्मना मनसि सम्पद्यते सङ्गतो भवतीति। तिसृषु प्रणवमात्रासु ये के वा द्वे मात्रे सम्यज्ज्ञात्वाऽन्यामविज्ञाय परमात्मानं चिन्तयतीति यावत्। तर्हि स उपासको यजुर्भिर्यजुर्वेदाभिमानि-देवताभिरन्तरिक्षस्थं सोमलोकमुन्नीयते। नीतश्च स तत्र सोमलोके विभूति-मैश्वर्यमनुभूय पुनरावर्तते। ततश्च्यवते। यत एवं तस्माद्यस्तु पुरुष एतं परं पुरुषं त्रिमात्रेण तिस्रो मात्रा अपि सम्यग्विदित्वेति यावत्। ओमित्येतेनैवा-

क्षरेणाभिध्यायीत, स ध्याता ध्येयं परमेश्वरमपरोक्षीकृत्य तेजोरूपे सूर्ये सम्पन्नस्तं प्राप्तो भवति। सूर्यं प्राप्य चासौ यथा पादोदरः सर्पस्त्वचा जीर्णया विनिर्मुच्यते, एवं खलु स ध्यानी पाप्मना प्रारब्धेन विनिर्मुक्तो भवति। विधूतपापश्च स सामभिः सामाभिमानिदेवताभिः ब्रह्मलोकं सत्याख्यमुन्नीयते। तत्रच एतस्मात्सत्यलोकपतेर्जीवघनाज्जीवसारात्सकलजीवोत्तमाद् विरिञ्चात्तदुपदेशेनेति यावत्। परात्परमुत्तमोत्तमं पुरिशयं सकलजीवशरीरेषु शयितं पुरुषं पूर्णं वासुदेवमीक्षते। पुनरभिवृद्धज्ञानो भवतीति॥

अत्र सम्यग्विदित्वा प्रणवेन भगवन्तमुपासीनस्य विरिञ्चलोकप्राप्तिः फलमुक्तम्। तन्नोपपद्यते। 'देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि' इत्यादिविरोधादि-त्याशङ्कां परिहर्तुमाह– **प्रणवेनेति**॥ पुरुषमीक्षित्वा च तं प्राप्नोतीत्यत्र व्याख्यातव्यम्। समाख्यावशादतो न विरोध इति भावः। 'यत्तच्छान्तम्' इति मन्त्राच्च। एतेन 'एकतरमन्वेति' इत्यपि विवृतं भवति। अपरं ब्रह्म प्राप्य परमप्यन्वेतीति॥

अत्र यद् द्विमात्रेणेत्यादि द्वितीयान्तत्वेन विपरिणम्य प्रणवस्यैव परमात्मप्रतीकतयोपास्यत्वं परैरुक्तं, तदपि प्रणवेन हरिमित्युक्त्यैव परास्तम्। ओङ्कारमभिध्यायीतेति तत्र तत्र द्वितीयाश्रवणात् 'त्यजेदेकं कुलस्यार्थे' इति न्यायाद्विपरिणामो युक्त इति चेन्न। तृतीयाया अपि बहुशः श्रवणात्। समाख्या त्वस्माकमतिरिच्यते। 'त्रिमात्रेणोमित्येतेनैवाक्षरेण' इत्युपसंहारश्च गरीयान्। 'ज्ञानं चतुर्मुखात्प्राप्य' इत्यनेन पराज्जीवघनादपि परं पुरुषमीक्षत इत्येतदपव्याख्यानं प्रत्युक्तं भवतीति॥ २ ॥

**वामन**–तत्रैवोपास्तिविशेषेण लोकविशेष इत्याह– **स यदीति** ॥ स उपासको यदि भगवन्तमेकमात्रं अ इत्येकमात्रेण प्रणवेन संवेद्यमभिध्यायीत तर्हि तावन्मात्रविशेषेणैव हि भगवान् संवेदितोऽनेन । अतस्तथोपासको जगत्या-मेव प्रतिमादिसंस्थं भगवन्तमभिसम्पद्यते। ऋग्देवतास्तमुपासकं तेनायनेन मनुष्यलोकमुपनयन्ते। ऋग्वेदमूलत्वादकारस्य। स तत्र तपआदिभिः सम्पन्नो महान्भवति। ओ इति द्विमात्रेण भगवदुपासकस्तं मनसि सम्पद्यते। प्रतिबिम्बमात्रं

सामान्यरूपञ्च पश्यतीत्यर्थः। सोमलोकं प्राप्य तत्फलं भुक्त्वा पुनरावर्तते। 'यः पुनरेतम्' इत्यादेरभिप्रायं तु प्रणवेन हरिं ध्यायन्नित्यादिना तत्त्वविवेकवाक्येन प्रकटयति। पादौ उदरे गूढत्वेन स्थिता अस्येति पादोदरः पन्नगः। जीवघनो जीवसारश्चतुर्मुखः ॥ ५-२ ॥

**प्रकाशिका**—यथावज्ज्ञात्वेत्यस्य मात्रात्रयमेकीकृत्य तदुक्तगुणवत्तया ज्ञात्वेत्यर्थः॥ 'तृतीयाया अपि बहुशः श्रवणात्' इत्यत्र 'त्यजेदेकं कुलस्यार्थे' इति त्वदुक्तवचनरीत्या तृतीयाया एकत्वाभावात्त्वयोदाहृतं प्रकृतासङ्गतमिति भावः॥ २ ॥

**श्रीनिवास**– ॥ **सङ्गतो भवतीति** ॥ तादृशं मनसा ध्यायतीति यावत् ॥ **विरोधादिति** ॥ तथाच भगवन्तमुपासीनस्य साक्षाद्भगवत्प्राप्तिरेव वाच्येति भावः॥ **अत्रेति** ॥ उपनिषदि ईक्षत इत्यनन्तरमित्यर्थः॥ **समाख्येति** ॥ 'ज्ञानं चतुर्मुखात्प्राप्य मुच्यते' इत्युक्तत्वात् । भगवत्प्राप्तेरेव च मोक्षत्वादिति भावः। प्राप्नोतीत्यर्थस्य समाख्यायाः सत्वेऽपि उपनिषदोऽनभिमतत्वान्न व्याख्यातव्यमित्यत उपनिषदोऽपि परब्रह्मप्राप्तिरभिप्रेतैव। यत उपसंहारे 'यत्तच्छान्तमजरममृतमभयं परात्परं च' इत्याहेत्यभिप्रेत्याह– **यत्तच्छान्तमिति** ॥ विवरणप्रकारमेव दर्शयति– **अपरमिति** ॥ आदाविति शेषः। आदिपदेन त्रिमात्रेणोमित्येतेनैवाक्षरेण। ओङ्कारेणैवायमनेनेत्यस्य सङ्ग्रहः। इत्युक्त्या तृतीयया प्रणवस्य साधनत्वोक्त्या। हरिमिति हरेरेवोपास्यत्वोक्त्या चेत्यर्थः॥ **त्यजेदिति** ॥ तथाच द्वितीयाविभक्तियुक्तवाक्यानां बहुत्वेनैव बहुबाधस्य अन्याय्यत्वादेतदनुसारेण तृतीयाविभक्तियुक्तवाक्यान्येव विपरिणामेनान्यथा नेतव्यानीत्यर्थः। यद्वा सप्तमी तृतीयार्थे इत्यभिप्रेत्येत्थं व्याख्यातम्। बलीयान् ओङ्कारमभिध्यायीतेत्युपक्रमापेक्षयेति शेषः॥

**छलारी**—स यद्येकमात्रमभिध्यायीतेत्यत्रावयवार्थप्रतीतेः विशिष्याप्रतीतेश्च विग्रहप्रतीतिप्रदर्शनपूर्वकं तद्वक्तुं तदुपयुक्तमाह– **अकारोकारेत्यादिना** ॥ यद्यप्यवधातोर्मनिन्प्रत्ययेन वैय्याकरणैः ओमिति निष्पादितः। 'अवतेष्टिलोपश्च'

इत्युणादिसूत्रेण अवधातोर्मनिन्प्रत्ययं कृत्वा प्रत्ययस्य टिलोपं विधाय ततो 'ज्वरत्वरा' इति धातोरुपधायाश्च ऊठादेशे सवर्णदीर्घे 'सार्वधातुकार्धधातुकयोः' इति गुणे ओमिति रूपनिष्पत्तिः 'ओतत्ववाची' इत्यनुव्याख्याने आचार्यैरप्य-ङ्गीकृता। तथापि व्याख्यानान्तरमित्यवधेयम्। अस्मिन्पक्षे तु 'अत सातत्यगमने' इति धातोरौणादिक उप्रत्यये अव इति रूपम्। वेञः क्विपि 'वचिस्वपि' इति यजादित्वात्सम्प्रसारणे ऊ इति रूपम्। मन्यतेः औणादिके ड्विप्रत्यये मकारमात्रं रूपम् । पूर्वयोरकारोकारयोः 'आद्गुणः' इति गुणे ओमिति रूपनिष्पत्तिः। इममेव पक्षमभिप्रेत्य अकारादीनामोङ्कारत्वोक्तिरवधेया। श्रुतौ तु अंशस्यैकमात्रेति वचनं ज्ञेयम्॥ तेनैवेति मूलपदस्य व्याख्यानम्– **परमात्मनेति**॥ परमात्मनेत्यर्थः। तत्फलमेकमात्रज्ञानपूर्वकप्रणवोपासनाफलम्। महिमानं महत्त्वं अनुभवति प्राप्नोतीत्यर्थः। द्विमात्रेण मनसि सम्पद्यत इत्यस्याक्षरार्थमुक्त्वाभिप्रायमाह– **तिसृष्वित्यादिना** ॥ पुनरावर्तत इत्यस्य सोमलोकं प्रति पुनरागच्छतीति भ्रान्तिवारणायाह– **ततश्च्यवत इति** ॥ सोमलोकाद्भूलोकं प्रति आगच्छतीत्यर्थः। सम्पन्न इत्यत्र संशब्दविवक्षितमाह– **ध्येयं परमेश्वरमपरोक्षीकृत्य प्राप्तो भवतीति** ॥ स्वरूपं बाह्यहृत्कमलस्थितं अन्तराद्वयमित्यर्थः। तथाचोक्तं काठकभाष्ये–

देहाङ्गुष्ठमितो देहे जीवाङ्गुष्ठमितो हृदि।
जीवस्य तु स विज्ञेयो जीवाद्भेदेन दृष्टये ॥ इति॥

॥ **जीवघनाज्जीवसारादिति**॥ 'मूर्तौ घन' इति सूत्रेण घनधातोः काठिण्यार्थे घनादेशो निपातितः। काठिण्यं नामान्यैरलभ्यत्वम्। अनेनैवाशयेनाह– **सर्व-जीवोत्तमादिति** ॥ **पुनरभिवृद्धज्ञानो भवतीति**। पूर्वमात्मान्तरात्मनोरपरोक्ष-ज्ञानस्य जातत्वात्पुनरित्युक्तम्। ब्रह्मोपदेशस्य चरमत्वेन तदुपदिष्टप्रकारध्यानेना-परोक्षीकृतस्य साक्षान्मोक्षसाधनत्वात्तस्य च वासुदेवत्वादिति भावेनोक्तम्। **वासुदेवमिति** ॥ 'इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव निजमुक्ति-पदप्रदाता' इति श्रीमन्महाभारततात्पर्यनिर्णयोक्तेः।

नन्वस्यां श्रुतौ 'सामभिरुन्नीयते ब्रह्मलोकम्' इत्युक्तत्वाद् भगवद्गीता-वाक्यविरोधपरिहारः कथमित्यत आह– **पुरुषमीक्षित्वा चेति** ॥ व्याख्यातव्य-मिति श्रुतौ ततः प्राप्नोतीत्यध्याहारेणेति भावः। तत्र युक्तिमाह– **समाख्या-वशादिति** ॥ भाष्योदाहृतसमाख्यावशादित्यर्थः। युक्त्यन्तरञ्चाह– **यत्तदिति** ॥ उत्तरत्र सुखोत्कर्षसीमाभूमिरूपं अजरमभयं परं ब्रह्म विद्वानोङ्कारेणोपासकः सामभिरन्वेतीत्युत्तरत्र मन्त्रेण वक्ष्यमाणत्वाच्चेति भावः॥ **एतेनेति** ॥ प्रणवेन हरिं ध्यायन्नित्यनेनेत्यर्थः। परापव्याख्यानमनूद्य दूषयति– **अत्रेति** ॥ **इत्यादीति** ॥ अत्रादिशब्दात् त्रिमात्रेणोमित्यनेनैवाक्षरेणेति ग्राह्यम्॥ **प्रतीकतयेति** ॥ प्रतिमा-त्वेनेत्यर्थः॥ **परास्तमिति** ॥ **प्रणवेति** ॥ ओङ्कारस्य तृतीयाया कारणत्वोक्ते-र्हरिमिति द्वितीयायाः उपासनाकर्मत्वोक्तेरिति भावः॥ **तत्र तत्रेति** ॥ ओङ्कारमिति प्रश्नवाक्ये प्रतिवचने ॥ **एकमात्रमिति** ॥ द्विवारमित्यर्थः॥ **इति न्यायादिति** ॥

'त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥'

इति भारतोक्तन्यायादित्यर्थः। पादचतुष्टये षष्ठ्यन्तेषु नाशप्राप्ताविति शेषो ज्ञेयः। तथा द्वितीयान्तपदद्वयदर्शनाद् द्विमात्रेणेति तृतीयाद्वितीयान्तं कर्तव्य-मित्यर्थः॥ **अतिबहुलश्रवणादिति**॥ **प्रश्नवाक्येनेति** ॥ प्रतिवचने च ॥ **एतेनैवायनेनेति**॥ **द्विमात्रेण त्रिमात्रेणोमित्यनेनैवाक्षरणेति**॥ अतिबहुल-श्रवणादित्यर्थः। ननु भवत्पक्षे एकमात्रमित्यादेः तृतीयन्तत्वेन विपरिणामः स्यात्। अस्माकं तृतीयान्तस्य द्वितीयान्तत्वेन विपरिणामः इति पक्षद्वयस्य साम्यादित्यत आह– **अस्माकमिति**॥ अङ्गीकृत्य चेदमुक्तम्। वस्तुतस्तु तृतीयाया अतिबहुल-श्रवणादित्युक्त्या साम्याभावस्यैव सिद्धेः। नन्वस्मत्पक्षेऽपि भवत्पक्षे समाख्या-वदुपक्रमे ओङ्कारमभिध्यायीतेति द्वितीयाश्रवणात्साम्यमेवेत्यत आह– **त्रिमात्रेति** ॥ समाख्यासाहित्येनोपसंहारस्य बलीयस्त्वम्। वस्तुतस्तु उपसंहारस्योपक्रम-व्याख्यानरूपत्वाद्भाष्योक्तरीत्योपसंहारस्यैव प्राबल्यमिति भावः॥ **प्रत्युक्तं भवतीति** ॥ प्रमाणेऽन्यथाव्याख्यातत्वेनैतद्व्याख्यानस्य श्रुत्यनभिप्रेतत्वादिति

भावः। अनविप्रयुक्ता इत्यत्र प्रयुक्ता अन्योन्यसम्बन्धाः विशब्दस्तु निषेधार्थकः ॥ २ ॥

**ताम्रपर्णीय**–तत्रैवोपास्तिविशेषेण लोके विशेष इत्याह– **स यदीति**॥ उपासको यदि भगवन्तमेकमात्रं अ इत्येकमात्रेणैव प्रणवेन संवेदितः तमभिध्यायते तर्हि तावन्मात्रेणैव स उपासको जगत्यामेव प्रतिमादिस्थं भगवन्तमभिसम्बद्ध्यते। देवतास्तमुपासकं तेनायनेन मनुष्यलोकं उपनयन्ते। ऋग्वेदमूलत्वादकारस्य स तत्र तपआदिभिः सम्पन्नो महान् भवति। ओ इति द्विमात्रेण भगवदुपासक-स्तन्मनसि सम्पद्यते । वासमानामयं प्रतिबिम्बमात्रं सामान्यरूपं पश्यतीत्यर्थः। स सोमलोकं प्राप्य तत्फलं भुक्त्वा पुनरावर्तते। यः पुनरेतमित्यभिप्रायं तु प्रणवेन हरिं ध्यायन् इत्यादिना तत्त्वविवेकवाक्येन प्रकटयतीति व्याख्यातम्। अनेकार्थत्वादुपनिषद्भाष्ययोरविरोधः। तपसा ब्रह्मचर्येणेत्याद्यविरोधेनाह– **द्विजा-ग्र्येति**॥ **ये के वेति**॥ अनियते द्वे मात्रे इत्यर्थः। परमात्मना मनसि सम्पद्यत इत्यस्य तात्पर्यम्– **चिन्तयतीति**॥ **सर्प इति**॥ पादावुदरे गूढत्वेन स्थिता अस्येति प्राचीनटीकायां व्यक्तमेतत्॥ **प्रारब्धेनेति** ॥ ननु 'स प्राप्नोति विरजानदीं तत्सुकृतदुष्कृते विधूनत' इति श्रुतेः प्रारब्धकर्मणो विरजावधिकत्वोक्तिविरोधः। लिङ्गशरीरापादकप्रारब्धकर्म-शेषस्य सर्वेषां तदवधिकत्वेऽपि सुखदुःखापादकप्रारब्धकर्मणः केषाञ्चित्सूर्य-प्राप्त्यवधिकत्वेनाविरोधात्। तदुक्तम्–

प्रारब्धकर्मशेषस्तु विरजातरणावधिः।
स्वोदयात्फलदं ज्ञानमादेहं कर्म वारवेः॥ इति॥

कर्म सुखदुःखापादकं अल्पकानामादेहं चरमशरीरपर्यन्तं मध्यमानामारवे रविपर्यन्तमित्यर्थः। उत्तमानां तदपि विरजाप्राप्तिपर्यन्तमेव। 'स प्राप्नोति विरजानदीम् । तत्सुकृतदुष्कृत' इति सुखदुःखयोः सुकृतदुष्कृतयोरेव तत्र विधूननोक्तेः। नचावश्यभोक्तव्यत्वात्सुखदुःखापादकप्रारब्धस्य सूर्ये तत्परि-त्यागोक्तिविरोधः। भोगेनावशिष्टयोरल्पयोरुपमर्दस्यापि 'आरब्धयोश्च नाशः

स्यादल्पयोः पुण्यपापयोः' इति प्रमितत्वादलं प्रमेयप्रपञ्चेन ॥ **पुनरतिवृद्धज्ञान इति** ॥ स्वयोग्यरूपापरोक्षस्य प्रागेव प्राप्तत्वाल्लिङ्गभङ्गार्थं चतुर्मुखोपदेशेन पुनस्तत्रैव तद्गुणादिविषयाभिवृद्धापरोक्षज्ञानी भवतीत्यर्थः॥ **ओङ्कारमभि-ध्यायीतेति तत्र तत्र द्वितीयाश्रवणादिति**॥ इतिशब्द आद्यर्थः 'ओमित्ये-तदक्षरमुद्गीथमुपासीत' । 'ओङ्कारं पादशो विद्यात्'। 'ओङ्कारं पादशो ज्ञात्वा' 'एवं हि प्रणवं ज्ञात्वा'। 'प्रणवं हीश्वरं विद्यात्'। 'सर्वव्यापिनमोङ्कारं' इत्यादौ तत्र छान्दोग्यमाण्डूकादौ द्वितीयाश्रवणात् । त्यजेदेकं कुलस्यार्थं इति न्यायाद्द्विमात्रेणेत्यादितृतीयायाः विपरिणामो युक्त इति भावः॥ **बहुश इति** ॥ द्विमात्रेण त्रिमात्रेणोमिति अनेनैवाक्षरेणोङ्कारेणैवायनेनेत्यस्यामेवोपनिषदि ग्रन्था-न्तरे च तृतीयाया अपि बहुशः श्रवणादिति योज्यम्। यद्वात्रैव तत्र तत्र प्रकरणे 'ओङ्कारमभिध्यायीत' इत्योङ्कारस्य भगवत्प्रतीकत्वज्ञापकद्वितीयायाः । स यद्येकमात्रमिति च द्वितीयाया, यदोङ्कार इति प्रतीकत्वज्ञापकप्रथमायाश्च श्रवणात् मन्त्रत्वज्ञापकतृतीयायाः द्विमात्रेण त्रिमात्रेणोमित्यनेनैवाक्षरेणेति स्थानद्वये श्रवणेन प्रतीकत्वज्ञापकापेक्षया मन्त्रत्वज्ञापकस्याल्पत्वेन त्यजेदेकं कुलस्यार्थे इति न्यायात्तृतीयायाः विपरिणामो युक्त इति योज्यम्। मन्त्रगततृतीया तूक्तार्थे प्रमाणरूपत्वादविवक्षितेति भावः। अत एव टीकायां त्रिमात्रेणोमित्यनेनैवा-क्षरेणोपसंहारश्च बलीयानित्यत्रैव प्रकरणपरिसमाप्तिं वक्ष्यति। तृतीयाया अपीत्यस्यायमर्थः। त्रिमात्रेण ओमित्यनेनैवाक्षरेणेत्यनयोर्विशेषणविशेष्यभावा-पन्नत्वेऽपि तृतीयायास्तत्रैव द्विःश्रवणात् द्विमात्रेणेति च तृतीयाश्रवणात् श्लोकेऽपि तृतीयाश्रवणान्मन्त्रत्वज्ञापकस्य च बहुत्वान्न न्यायावकाश इति भावः॥ ५-२ ॥

**मङ्कालीय–**एकमात्रमभिध्यायीतेत्यत्रावयवार्थाप्रतीतेर्विशेष्याप्रतीतेश्च विग्रहप्रदर्शनपूर्वकं तद्वक्तुं तदुपयुक्तमाह– **अकारेत्यादिना** ॥ यद्यपि अवतेष्टि-लोपश्चेति उणादिसूत्रेण अवधातोर्मनिन्प्रत्ययं कृत्वा प्रत्ययटिलोपं विधाय ततो ज्वरत्वरेति सूत्रेण धातोरुपधायाश्चोठि सवर्णदीर्घे सार्वधातुकार्धधातुकयोरिति गुणे ओमिति रूपनिष्पत्तिः 'ओतत्ववाची ह्योङ्कारः' इत्यनुव्याख्याने आचार्ये-

रङ्गीकृता, तथापि व्याख्यानान्तरमेतदित्यवधेयम्। अस्मिन् पक्षे तु अत सातत्यगमन इति धातोरौणादिके डप्रत्यये अ इति रूपं वेञः क्विपि 'वचिस्वपि' इति यजादित्वात्सम्प्रसारणे उ इति रूपम्। मन्यतेरौणादिके ड्डिप्रत्यये म् इति रूपम्। पूर्वयोरकारोकारयोराद्गुणे ओमिति रूपनिष्पत्तिः। इममेव पक्षमभिप्रेत्याकारादीनामोङ्कारांशत्वोक्तिरवधेया। श्रुतौ अंशस्यैव मात्रेति वचनं ज्ञेयम्॥ **तत्फलरूपमिति** ॥ एकमात्रार्थज्ञानपूर्वकप्रणवोपासनफलरूपमित्यर्थः। महिमानं महत्त्वम्। अनुभवति प्राप्नोति। द्विमात्रेण मनसि सम्पद्यत इत्यस्याक्षरार्थमुक्त्वाभिप्रायमाह– **तिसृष्वित्यादिना** ॥ पुनरावर्तत इत्यस्य सोमलोकं प्रति पुनरागच्छतीति भ्रान्तिनिरासायाह– **ततश्च्यवत इति** ॥ **पुनरभिवृद्धज्ञानो भवतीति** ॥ पूर्वमात्मान्तरात्मनोरपरोक्षज्ञानस्य जातत्वात्पुनरित्युक्तम्। ब्रह्मोपदेशस्य चरमत्वेन तदुपदिष्टप्रकारध्यानेनापरोक्षीकृतस्य साक्षान्मोक्षसाधनत्वात्। तस्य च वासुदेवत्वादिति भावेनोक्तम् ॥ **वासुदेवमिति** ॥ कथमुक्तशङ्कापरिहार इत्यत आह– **पुरुषमीक्षित्वा चेति** ॥ श्रुतौ ततस्तं प्राप्नोतीत्यध्याहारेणेति भावः। तत्र युक्तिमाह– **समाख्यावशादिति** ॥ भाष्योदाहृतसमाख्यावशादित्यर्थः। तत्र मुच्यते नात्र संशय इत्युक्तेरिति भावः। युक्त्यन्तरमाह– **यत्तच्छान्तमिति** ॥ **एतेनेति** ॥ प्रणवेन हरिं ध्यायन्नित्यनेनेत्यर्थः। परव्याख्यानमनूद्य दूषयति– **अत्रेति** ॥ अत्रादिशब्देन त्रिमात्रेणैतेनैवाक्षरेणेत्येतद्ग्राह्यम्॥ **प्रतीकतयेति** ॥ प्रतिमात्वेनेत्यर्थः॥ **परास्तमिति** ॥ तृतीयाया ओङ्कारस्य करणत्वोक्तेर्हरिमिति द्वितीयया च हरेरुपासनाकर्मत्वोक्तेरिति भावः॥ शङ्कते– **ओङ्कारमिति** ॥ **तत्रतत्रेति** ॥ ओङ्कारमिति प्रश्नवाक्ये एकमात्रमिति प्रतिवचने चेत्यर्थः॥ **न्यायादिति** ॥

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥

इति भारतोक्तन्यायादित्यर्थः॥ **बहुशः श्रवणादिति** ॥ अतो वैलक्षण्यमिति भावः। ननु भवत्पक्षे एकमात्रमित्यादेः तृतीयान्तत्वेन विपरिणामः स्यात्। अस्माकं तु द्वितीयान्तत्वेनेति पक्षद्वयसाम्यं स्यादित्यत आह–

**समाख्या त्वस्माकमिति** ॥ अङ्गीकृत्य चेदमुदितम्। वस्तुतः तृतीयाया बहुशः श्रवणेन साम्यस्यैवासिद्धेः। एकमात्रमित्यादौ बहुव्रीहित्वाद्यङ्गीकाराच्च। नन्वस्म-त्पक्षेऽपि भवत्पक्षे समाख्यावत् ओङ्कारमभिध्यायीतेत्युपक्रमे श्रवणात्साम्य-मेवेत्यत आह– **त्रिमात्रेणेति** ॥ **उपसंहारश्च गरीयानिति** ॥ उपसंहारस्यो-पक्रमापेक्षया पश्चिमत्वेन व्याख्यानरूपत्वाद्बलीयस्त्वमिति भावः॥ **प्रत्युक्तं भवतीति** ॥ प्रमाणेऽन्यथाव्याख्यातत्वेनैतद्व्याख्यानस्य तद्विरुद्धत्वादिति भावः॥ ५-२ ॥

**गूढकर्तृक–**तपसा ब्रह्मचर्येणेत्याद्यनुरोधेनाह— **द्विजाग्र्येति** ॥ **ये के वेति** ॥ अनियते द्विमात्र इत्यर्थः॥ **प्रारब्धेनेति** ॥ नचावश्यभोक्तव्यत्वाद्विरोधः। आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोरित्युक्तत्वात्। नच विरजातरणा-वधित्वविरोधः। 'प्रारब्धकर्मशेषस्तु विरजातरणावधिः' इत्यस्य लिङ्गशरीरा-पादकप्रारब्धपरत्वात्। एतच्च नोत्तमविषयम्। नाप्यधमविषयम्। स प्राप्नोति विरजानदीं तत्सुकृतदुष्कृते विधूनत इति। आदेहं कर्मेति उत्तमाधमकर्मणो-र्विरजाप्राप्तिदेहपर्यन्तत्वोक्तेरिति रहस्यम् ॥ **ओङ्कारमभिध्यायीतेति तत्र तत्र द्वितीयाश्रवणादिति**॥ इतिशब्द आद्यार्थे । 'ओमित्येतदक्षरमुद्गीथमुपासीत' 'ओङ्कारं पादशो विद्यात्' 'ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत्' 'एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम्' 'प्रणवं हीश्वरं विद्यात्सर्वव्यापिनमीश्वरम्' 'सर्वव्यापिनमोङ्कारम्' इत्यादौ तत्र तत्र छान्दोग्यमाण्डूकादौ द्वितीयाश्रवणात्। त्यजेदेकं कुलस्यार्थ इति न्यायात्। द्विमात्रेणेत्यादिविपरिणामो युक्त इति भावः॥ **बहुश इति** ॥ ग्रन्थान्तरे द्विमात्रेणोमित्यनेनैवाक्षरेण ओङ्कारेणायणेनेनेति। अत्र बहुशः श्रवणादित्यर्थः। यद्वा तत्र तत्र प्रकरणे "ओङ्कारमभिध्यायीत" इति ओङ्कारस्य भगवत्प्रतीकत्वज्ञापकश्रवणाद् द्वितीया वर्तते। स यद्येकमात्रमिति तज्ज्ञापकद्वितीयान्तरश्च ॥ **यदोङ्कार इति** ॥ प्रतीकत्वज्ञापकप्रतिमा चास्ति। मन्त्रत्वज्ञापकं तु द्विमात्रेणेत्यल्पमेव। मन्त्रगततृतीयाप्रमाणरूपत्वान्नात्र साधिका। अत एव त्रिमात्रेणोमित्यनेनैवाक्षरेणेत्युपसंहारश्च बलीयानित्यत्रैव प्रकरणे परिसमाप्तिं वक्ष्यति। तथाच त्यजेदेकं कुलस्यार्थ इति न्यायात्

प्रतीकत्वज्ञापकस्य बहुत्वान्मन्त्रत्वज्ञापकस्याल्पत्वाद्विपरिणामो युक्त इति शङ्काशयः। यथाकथञ्चित् तृतीयाया अपि बाहुल्यसत्वान्न न्यायावकाश इति परिहारवाक्याभिप्रायः। केचित्तु ओङ्कारमभिध्यायीतेति तत्र तत्र द्वितीयाश्रवणात् 'त्यजेदेकं कुलस्यार्थे' इति न्यायात् 'प्रणवेन हरिम्' इति स्मार्ततृतीयाया विपरिणामो युक्त इति चेन्न। श्रुतौ तृतीयाया अपि बहुशः श्रवणेन विपरिणामानुपपत्तेः। एवं सत्यस्माकं समाख्या त्वतिरिच्यत एव स्वार्थसाधकं भवतीति केचिद्व्याचक्षते॥ ५-२॥

**खण्डार्थ**–किं प्रणवोपासनमात्रेणैकतरमन्वेति? न। किन्तु यथावज्ज्ञात्वोपासनेनैवेत्युच्यते– **स इत्यादि**॥ अकारोकारमकारख्यांशत्रययुक्तो हि प्रणवः। स उपासको यद्येकमात्रं एकमात्रा वाचिका यस्य तं परमात्मानं प्रणवेनाभिध्यायीत, एकामेव मात्रां सम्यग् विदित्वा इतरे मात्रे अविज्ञायेति यावत्, तर्हि स उपासकः तेनैव ध्यानेन परमात्मना संवेदितः एहीति सम्बोधित इव देहपातानन्तरं क्षिप्रमेव जगत्यां पृथिव्यां अभिसम्पद्यते प्राप्नोति। जन्मेति शेषः। कथं कीदृशं जन्मेति? तमुपासकमृचः ऋग्वेदाभिमानिन्यो देवताः पृथिव्यां मनुष्यलोकं मनुष्यशरीरं द्विजाग्र्यलक्षणं उपनयन्ते प्रापयन्ति। स च तत्र जन्मनि तपआदिसम्पन्नः तत्फलरूपमहिमानमनुभवति। अथ यदि द्विमात्रेण द्वे मात्रे वाचिके यस्य तेन परमात्मना मनसि सम्पद्यते सङ्गतो भवति, तिसृषु प्रणवमात्रासु द्वे मात्रे सम्यग् ज्ञात्वा अन्यामविज्ञाय परमात्मानं चिन्तयतीति यावत्, तर्हि स उपासकः यजुर्भिः यजुर्वेदाभिमानिदेवताभिः, अन्तरिक्षं अन्तरिक्षस्थं सोमलोकं उन्नीयते। उन्नीतश्च तत्र सोमलोके विभूतिमैश्वर्यं अनुभूय पुनरावर्तते। ततश्च्यवते। यत एवं तस्माद्यस्तु पुरुषः एतं परं पुरुषं त्रिमात्रेण तिस्रो मात्रा अपि सम्यग् विदित्वेति यावत्, ओमित्यनेनैवाक्षरेणाभिध्यायीत स ध्याता परमेश्वरमपरोक्षीकृत्य तेजोरूपे सूर्ये सम्पन्नः तं प्राप्नोति। सूर्यं प्राप्य चासौ यथा पादोदरः सर्पः त्वचा जीर्णया विनिर्मुच्यते एवं खलु स ध्यानी पाप्माना प्रारब्धेन विनिर्मुक्तो भवति। विधूतपापश्च स सामभिः सामवेदाभिमानिदेवताभिः ब्रह्मलोकं सत्याख्यमुन्नीयते। तत्र च एतस्मात्सत्यलोकाधिपतेर्जीवघनाज्जीवसारात् सकलजीवोत्तमाद्विरिञ्चात्तदुप-

देशेनेति यावत्, परात्परं उत्तमोत्तमं सकलशरीरेषु शयितं पुरुषं पूर्णं वासुदेवं ईक्षते पुनरभिवृद्धज्ञानो भवतीति। अत्र पुरुषमीक्षित्वा च तं प्राप्नोतीत्यपि ग्राह्यम्। यथोक्तं भाष्ये॥ ५-२॥

**नर**–किं प्रणवोपासनामात्रेणैकतरमन्वेति। मैवम्। यथावज्ज्ञात्वोपासनेनैवेत्युच्यते– **स इति** ॥ अकारोकारमकाराख्यांशत्रययुक्तः प्रणवः। तत्र स उपासको यद्येकमात्रं एकमात्रा वाचिका यस्य तं परमात्मानं प्रणवेनाभिध्यायीत। एकैकामेव मात्रां सम्यग्विज्ञाय इतरे अज्ञात्वा ध्यायीत तर्हि स उपासकः तेन ध्यानेन परमात्मना संवेदितः एहीति सम्बोधित एव देहपातानन्तरं क्षिप्रमेव जगत्यां पृथिव्यां जन्माभिसम्बद्ध्यते। कथं कीदृशं जन्म तमुपासकः ऋचः ऋग्वेदाभिमानिदेवताः पृथिव्यां मनुष्यलोकं मनुष्यशरीरं द्विजग्र्यलक्षणं उपनयन्ते प्रापयन्ति। स च तत्र जन्मनि तपआदिसम्पन्नः तत्फलरूपं महिमानमनुभवति। अथ यदि द्विमात्रेण द्वे मात्रे वाचिके यस्य तेन परमात्मना मनसि सम्पद्यते सङ्गतो भवतीति। तस्य तिसृषु प्रणवमात्रासु ये वा के वा द्विमात्रे सम्यज्ज्ञात्वा अन्यामविज्ञाय परमात्मानं ध्यायीत स उपासको यजुर्भिर्यजुर्वेदाभिमानिभिः देवैः अन्तरिक्षं अन्तरिक्षस्थसोमलोकमुन्नीयते। स तत्र सोमलोके विभूतिमैश्वर्यं अनुभूय पुनरावर्तते ततः च्यवते। अत एव तस्माद्यस्तु पुरुषः एतं परमपुरुषं त्रिमात्रेण तिस्रो मात्रा अपि सम्यग्विज्ञाय ओमित्येतेनैवाक्षरेणाभिध्यायीत, सः ध्याता तेजोरूपे सूर्ये सम्पन्नः समपरोक्षीकृत्य परमेश्वरं प्राप्तो भवति। सूर्यं प्राप्य चासौ यथा पादोदरः सर्पः त्वचा जीर्णया विनिर्मुच्यते एवं खलु सः ध्यानी पाप्मना प्रारब्धेन विनिर्मुच्यते, स पाप्मना विनिर्मुक्तापरोक्षज्ञानी सामभिः सामवेदाभिमानिदेवताभिः ब्रह्मलोकं सत्याख्यं उन्नीयते। तत्र एतस्मात्सत्यलोकपतेर्जीवघनात्सकलजीवोत्तमाद्विरिञ्चात्तदुपदेशेन परात्परं उत्तमोत्तमं पुरिशयं सकलपुरुषशरीरेषु शायिनं पुरुषं पूर्णं वासुदेवं ईक्षते। पुनरभिवृद्धज्ञानो भवति। वासुदेवमीक्षित्वा तञ्च प्राप्नोतीति॥ ५-२ ॥

**उदय**–न केवलं प्रणवोपासनामात्रेण परापरब्रह्मणोः प्राप्तिः। किन्तु यथावज्ज्ञात्वोपासनेनेत्यत आह– **स यद्येकमात्रमिति** ॥ प्रणवो हि अकारो-

कामकारत्रयमिति प्रसिद्धः तत्र स उपासकःयदि एका मात्रा यस्येति तं भगवन्तं अभिध्यायीत चिन्तयेत्। कामप्येकां मात्रां सम्यग् विदित्वा इत्यर्थः। तर्हि स उपासकः तेनैव ध्यानेनैव संवेदितः परमात्मना सम्बोधितः सन् देहपातानन्तरं पूर्णं क्षिप्रमेव जगत्यां पृथिव्यामभिसम्पद्यते । जन्मेति शेषः । प्राप्नोति । को विशेषः जन्मन इत्यत आह– **तमृच इति**।। तमुपासकं ऋचः ऋग्वेदाभिमानिनः देवताः मनुष्यलोकं सद्ब्राह्मणत्वलक्षणं शरीरं उपनयन्ते प्राप्नुवन्ति। स उपासकस्तत्र जन्मनि तपसा नित्यनैमित्तिकेन कर्मणा शास्त्राभ्यासरूपेण वा ब्रह्मचर्येण व्रतेन श्रद्धयाऽस्तिक्य-निष्ठया सम्पन्नः युक्तः सन् महिमानं पूज्यत्वमनुभवति प्राप्नोति इति। अथ यदि द्विमात्रेण द्विमात्रे वाचिके यस्य तेन परब्रह्मणा मनसि चित्ते सम्पत्स्यते सङ्गतो भवति। मात्राद्वयमध्ये ये केऽपि द्वेमात्रे चिन्तयतीत्यर्थः। स उपासकः यजुर्भिः यजुर्वेदा-भिमानिभिर्देवैः अन्तरिक्षं अन्तरिक्षस्थं सोमलोकमुन्नीयते । नीतश्च सः सोमलोके विभूतिमैश्वर्यमनुभूय पुनरावर्तते । ततश्च्यवत इत्यर्थः। योऽधिकारी एवं पुरुषं त्रिमात्रेण तिस्रः मात्राः वाचकाः यस्येत्योमित्योङ्कारेण अक्षरेण वर्णेन तिस्रो मात्रा अपि सम्यग्विदित्वेत्यर्थः। परं पुरुषं सर्वोत्कृष्टं भगवन्तमभिध्यायीत चिन्तयेत्। सः ध्याता तेजसि सूर्ये तेजोरूपे सूर्ये सम्पन्नः सङ्गतः । तं प्राप्त इत्यर्थः। यथा पादोदरः उदरमेव पादौ यस्य सः । अग्न्याहितत्वात्, छान्दसत्वाद्वा । पादोदरः सर्पः त्वचा जीर्णया विनिर्मुच्यते मुक्तो भवति । एवं ह वै एवं प्रकारेणैव स उपासकः पाप्मना प्रारब्धकर्मणा विनिर्मुक्तो भवति । स मुक्तपापो ध्यानी सामभिः अभिमानिदेवैः ब्रह्मलोकं सत्याख्यं चतुर्मुखलोकं, उन्नीयते । स अर्चकः । एतस्मा-ज्जीवघनात् सकलजीवोत्तमात् सत्यलोकपतेः चतुर्मुखात् । तदुपदेशेनेति भावः। परात्परं श्रीतत्त्वादुत्तमं पुरि सकलशरीरे शयं स्थितं पुरुषम् । सकलगुणपूर्णं वासुदेवाख्यमीक्षते । अभिवृद्धज्ञानो भवति । मुक्तो भवतीत्यर्थः । प्रणवोपासकः परापरब्रह्मज्ञानेन अपरं ब्रह्म प्राप्य परं ब्रह्म प्राप्नोतीति 'कार्यं बादरिः' 'परं जैमिनिः' इति सूत्रद्वयोक्तप्रतीकालम्बनाप्रतीकालम्बनरूपव्यवस्थया बोध्यमिति भावः ।

अत एव–

प्रणवेन हरिं ध्यायन् ब्रह्मलोकं समेत्य च ।
ज्ञानं चतुर्मुखात्प्राप्य मुच्यते नात्र संशयः ॥
इत्याहुः भाष्यकाराः ॥ ५-२ ॥

## उपनिषत्

**तदेतौ श्लोकौ भवतः।**

**तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता**
**अन्योन्यसक्ता अनविप्रयुक्ताः।**
**क्रियासु बाह्याभ्यन्तरमध्यमासु**
**सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥**
**ऋग्भिरेतं यजुर्भिरन्तरिक्षं**
**सामभिर्यत् तत् कवयो वेदयन्ते।**
**तमोङ्कारेणैवायनेनान्वेति विद्वान्**
**यत्तच्छान्तमजरममृतमभयं परञ्च ॥ इति ॥ ३ ॥**

**टीका**—तदेतौ श्लोकौ भवतः। तिस्रोऽकाराद्याः प्रणवमात्राः अनविप्रयुक्ताः विप्रयुक्ताः अन्योन्यमसम्बद्धाः एकैकशो ज्ञाताः। विप्रयुक्ता न भवन्तीत्यविप्रयुक्ताः न अविप्रयुक्ताः अनविप्रयुक्ताः। विप्रयुक्ता एवेत्यर्थः। अन्योन्यसक्ताः परस्परं युग्मतया सम्बद्धाः। ये के वा द्वे द्वे ज्ञात्वेति यावत्। बाह्याभ्यन्तरमध्यमासु तारमन्द्रमध्यमरूपासूच्चारणक्रियासु प्रयुक्ताः उच्चारिताः मृत्युमत्यो भवन्ति। एकैकामेव वा द्वे वा ये केचित्सम्यग्ज्ञात्वा शेषमज्ञात्वोच्चैर्वा नीचैर्वा मध्यममानेन वोच्चारिताः प्रणवमात्राः नापुनरावृत्तिफलं प्रापयन्तीत्यर्थः। तासु सम्यक्प्रयुक्तासु तिस्रोऽपि सम्यग्ज्ञात्वोच्चारितासु सतीषु, ज्ञो ज्ञानी न कम्पते, न च्यवते अपुनरावृत्तिफलं प्राप्नोतीति।

एतदर्थविवरणार्थो द्वितीयो मन्त्रः। एकमात्राज्ञानपूर्वकोपासनादृग्भिरेतं पृथिव्याख्यं मानुषं लोकमुपासको नीयते। द्विमात्राज्ञानपूर्वकोपासनाद्यजुर्भिरन्तरिक्षं

तत्रत्यं सोमलोकं नीयते। यत्तत्कवयो ज्ञानिनो वेदयन्ते जानन्ति ज्ञापयन्ति वा परात्परं ब्रह्म यत्तच्छान्तं सुखोत्कर्षसीमाभूमिरूपमजरं जरादिवर्जितं परात्परं सर्वोत्तमं तं तद् ब्रह्मोङ्कारेणैवायनेन । अयनसाधनमोङ्कारं मात्रात्रयात्मकं सम्यग्ज्ञात्वेति यावत्, सामभिरन्वेतीति॥ ३ ॥

**वामन**–अत्रोदाहृतश्लोकयोरयमर्थः। ओङ्कारस्य श्रूयमाणा अकारादयस्तिस्रो मात्रा विशेषेणैव ओमित्यन्योन्यसक्ततया पुरुषेण प्रयुक्ततया मृत्युमत्यो भवन्ति। मृत्युमत्यायतीत्युपासकमिति मृत्युमत्य उच्यन्ते। किञ्च अत्र पुनः प्रथमा त्वेका पुनः प्रथमा द्वितीये च द्वे अन्योन्यसक्ते इति पक्षद्वयविवक्षायामेतास्तिस्रो मृत्युमत्यः सांसारिकफलदा भवन्ति। भुवि दिवि चेति शेषः। अनः प्राणघोषः तेन विशेषतः प्रयुक्ताः। बाह्यक्रियाप्रतिमादौ भगवदुपासनम् । आन्तरा आत्मनि साक्षिणा ब्रह्मदृष्टिः । मध्यमा मनसा तत्प्रतिबिम्बादिदृष्टिः । आसु तिसृष्वपि क्रियासु विष्णौ सम्यक् प्रयुक्तासु सतीषु प्राज्ञो न कम्पते सुस्थितो भवति। ऋग्भिरेतं भूलोकमन्वेत्येकमात्रोपासकः । यजुर्भिरन्तरिक्षं सोमलोकं द्विमात्रो-पासकः । सामभिस्तु ज्ञानिभिर्वेदितव्यं ब्रह्मलोकमन्वेति त्रिमात्रोपासकः॥ ५-३ ॥

**प्रकाशिका**–'अन्योन्यसक्ता' इत्यत्र अन्योन्यसक्तत्वं नामान्यस्याक्षरस्यान्येन सक्तत्वम्। तच्च द्वयोरेव सम्भवतीति भावेनाऽऽह टीकाकारः– **युग्मतया सम्बद्धा इति**॥ मध्यमाक्षरस्योत्तरवर्णयोगेऽपि द्वित्वं भवति। अत ये के वा द्वे द्वे ज्ञात्वा इत्युक्तम्। 'बाह्याभ्यन्तरमध्यमासु' इत्यत्र सम्यक् ताल्वोष्ठपुटव्यापारेणोच्चारणक्रिया बाह्येत्युच्यते। ईषत्ताल्वोष्ठपुटव्यापारेण क्रियमाणा मध्यमेत्युच्यते। मनसैवोच्चार्यमाणाऽऽभ्यन्तरेत्युच्यत इत्यर्थः॥ ३ ॥

**श्रीनिवास**– ॥ **विप्रयुक्ता इति** ॥ प्रकर्षेण सम्बद्धाः प्रयुक्ताः तथा न भवन्तीति विप्रयुक्ताः अन्योन्यसम्बद्धा इत्यर्थः। उच्चारणक्रियासु तद्दृष्टक्रियासु प्रयुक्ताः सम्बद्धाः तस्याभिप्रायकथनम्– **उच्चारिता इति**।। मध्यममानेनेति यावत् ॥

**छलारी**–नञ्द्वयं चेत्याश्रित्याह– **विप्रयुक्ता इति** ।। अक्षरार्थमुक्त्वाभिप्रायमाह– **एकैकामेवेति** ।। उपासको नीयत इति मन्त्रे एकमात्रोपासकस्य द्विमात्रोपासकस्य पृथिव्यन्तरिक्षलोकप्राप्तौ सर्वथा स्वातन्त्र्याभावज्ञापनार्थं टीकाकारैरन्वेतीति मन्त्रोक्तपदान्वयसम्भवेऽपि नीयत इति प्रयोगः कर्मणि कृतः। ऋगाद्यभिमानि-देवतानामेव तत्र लोकप्रापणे ईश्वरदत्तस्वातन्त्र्यमनेन ज्ञापितं भवति। सम्पूर्णप्रणवो-पासकस्य सामभिः सामाभिमानिदेवतासाहित्येनान्वेतीति ब्रह्मप्राप्तौ कर्तृत्वोक्त्या ईश्वरदत्तं किञ्चित्स्वातन्त्र्यमस्तीति सूचितं भवतीति वेदयन्त इति। ज्ञानार्थकविदेः चुरादित्वाण्णिजन्तस्य व्याख्यानं जानन्तीति। तस्माद्धेतुमण्णिच्वाप्यङ्गीकृत्य व्याख्यानं ज्ञापयन्तीति।। **सुखोत्कर्षसीमाभूमिरूपमिति**। शं सुखमिति सुखनामसु पाठाच्छंशब्दस्य सुखवाचित्वान्मुख्यामुख्यन्यायेन तस्योत्कृष्ट-वाचित्वात्। अन्तशब्दस्य मर्यादार्थकत्वादिति भावः।। ५-३ ।।

**ताम्रपर्णीय–ये के द्वे वेति** ।। अकारोकारलक्षणे उकारमकारलक्षणे। अकार-मकारलक्षणे। अनियते ये के वा द्वे मात्र इत्यर्थः।। **द्वे वा ये केचिदिति**।। उक्तद्विकानां मध्ये कमपि द्विकमित्यर्थः। तिस्रो मात्रा इत्यस्य प्राचीनटीकायामयमर्थः। ओङ्कारस्य श्रूयमाणाकारदयस्तिस्रो मात्रा विशेषेणैवोमित्यन्योन्यसक्ततया पुरुषेण प्रयुक्ता मृत्युमत्यो भवन्ति। मृत्युमत्यायति उपासक इति मृत्युमत्यः। किञ्चात्र पुनः प्रथममेकां पुनः प्रथमाद्वितीये च द्वे अन्योन्यसक्ते इति पक्षद्वयविवक्षायामेतास्तिस्रः मृत्युमत्यः सांसारिकफलदा भवन्ति। भुवि दिवि चेति शेषः। अनः प्राणघोषः तेन विशेषतः प्रयुक्ताः बाह्यक्रियाप्रतिमादौ भगवदुपासनम्। आन्तरक्रियासाक्षिणां ब्रह्मदृष्टिः । मध्यमा मानसा तत्प्रतिबिम्बदृष्टिः। आसु तिसृष्वपि क्रियासु विष्णौ सम्यक्प्रयुक्तासु सतीषु प्राज्ञो न कम्पते सुस्थिरो भवतीति।। ५-३ ।।

**मङ्गालीय**–अनविप्रयुक्ता इत्यत्र एको विशब्दो निषेधार्थकः। नञ्द्वयं चास्ती-त्यभिप्रेत्य विप्रयुक्ता इत्यादिनाक्षरार्थमुक्त्वाभिप्रायमाह– **एकैकामेवेति** ।। **उपासको नीयत इति** ।। मन्त्रे एकमात्रद्विमात्रोपासकयोः पृथिव्यन्तरिक्षलोकप्राप्तौ सर्वथा स्वातन्त्र्याभावज्ञापनार्थं टीकाकारैरन्वेतीति मन्त्रोक्त-

पदान्वयसम्भवेऽपि नीयत इति कर्मणि प्रयोगः कृतः। ऋगाद्यभिमानिदेवानामेव तत्तल्लोकप्रापणे ईश्वरदत्तं किञ्चित्स्वातन्त्र्यमस्तीति सूचयितुञ्च। ज्ञानार्थकस्य विदेश्चुरादिणिजन्तस्य व्याख्यानम्– **जानन्तीति** ॥ तस्माद्धेतुमति णिचमङ्गी-कृत्य व्याख्यानम्– **ज्ञापयन्तीति** ॥ **शान्तं सुखोत्कर्षसीमभूमिरूपमिति** ॥ शं सुखमिति सुखनामसु शंशब्दस्य पाठात्सुखवाचित्वान्मुख्यामुख्यन्यायेन तस्योत्कृष्टपरत्वादन्तशब्दस्य मर्यादार्थकत्वादिति भावः॥ ५-३ ॥

**खण्डार्थ–**तत्रोक्तेऽर्थे एतौ वक्ष्यमाणौ श्लोकौ संमतित्वेन भवतः। तिस्रोऽ-काराद्याः प्रणवमात्राः अनविप्रयुक्ता अन्योन्यमसम्बद्धाः एकैकशो येन ज्ञाताः, विप्रयुक्ता न भवन्तीत्यविप्रयुक्ताः न अविप्रयुक्ताः अनविप्रयुक्ताः विप्रयुक्ता एवेत्यर्थः, अन्योन्यसक्ताः परस्परं युग्मतया सम्बद्धाः ये के वा, द्वे द्वे ज्ञात्वेति यावत्, बाह्याभ्यन्तरमध्यमासु तारमन्द्रमध्यरूपासु उच्चारणक्रियसु प्रयुक्ताः उच्चारिता मृत्युमत्यो भवन्ति। एकैकामेव द्वे द्वे वा ये केचित् सम्यज्ज्ञात्वा शेषमज्ञात्वा उच्चैर्वा नीचैर्वा मध्यमानेन वा उच्चारिताः प्रणवमात्राः नापुनरा-वृत्तिफलं प्रापयन्तीत्यर्थः। तासु सम्यक् प्रयुक्तासु तिस्रोऽपि सम्यज्ज्ञात्वोच्चारितासु सतीषु ज्ञो ज्ञानी न कम्पते, न च्यवते, न पुनरावृत्तिफलं प्राप्नोतीति। एतदर्थविवरणार्थो द्वितीयो मन्त्रः। एकमात्राज्ञानपूर्वकोपासनात् ऋग्भिरेनं पृथिव्याख्यं मानुषं लोकम् उपासको नीयते। द्विमात्राज्ञानपूर्वकोपासना-द्यजुर्भिरन्तरिक्षं तत्रस्थसोमलोकं नीयते यत्तत्कवयो ज्ञानिनो वेदयन्ते जानन्ति ज्ञापयन्ति च। परात्परं ब्रह्म यत्तच्छान्तं सुखोत्कर्षसीमाभूमिरूपमजरं जरादिवर्जितं परं सर्वोत्तमं ब्रह्म ओङ्कारेणैवायनेन, अयनसाधनमोङ्कारं मात्रात्रयात्मकं सम्यज्ज्ञात्वा चेति यावत्, सामभिरन्वेतीति॥ ५-३॥

**नर–**तदेतौ श्लोकौ भवतः–तिस्रो मात्राः प्रणवस्याकारादिमात्राः अनविप्रयुक्ताः विप्रयुक्ताः न भवन्त्यविप्रयुक्ताः अविप्रयुक्ता न भवन्ती-त्यनविप्रयुक्ताः अन्योन्यं सम्बद्धा एव एकैकशो ज्ञाताः तथा अन्योन्यं संयुक्ताः परस्परं युग्मतया सम्बद्धाः एवैकैकशो ज्ञात्वा प्रयुक्ताः बाह्याभ्यन्तरमध्यमासु तातरमन्द्र मध्यमरूपासु उच्चारणक्रियासु प्रयुक्ता उच्चारिता मृत्युमत्यो भवन्ति।

अपुनरावृत्तिलक्षणं फलं प्राप्नोति। एतदेव विवृणोति– **ऋग्भिरिति** ॥ एकमात्रज्ञानपूर्वकादुपासनात् । ऋग्भिरेतं पृथिव्याख्यं मानुषं लोकं उपासको नीयते। द्विमात्रज्ञानपूर्वकादुपासनाद्यजुर्भिरन्तरिक्षं तत्स्थं सोमलोकमुन्नीयते। ओङ्कारेणायनेन मात्रात्रयात्मकोङ्कारार्थज्ञानपूर्वकं अपुनरावृत्तिलोकगमनसाधनेनोङ्कारेण तं वासुदेवं विद्वानुपासकः कवयो यत् तत् प्रसिद्धं ब्रह्म वेदयन्ते जानते ज्ञापयन्ति च। यच्च ब्रह्म शान्तं सुखोत्कर्षसीमाभूमिरूपम् । अजरं जरादिवर्जितम् । परात्परं उत्तमोत्तमम् । अभयं भयनिवारकम् । तद् ब्रह्म सामभिरन्वेति॥ ५-४ ॥

**उदय**–उक्तार्थे श्रुत्यन्तरसम्मतिमाह— **तदेतौ श्लोकौ भवत इति** ॥ तत्र एतौ मन्त्रौ प्रमाणत्वेन भवत इत्यर्थः । तिस्रो मात्रा अकाराद्याः प्रणवमात्राः अनविप्रयुक्ताः न विप्रयुक्ता वियोगिन्यो न भवन्तीति अविप्रयुक्ताः न अविप्रयुक्ताः अनविप्रयुक्ताः परस्परमसम्बद्धाः एकैकशो ज्ञाताः । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायाद्वियुक्तत्वेनैव ज्ञाता इत्यर्थः । अन्योन्यसक्ताः परस्परं युग्मतया सम्बद्धाः । बाह्याभ्यन्तरमध्यमासु तारमन्द्रमध्यमरूपासु क्रियासु उच्चारणरूपासु प्रयुक्ताः एतत्स्वस्वरैरुच्चारिताः । एका मात्रा द्वे वा मात्रे उच्चारिते । मृत्युमत्यः मृत्युलोकप्रदाः । भवन्तीति शेषः । अपुनरावृत्तिरूपं फलं न ददातीत्यर्थः । सम्यक्प्रयुक्तासु तिसृषु मात्रासु सम्यज्ज्ञात्वा उच्चारितासु सतीषु ज्ञः ज्ञानी न कम्पते न च्यवते मोक्षाख्यं फलं प्राप्नोतीति भावः । उक्तार्थं विवृणोति– **ऋग्भिरिति** ॥ एकमात्रज्ञानपूर्वकोपासनात् । ऋग्भिः ऋगभिमानिदेवैः । एनं पृथिव्याख्यलोकम् । उपासकः नीयते । द्विमात्राज्ञानेन यजुर्भिः यजुरभिमानिभिः । अन्तरिक्षं सोमलोकमुन्नीयते। यत्तत् परब्रह्मरूपं कवयः ज्ञानिनः वेदयन्ते जानन्ति । तं परमात्मानं विद्वान् मात्रात्रयोपासकः ओङ्कारेणायनेन ओङ्काराख्येन गमनसाधनेन सामभिः सामाभिमानिभिः देवैः अन्वेति युक्तो भवति ॥ कीदृशं तद् ब्रह्मेत्यतो विशिनष्टि– **यत्तच्छान्तमिति** ॥ यत् उक्तं ब्रह्म तत्। शान्तं सर्वोत्कृष्टम् । अजरं जरावर्जितम्। परं निर्दोषमिति यावत्। अमृतं नित्यमुक्तं मुक्ताश्रयं वा । अभयं अभयदायकम्। स्वभक्तान् प्रतीति शेषः । परात्परं श्रीतत्त्वादप्युत्तमम् । तस्मात् प्रणवेन सर्वदा मुमुक्षुणा भगवान्नारायणः सदा ध्येय इति स्थितम्।। ५-३ ॥

॥ इति पञ्चमः प्रश्नः ॥ ५ ॥

# अथ षष्ठः प्रश्नः

## उपनिषत्

**अथ हैनं सुकेशा भारद्वाजः पप्रच्छ। भगवन् हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैनं प्रश्नमपृच्छत। षोडशकलं भारद्वाज पुरुषं वेत्थ तं मह्यं ब्रवीहीति। तमहं कुमारमब्रुवं नाहमिमं वेद। यद्यहमिममवेदिष्यं कथं ते नावक्ष्यमिति। समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुम्। स तूष्णीं रथमारुह्य प्रवव्राज। तं त्वा पृच्छामि क्वासौ पुरुष इति॥ १॥**

**टीका**–॥ **अथ हैनं सुकेशाः** ॥ प्राक्प्राणादीनां शरीरिणश्च जाग्रत्स्वप्नसुषुप्तिषु परमेश्वराधीनत्वमभिहितम्। नतु मोक्षे। अतः सिंहावलोकन्यायेन मुक्तावपि तेषां भगवदधीनत्वप्रदर्शनार्थं उत्तरो ग्रन्थः। प्रष्टव्यार्थेऽतिशयितबुभुत्सां स्वस्य ज्ञापयितुं पूर्ववृत्तान्तकथनम्। भगवन्, हिरण्यनाभो नामतः कोसलायां भवः कौसल्यो कस्यचिद्राज्ञः पुत्रो मामुपेत्य प्राप्य एनं वक्ष्यमाणं प्रश्नं प्रष्टव्यमर्थमपृच्छतापृच्छत्। हे भारद्वाज, षोडशकलो नाम कश्चित्पुरुषोऽस्तीति सामान्यतो मया श्रुतम्। तं षोडशकलं पुरुषं त्वं वेत्थ? विशेषतो जानासि किम्? कोऽसौ पुरुषः? क्व चाऽऽस्ते? का नाम षोडशकलाः? कथञ्च तस्य षोडशकलत्वम्? इत्यादि। यदिच जानासि तर्हि मह्यं ब्रूहीति। एवं पृष्टवन्तं तं कुमारं पूर्ववयसि वर्तमानं हिरण्यनाभमहमब्रुवम्। अहमिमं त्वया पृष्टं षोडशकलं पुरुषं न वेद, न जानामि। कुतः? यद्यहमिमं पुरुषमवेदिष्यं विदितवानभविष्यं, तर्हि कथं कस्माद्योग्याय ते तुभ्यं नावक्ष्यमिति। अतो नाहमिमं वेद। किञ्च यः पुरुषोऽनृतमभिवदति स एषः समूलः परिशुष्यति वै। सर्वात्मना गतसारो भवति। तेनार्जितं समस्तमपि सुकृतं नश्यतीति यावत्। यत एवं तस्माज्ज्ञात्वाऽपि न जानामीत्यनृतं वक्तुं दोषज्ञोऽहं नार्हामि नार्हो भवामीत्येवमनेकप्रकारतः प्रत्यायितः स लज्जया तूष्णीं किमप्यवदन् रथमारुह्य

प्रवव्राज। यथाऽऽगतं तथा गतवान्। एवं तदाप्रभृति ज्ञातव्यतया मम हृदि वर्तमानं तं पुरुषं त्वा त्वां पृच्छामि? किमिति? असौ षोडशकलः पुरुषः क्वाऽऽस्ते? कश्चासौ षोडशकलः? काश्च ताः कलाः? कथं चासौ षोडशकलः पुरुषः? इत्यादीति॥ १ ॥

**प्रकाशिका**–'षोडशकलं पुरुषं वेत्थ' इत्यत्र प्राणाद्याः षोडशसङ्ख्याकाः कलाः यस्मात्तं षोडशकलमित्यर्थः॥ १ ॥

**श्रीनिवास**– प्रत्यायितः विश्वासितः।

**छलारी**–॥ **अथ हैनं सुकेशा भारद्वाजः** ॥ **शरीरिणश्चेति** ॥ शरीराभिमानिनो जीवस्येत्यर्थः। **परमेश्वराधीनत्वमभिहितमिति**। चतुर्थप्रश्न इति शेषः। ननु प्रश्नमात्रं विहाय पूर्ववृत्तान्तकथनस्य कुत्रोपयोग इत्यत आह– **प्रष्टव्यार्थ इति** ॥ बुभुत्सां बोद्धुमिच्छाम्। कोसलायां तन्नाम नगर्यां अपृच्छतापृच्छदिति। पृच्छधातोः परस्मैपदित्वाच्छ्रुतौ व्यत्ययेनात्मनेपदमिति भावः॥ **विशेषतो जानसीति** ॥ परमात्मज्ञानोपयोगिषोडशकलासहितं पुरुषम्। नतु लिङ्गशरीरान्तर्भूतषोडश-कलामात्रसहितमित्याशयः। मन्त्राणां लिङ्गशरीरानन्तर्भावात्॥ **कोऽसौ पुरुष इत्यादि**॥ यद्यपि सामान्यत एव प्रश्नः कृतस्तथापि प्रतिवचनानुसारेणेदं प्रश्नविवरणं ज्ञेयम्॥ **न वेद जानामीति**॥ 'विदो लटो वा' इति सूत्रेण विद ज्ञान इति धातोः लिटो मिपः णलादेश इति भावः॥ **नार्हसि नार्हो भवामीति**।। तथाच अर्ह इति सूत्रेण योग्यार्थनिपातार्हशब्दादाचारर्थे क्विपि धातुत्वात् पुनर्लटि रूपमाश्रित्य अर्हवदाचरामीत्यर्थो मनसि निधायार्हो भवामीति प्रतिपदमुक्तमिति भावः। प्रत्यायितः विश्वासं सम्प्रापितः॥ ६-१ ॥

**ताम्रपर्णीय**–ननु मुक्त्यवस्थायाः तदधीनत्वप्रसङ्गात्सत्यकामप्रश्नाऽनन्तरं वक्तव्यं, व्यवधानं कुतः? इत्यत उक्तम्– **सिंहेति**॥ श्रेष्ठत्वादस्य प्रमेयस्य पश्चान्निरूपणमिति ज्ञापनाय सिंहावलोकनन्यायेनोपसंहारे निरूपणमिति भावः॥ **लज्जित इति**॥ मादृश आगत्या अनभिज्ञं पृष्ठवानिति वा । मन्निमित्तं ब्राह्मणस्य स्वाज्ञानाविष्करणेन चित्तखेदो जात इति वा लज्जित इत्यर्थः ॥ **इत्यादीति**॥

अत्रादिपदेन किमेताः समाः उतासमा इत्यादेः संग्रहः॥ ६-१ ॥

**मङ्गालीय–**॥ **अथ हैनं सुकेशाः** ॥ **शरीरिणश्चेति** ॥ शरीराभिमानिनो जीवस्येत्यर्थः॥ **परमेश्वराधीनत्वमभिहितमिति** ॥ चतुर्थप्रश्न इति शेषः॥ **सिंहावलोकनन्यायेनेति** ॥ अनेनास्य प्रश्नस्य चतुर्थप्रश्नानन्तर्यमेव स्यादिति शङ्का निरस्ता वेदितव्या। ननु प्रश्नमात्रं विहाय पूर्ववृत्तान्तकथनस्य क्वोपयोग इत्यत आह– **प्रष्टव्यार्थ इति** ॥ बुभुत्सां बोद्धुममिच्छाम्। कोसलायां तन्नामनगर्याम् ॥ **अपृच्छत अपृच्छदिति** ॥ प्रच्छधातोः परस्मैपदित्वात् श्रुतौ व्यत्ययेनात्मनेपदप्रयोग इति भावः॥ **षोडशकलमिति** ॥ परमात्मज्ञानोपयोगिषोडशकलासहितम्। ननु लिङ्गशरीरान्तर्भूतषोडशकलामात्रसहितमित्याशयः। मन्त्राणां लिङ्गशरीरानन्तर्भावात्॥ **कोऽसौ पुरुष इत्यादि** ॥ यद्यपि सामान्यत एव प्रश्नः कृतः। तथापि प्रतिवचनानुसारेणेदं प्रश्नविवरणम्। प्रत्यायितः विश्वासं प्रापितः॥ **पुरुषमिति** ॥ परमात्मानमित्यर्थः॥ ६-१ ॥

**गूढकर्तृक–**तर्हि सत्यकामप्रश्नात्पूर्वमेवायं प्रश्नः स्यादित्यत आह– **सिंहेति** ॥ **कश्चासाविति** ॥ कोऽसौ पुरुष इत्युपक्रमानुसारेणेयमुक्तिरिति बोध्यम्। इत्यादीत्यादिपदेन किमेभ्यः समा उतासमा इत्यादेः संग्रहः॥ ६-१॥

**खण्डार्थ–**॥ **अथ हैनं सुकेशा** ॥ प्राक्प्राणादीनां शरीरिणश्च जाग्रत्स्वप्नसुषुप्तिषु परमेश्वराधीनत्वमभिहितं, न तु मोक्षे । अतः सिंहावलोकनन्यायेन मुक्तावपि तेषां भगवदधीनत्वप्रकाशनार्थमुत्तरो ग्रन्थः। प्रष्टव्यार्थेऽतिशयितबुभुत्सां स्वस्य ज्ञापयितुं पूर्ववृत्तान्तकथनम्। भगवन्, हिरण्यनाभो नामतः, कोसलायां भवः कौसल्यः कस्यचिद्राज्ञः पुत्रः मामुपेत्य प्राप्यैनं वक्ष्यमाणं प्रश्नं प्रष्टव्यार्थमपृच्छत। हे भारद्वाज षोडशकलो नाम कश्चित् पुरुषोऽस्तीति सामान्यतो मया श्रुतम्। तं षोडशकलं पुरुषं त्वं वेत्थ विशेषतो जानासि किम्? कोऽसौ पुरुषः? क्व चाऽस्ते? का नाम षोडशकलाः? कथञ्चैतस्य षोडशकलत्वमित्यादि। यदि च जानासि तर्हि मह्यं ब्रूहीति। एवं पृष्टवन्तं कुमारं पूर्ववयसि वर्तमानं हिरण्यनाभं अहमब्रुवम्। अहमिमं त्वया पृष्टं षोडशकलं पुरुषं न वेद न जानामि।

कुतः? यद्यहमिमं पुरुषमवेदिष्यं विदितवानभविष्यं तर्हि कथं कस्माद्योग्याय ते तुभ्यं नावक्ष्यमित्यतो नाहमिमं वेद।

किञ्च, यः पुरुषः अनृतमभिवदति स एष समूलः परिशुष्यति वै सर्वात्मना गतसारो भवति। तेनार्जितं समस्तमपि सुकृतं नश्यतीति यावत्। यत एवं तस्माज्ज्ञात्वाऽपि न जानामीत्यनृतं वक्तुं दोषज्ञोऽहं नार्हामि नार्हो भवामीत्येव-मनेकप्रकारेण प्रत्यायितः स लज्जया तूर्ष्णीं किमप्यवदन् रथमारुह्य प्रवव्राज यथागतः तथा गतवान्। एवं तदाप्रभृति ज्ञातव्यतया मम हृदि वर्तमानं पुरुषं त्वां पृच्छामि । किमिति? असौ षोडशकलः पुरुषः क्वाऽस्ते? काश्च ताः कलाः? कथञ्चासौ षोडशकलः? इत्यादि॥ ६-१॥

**नर**–षष्ठप्रश्नप्रतिवचनमारभते– **अथेति** ॥ प्राक् प्राणादीनां जाग्रदा-द्यवस्थासु भगवदधीनत्वमुक्तम्। इदानीं मोक्षेऽपि तेषां भगवदधीनत्वं सिंहाव-लोकनन्यायेनाह– **भगवन्निति** ॥ प्रष्टव्यार्थे अतिशयितबुभुत्सां स्वस्य ज्ञापयितुं पूर्ववृत्तान्तकथनम्। हे भगवन् कोसलायां भवः कौसल्यः हिरण्यनाभो नामतः कश्चिद्राजपुत्रो मामुपेत्यैनं वक्ष्यमाणं प्रश्नं प्रष्टव्यार्थमपृच्छत्। हे भरद्वाज षोडशकलो नाम कश्चित्पुरुषोऽस्तीति सामान्यतो मया श्रुतं तं षोडशकलं पुरुषं वेत्थ विशेषतो जानासि किम्? । कोऽसौ पुरुषः? क्व चास्ति? का नाम षोडश-कलाः? कथं तस्य षोडशकलात्वम्? इत्यादि। यदि जानासि तर्हि मह्यं ब्रूहीति। एवं पृष्टवन्तं कुमारं पूर्ववयसि विद्यमानं हिरण्यनाभमहमब्रुवम्। किमिति? अहमिमं त्वया पृष्टं षोडशकलं पुरुषं न वेद न जानामि। कुतो यद्यहमिमं पुरुषमवेदिषं विदितवानभविष्यम्। तर्हि कथं कस्माद्योग्याय ते तुभ्यं न वक्ष्यामीत्यतो नाहमिमं वेद । किञ्च यः पुरुषोऽनृतमभिवदति स एषः समूलः परिशुष्यति वै सर्वात्मना गतसारो भवति। तेनार्जितं समस्तमपि सुकृतं नश्यतीति यावत्। अत एव तस्माज्ज्ञात्वाऽपि न जानामीत्यनृतं वक्तुं दोषज्ञोऽहं नार्हामि। इत्येवमनेकप्रकारतः प्रत्यायितः स लज्जया तूर्ष्णीं किमप्यवदन् रथमारुह्य प्रवव्राज यथागतः तथा गतवान्। एवं तदाप्रभृति ज्ञातव्यतया मम हृदि वर्तमानं तं पुरुषं त्वां पृच्छामि। स षोडशकलः पुरुषः क्वास्ति? कश्चासौ पुरुषः? इति ॥ ६-१ ॥

**उदय**–एवं प्राणादीनां सर्वेषां जाग्रत्स्वप्नसुषुप्तिषु भगवदधीनत्वं प्रतिपाद्य मोक्षेऽपि परमात्माधीनत्वं प्रतिपादयति वेदपुरुषः– **अथ हैनमिति** ॥ अथानन्तरं ह सोत्कर्षम् । सुकेशा भारद्वाजः एनं पप्रच्छ प्रश्नं कृतवान्। प्रष्टव्यार्थेऽतिशयित-बुभुत्सां स्वस्य दर्शयिष्यन् पूर्ववृत्तान्तानुवादपूर्वकं पृच्छति– **भगवन्निति** ॥ हे भगवन् विद्यैश्वर्यवन् गुरो । हिरण्यनाभः कौसल्यां कोसलायां भवः । हिरण्यनाभ-नामको कस्यचिद्राज्ञः पुत्रः मामुपेत्य प्राप्यैनं वक्ष्यमाणं प्रश्नं प्रष्टव्यार्थमपृच्छत्। किमित्यत आह– हे भारद्वाज षोडशकलो षोडश कलाः अवयवाः यस्येति नाम कश्चित्पुरुषोऽस्तीति सामान्यतो मया श्रुतम्। तं पुरुषं वेत्थ विशेषतो जानासि? कोऽसौ पुरुषः? क्व चास्ते? का नाम षोडशकलाः? इत्यादि जानासि किमिति। यदि त्वं जानासि तं पुरुषं तर्हि मह्यं ब्रूहि इत्येवं पृष्टं कुमारं पूर्ववयसं हिरण्यनाभमब्रुवम् । किमिति। इमं त्वया पृष्टं षोडशकलं पुरुषं न वेद न जानामि। यद्यहमिमं पुरुषमवेदिष्यं विदितवानभविष्यम्। तर्हि कथं कस्मात् ते योग्याय तुभ्यं नावक्ष्यमिति। मिथ्या ब्रवीमीति शङ्कां निरस्यति– **समूल इति** ॥ यः पुरुषः अनृतं विप्रलम्भरूपं वचनमभिवदति वक्ति। स एषोऽनृतवक्ता पुरुषः समूलः मूलेन सहितः परिशुष्यति शुष्को भवति। तेनार्जितं समस्तमपि पुण्यं नश्यतीत्यर्थः। तस्माद-नृतभाषणे दोषाणां मया ज्ञातत्वादनृतं ज्ञात्वापि न जानामीत्येवंरूपं वक्तुमहं नार्हामि नार्हो भवामीति मयोक्ते, स हिरण्यनाभः तूष्णीं किमप्यवदन् रथमारुह्य प्रव्राज यथागतस्तथा गतवान्। तदाप्रभृति ज्ञातव्यतया हृदि वर्तमानं तं पुरुषं त्वा पृच्छामि। किमिति? असौ षोडशकलः पुरुषः क्व? आस्ते इति शेषः। कास्ताः षोडशकलाः? पुरुषश्च कथं षोडशकलः? इति त्वां पृच्छामीति भावः॥ ६-१ ॥

## उपनिषत्

**तस्मै स होवाच। इहैवान्तःशरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति। स ईक्षाञ्चक्रे कस्मिन् न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति। स प्राणमसृजत प्राणाच्छ्रद्धां**

**खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु नाम च॥ २ ॥**

भाष्यम्

'कर्मेति पुष्करः प्रोक्त उषा नामाभिमानिनी।
लोकाभिमानी पर्जन्यः स्वाहा वै मन्त्रदेवता॥
तपोऽभिमानी वह्निश्च वरुणो वीर्यदेवता॥
अन्नस्य देवता सोमो मनोनामाऽनिरुद्धकः।
इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिनः॥
रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः।
श्रद्धेति वायोः पत्नी स्यात्सर्वेषां प्रभवाप्याया॥
तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः॥
तस्यापीशः कारणश्च वासुदेवः परोऽव्ययः॥
न तस्य सदृशः कश्चित्कुत एवोत्तमो भवेत्।
तं ज्ञात्वा मुच्यते जन्तुर्विदित्वैवं परात्परम्'॥ इति तत्त्वविवेके॥
'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी॥'
इति मन्त्रोक्त एव क्रमः। न हीन्द्रियेभ्यो मनः पश्चात्।
'तत्प्राक् श्रुतेश्च'इति भगवद्वचनम्॥
'विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः।
तस्मादिन्द्रस्त्विन्द्रियात्मा तस्य सोमोऽन्नदेवता॥
ततश्च वरुणस्सृष्टस्तस्मादग्निस्ततोऽवरः।
आकाशदेवता विघ्नस्ततो वायोः सुतो मरुत्॥
तस्मादग्निः पावकाख्यः प्रथमोऽग्रेः सुतस्ततः।
ततः पर्जन्य उद्भूतः स्वाहाऽतो मन्त्रदेवता॥

**उदात्मको बुधस्तस्या उषा नामात्मिका ततः।**
**ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः॥**
**क्रमात्प्रत्यवरा ह्येते मुक्ताः सर्वगुणैरपि।**
**नित्यमुक्तस्ततो विष्णुः प्राणादप्युत्तमोत्तमः॥' इति च ॥ २ ॥**

**टीका**–एवं पृष्टवते तस्मै स होवाच। वक्ष्यमाणलक्षणैर्विष्णुरेवासौ पुरुष इति सेत्स्यतीत्यभिप्रायेण शिष्टस्य परिहार उच्यते– **इहैवेति**॥ हे सोम्य, यस्मिन् पुरुषे एता वक्ष्यमाणाः प्राणाद्याः षोडशसङ्ख्याकाः कलाः सजीवस्य शरीरस्य भागाः प्रभवन्ति। यस्मादुत्पद्यन्ते यस्मिंश्च प्रविष्टा भवन्ति, मुक्ताः सत्यो यमाश्रित्य वर्तन्ते, अनेन षोडशकलत्वं तस्य कथमिति परिहृतं भवति। स पुरुष इहैव शरीरे शरीरस्यान्तरास्ते। नावश्यं तद्दर्शनाय दूरं गन्तव्यमित्यभिप्रायः। 'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इत्युक्तं प्रपञ्च्यते– **स इत्यादि**॥ स पुरुषः कल्पादौ कलाः सृजानीतीक्षाञ्चक्रे चिन्तितवान्। पुनश्च कस्मिन् पुरुषे शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि?, कस्मिन्वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामि प्रतिष्ठो भविष्यामि?, को नु मद्वशीकरणक्षमभक्तिज्ञानादिसम्पन्नः?, यं निमित्तीकृत्याहं कलाः सृजानि? इत्येवमीक्षित्वा तादृशः प्राण एवेति निश्चित्य स पुरुषः प्राणं जीवकलाभिमानिनमसृजत्। प्राणात् तं प्राणं निमित्तीकृत्य श्रद्धां जीवस्यास्तिक्यनिष्ठामसृजत्। ततः खं वायुर्ज्योतिरापः पृथिवीत्येतानि शरीरोपादानभूतानि भूतानि, इन्द्रियं चक्षुरादि, प्रवृत्तावुपकरणं मनः, प्रधानकारणमन्नं तत्स्थितिकारणम्, तस्माच्चान्नादन्नं निमित्तीकृत्य वीर्यं शरीरहेतुभूतम्, तपो जीवस्य ज्ञानादिहेतुतया सुखसाधनम्, मन्त्राः ऋगादिवेदाः सम्यग्ज्ञानादिहेतवः, कर्म पुण्यापुण्यलक्षणं सुखादिनिमित्तम्, लोकाः गोलकाः इन्द्रियाश्रयभूताः, नाम च देवदत्तादिकमित्येताः कलाः पुरुषेण सृष्टा इति॥

अत्र स प्राणमसृजत, प्राणाच्छ्रद्धामित्यादौ, अन्नाद्वीर्यमिति मध्ये, लोकेषु सृष्टेषु सत्सु नाम चेत्यन्तेऽपि कथनेन पूर्वपूर्वोत्पन्नां कलां निमित्तीकृत्योत्तरोत्तरकला परमेश्वरेण सृष्टेति सूचयति। एतासाञ्च कलानां यथेत्यादिना जीवेन सह मोक्षे पुरुषप्राप्तिरुच्यते। नचासावुपपद्यते। कलानां जडत्वेन मोक्षासम्भवादित्यतोऽत्र

कलाशब्देन तदभिमानिदेवता विवक्षिता इति भावेन व्याख्यानरूपां स्मृतिमुदाहरति– **कर्मेति**॥ 'इन्द्रियेशाश्च सूर्याद्याः' इत्यस्यैव विवरणम्– **चक्षुराद्यभिमानिन इति**॥ चक्षुषः सूर्यः, श्रोत्रस्य दिश इत्येवं सूर्याद्या यथासङ्ख्यं चक्षुराद्यभिमानिनो नतु सर्वे सर्वेषामिति। ननु रुद्रादयो मनोदेवताः क्वचिच्छ्रूयन्ते। सत्यम्। तेऽपि भवन्तीत्याह– **रुद्र इति**॥ 'सर्वेषां प्रभवाप्यया' इत्यनेन पूर्वोत्पन्नानां पश्चादुत्पन्नान् सर्वान् प्रति स्वाम्यमस्तीति सूचितम्। तं ज्ञात्वेत्यनेन अरा इति मन्त्रो व्याख्यातो भवति। अत्र 'स प्राणमसृजत्, प्राणाच्छ्रद्धाम्' इत्याद्युक्त्या कलानामुत्पत्तावयं यथोक्त एव क्रम इत्यन्यथाप्रतीतिः स्यात्। तां निवारयति– **एतस्मादिति**॥ न कलानामुत्पत्तावयमेव क्रमो ज्ञातव्यः। तथा सत्येतस्मादिति मन्त्रविरोधात्। तत्र मनसोऽनन्तरमिन्द्रियाणां, ततो भूतानाञ्च जन्मश्रवणादित्यर्थः। एतद्वाक्यविरोधान्मन्त्र एव किं नान्यथा व्याख्यायत इत्यत आह– **नहीति**॥ कुतो नेत्यत आह– **तदिति**॥ प्रबलविशेषवचनसहकारिणा मन्त्रेण सामान्यवचनस्य बाधो युक्त एवेति भावः॥ अस्तु तर्हि इन्द्रियमनोजन्मविषये मन्त्रस्यैतद्वाक्यबाधकत्वम्। अन्यत्र तु यथाश्रुत एव क्रम इत्याशङ्कां परिहर्तुमशेषक्रमं विशेषवाक्यान्तरेण दर्शयति– **विष्णोरिति**॥ प्राणो जातोऽवरश्चेत्यादि योज्यम्। रुद्र इत्युपलक्षणम्। पूर्ववाक्योक्ताश्च ग्राह्याः। एवमिन्द्र इत्यपि। तेषु च यथायोग्यमुत्पत्त्यादि। तस्य सकाशात्। वरुणो वीर्यदेवता। ततः सृष्टस्तत उत्पन्नः। अग्निस्तपोऽभिमानी। मरुद्भूतवायुदेवता। पावकाख्यस्तेजोदेवता। ततो मरुदुत्पत्त्यनन्तरम् । तस्मान्मरुतो जातः, पर्जन्यो लोकाभिमानी। न केवलमेते संसारे क्रमवन्तः। किं तर्हि मोक्षेऽपीत्याह– **क्रमादिति**॥ यथा प्राणादीनां श्रद्धादिभ्यः उत्तमत्वमात्रं न तथा प्राणाद्विष्णोरित्याह– **नित्यमुक्त इति**॥ ततस्तेभ्यः सर्वेभ्यः प्राणादपि। अत्रोक्ता एव भूतदेवताः पूर्ववाक्येऽपि ग्राह्याः॥ २ ॥

**प्रकाशिका**–'सजीवस्य शरीरस्य' इत्यत्र जीवेन सहितं सजीवं, तस्य शरीरस्येत्यर्थः। षोडशकलाः पुरुषायणाः इति समुद्रदृष्टान्तेन मुक्तावपि पुरुषाश्रितत्वस्य वक्ष्यमाणत्वादत्रापि प्रकृष्टाः मुक्ताः सन्तो भवन्ति। 'भू सत्तायाम्' इति धातोः। पुरुषे भवन्तीति सप्तम्यर्थो ग्राह्य इति भावेन प्रविष्टा भवन्तीत्युक्तम्।

'कलानां जडत्वेन' इत्यत्र प्रकरणबाधात्प्राणस्य देवतात्वसिद्धावपि श्रद्धादि-पञ्चदशकलानां जडत्वादिति भावः। श्रद्धां खं वायुरित्यादिश्रुत्युक्तक्रमस्य तारतम्याननुकूलत्वात् 'यथोक्त एव क्रम इत्यन्यथाप्रतीतिः स्यात्' इत्युक्तम्। 'इति भगवद्वचनम्' इत्यत्र भगवद्वचनं 'तत्प्राक्श्रुतेश्च' इति सूत्रमित्यर्थः। तस्यार्थः– तन्मनः इन्द्रियेभ्यः प्रथममुत्पद्यते। प्राक् प्रागुत्पत्तौ श्रुतिसद्भावात्। 'ततः श्रद्धा' इत्यत्र श्रद्धाभिमानिनी सरस्वती। 'पूर्ववाक्योक्ता' इत्यत्र कामव्यतिरिक्ता रुद्राद्यास्त्रयो ग्राह्या इत्यर्थः। एवमिन्द्र इत्यपि। इन्द्र इति पदं कामस्योपलक्षणमित्यर्थः। तेजोऽभिमानिमूलाग्नेर्ग्रहणे तस्य विनायकादिभ्यो-ऽवरत्वायोगात् 'पावकाख्यः तेजसो देवता' इत्युक्तम्। एवमबभिमानिवरुणस्यैव ग्रहणे पृथिव्यभिमानिधरायाश्च ग्रहणे तारतम्यविरोधात् 'उदात्मा बुधः', 'शनिः पृथिव्यात्मा' इत्युक्तम्। तत्त्वन्यासे मुख्यतत्त्वदेवतानामेव ग्राह्यत्वादग्नेर्वरुणस्य धरायाश्च ग्रहणं कृतमित्यपि द्रष्टव्यम्। लोकाभिमानी लोकपदवाच्यगोलका-भिमानीत्यर्थः॥ २ ॥

**वामन**–षोडशकलः पुरुषः सर्वेशो विष्णुः स प्राणमसृजतेत्यादिना लोकानां सृष्टिमाह। अथ तासां देवताविशेषं तारतम्यविशेषञ्च प्रपञ्चयति कर्मेत्यादिना तत्त्वविवेकवाक्यशेषेण। पुष्करो वरुणपुत्रः कर्मदेवता। उषा अश्विनोर्भार्या। स्वाहाग्निभार्या। मन्त्रो वाग्व्यवहारः। तप आलोचनम्। 'इन्द्रियेशाश्च सूर्याद्या-श्चक्षुराद्यभिमानिनः' इत्यस्य सोमवायुसूर्याद्याः श्रोत्रत्वक्चक्षुराद्यभिमानिनः। तथाच भागवते–

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ इति ॥
सोमवित्तपसूर्याप्पा अश्व्यग्नीन्द्रेन्द्रसूनवः ॥
यमो दक्षश्चेन्द्रियेशा......... ॥ इति चान्यत्र च ॥
इन्द्रसूनुर्यज्ञनामा जयन्त इति चोच्यते ॥

वायोः पत्नी तु खं वायुरित्यादीनां सर्वेषां प्रभवाप्ययस्थानभूता परावरं देव-तारतम्यं तदप्यत्रोक्तमेव हि इत्यत आह– **एतस्माज्जायत इत्यादि** ॥ इह तावत्स प्राणमसृजतेत्यारभ्य कलानां स्रष्टा भगवानित्येतदेवोच्यते। न पुनः

सृष्टिक्रम 'एतस्माज्जायते प्राण' इत्यादिना मन्त्रवर्णेनोक्त एव हि तासां सृष्टिक्रमो भवति। नहि भूतेन्द्रियसृष्ट्यनन्तरं मनःसृष्टिः। प्रत्युत मनःसृष्ट्यनन्तरमेवेन्द्रियभूतसृष्टिः। अपरथा ब्रह्मसूत्रविरोधाच्च। अथाप्येनं सृष्टिक्रमं विष्णोः प्राण इत्यादिना तत्त्वविवेकवाक्येन सुव्यक्तं व्याख्याति॥ ६-२ ॥

**श्रीनिवास–** ननु कोऽसौ पुरुष इति प्रश्नस्य विष्णुरिति परिहारो न दृश्यत किन्तु एतदतिरिक्तस्यावशिष्टस्य प्रश्नजातस्यातो भावमाह– **वक्ष्यमाणेति** ॥ शिष्टस्य कोऽसौ पुरुष इति प्रश्नं विहायावशिष्टस्य क्वचास्तीत्यादि-प्रश्न-जातस्येत्यर्थः॥ **सजीवस्येति** ॥ तत्र केचन जीवभागाः केचन शरीरभागा इत्यर्थः॥ **परिहृतमिति** ॥ तज्जनकत्वेन तच्छब्दवाच्यत्वमित्यभिप्रायेणेति भावः। ईक्षाञ्चक्रे चिन्तितवानिति। पूर्वं जीवस्य शरीरस्य भागा इत्युक्तम्। जीवस्य भागत्वं नाम तं प्रत्युपकारित्वरूपं तद्दर्शयति– **आस्तिक्येति** ॥ साक्षाच्छरीरापादानत्वेन शरीरभागत्वं तद् दर्शयति– **ततः खमिति** ॥ **प्रवृत्ताविति**॥ जीवस्य शरीरस्येति शेषः॥ **तत्स्थितीति** ॥ देहस्थितीत्यर्थः। तपआदिकं लोकपर्यन्तं जीवभागः। लोको नाम च शरीरभागः। तदेव दर्शयति– **पूर्वेति** ॥ अनिरुद्धवीन्द्रशेषकामा इत्यर्थः। इत्यपि उपलक्षणमित्यर्थः। इन्द्रियेशाश्च सूर्याद्या इत्युक्ताः सूर्याद्याश्च ग्राह्याः। नन्विन्द्रसूर्यादीनां सर्वेषां मनोऽभिमानिरुद्रादेवोत्पत्तिः। किमित्यत आह– **तेष्विति** ॥ इन्द्रियाभि-मानिष्वित्यर्थः॥ **भूतवायुदेवतेति** ॥ अत्र मुख्याभिमानिप्रवहभिन्न अवान्तरा-भिमानी कश्चिद् ग्राह्यः। प्रवहग्रहणे तस्य विघ्नोत्तमत्वेन ततोऽवरत्वाद्य-सम्भवादिति ज्ञेयम्। यद्यपि द्वयोः प्रवहतैजसयोरुत्तमत्वात् अन्येषां मरुतां तत्समकक्षत्वात् कश्चित्तदभिमानी न प्रतीयते तथापि तत्समानेष्वपि मध्ये कस्यचित्तदवरत्वम्। एतद्वाक्यानुसारेणैवेन्द्रकामयोरिवेषद् द्रष्टव्यमिति भाति। ननूदाहृतश्रुतेः कथमुपनिषद्व्याख्यानरूपत्वम्। खादिपञ्चभूतदेवानामनुक्तेरित्यत आह– **अत्रोक्ता इति**॥ विघ्नप्रवहपावकपबुधशनैश्चराः। ततश्चोपनिषदि प्राणाच्छ्रद्धाम्, मनः इन्द्रियम्, अन्नम्, वीर्यम्, तपः, खं, वायुः, ज्योतिः, लोकाः, मन्त्राः, आपः, नाम, पृथिवी, कर्म इति क्रम इत्युक्तं भवति॥ ६-२ ॥

**छलारी–पुरुष इति** परमात्मनीत्यर्थः। षोडशकलाः प्रभवन्तीत्यस्य व्याख्या सजीवस्य शरीरस्य जीवसहितशरीरस्य भागा इति । कलाशब्दस्य भागार्थत्वात्। प्रभवन्तीत्यस्य व्याख्यानं उत्पद्यन्त इत्यादि । 'जनिरुत्पत्तिरुद्भवः' इति भूधातोरुत्पत्तौ अमरकोशे प्रयोगात्। कुलालाद् घटो भवतीति प्रयोगाच्चेति भावः। सृष्ट्यादौ कल्पादौ ईक्षाञ्चक्र इत्यन्वयः। जीवस्य मोक्षोपयोगिज्ञानार्थं प्रवृत्त्याद्यर्थञ्च शरीराणि तावदुत्पादनीयानि । अतः शरीरोपयुक्ताः प्राणादिषोडशकलाः सृजानीति ईक्षाञ्चक्र इत्यर्थः। इदं प्राणादिषोडशकलासर्जनं जीवानां शरीरेषु तत्काले पृथक्पृथगेव । नतु महत्त्वादिसृष्टिवत् आदिसृष्टावेव एकवारमिति ज्ञेयम्। प्रतिष्ठितः स्थापितः। यं निमित्तीकृत्य द्वारं कृत्वेत्यर्थः॥ **सृजानीति** ॥ सृजधातोरुत्तमपुरुषे मेर्निरिति निरादेशः॥ **प्राणं जीवकलाभिमानिनमिति** ॥ श्वासोच्छ्वास-रूपप्राणानामिकायाः जीवकलाया अभिमानिनं मुख्यप्राणमित्यर्थः॥ **तं निमित्ती-कृत्येति**॥ प्राणादिति कर्मणि पञ्चमीति ल्यब्लोपे कर्मण्यधिकरणे पञ्चमी वाच्येति वार्तिकोक्तेः। निमित्तीकृत्येति ल्यब्लोपनिमित्ता॥ **उपकरणमिति**॥ अप्रधान-कारणविशेषम् ॥**अन्नं निमित्तीकृत्येति**॥ अन्नं स्थूलभागरूपं निमित्तीकृत्य अपादानीकृत्य सूक्ष्मभागोपादानकं वीर्यमसृजतेत्यर्थः॥ **सुखसाधनमिति**॥ कृच्छ्रचान्द्रयणादिकमिति शेषः॥ **सूचयतीति** ॥ पञ्चम्या ल्यब्लोपनिमित्त-सप्तमीविवक्षणाच्चेति भावः॥ **यथासम्भवमिति** ॥ त्वचः प्राणः । जिह्वाया वरुणः । घाणस्यश्विनौ। तथा वाचोऽग्निः। पाण्योर्दक्षः । पादयोर्जयन्तः। पाय्वोर्मित्रः। गुह्येन्द्रियस्य मनुः । एवमित्यर्थः॥ **पूर्वपूर्वोत्पन्नानामिति**॥ ननु तं ज्ञात्वेत्येतस्य व्याख्यानमित्यप्रतीतेराह– **तं ज्ञात्वेत्यनेनेति** ॥ **तत्र मनसोऽनन्तरमिति**॥ उत्तरत्रैतस्मादित्यनुवृत्तेः। प्राणान्मन उत्पन्नम्। मनसो इन्द्रियाण्युत्पन्नानि । तेभ्यः पञ्चमहाभूतान्युत्पन्नानीत्यर्थप्रतीतेः। अत्र लिङ्गम् । 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भव' इति प्रमाणम्॥ **प्रबलविशेष-वचनसहकारिणेति**॥ निर्णायकत्वेन सूत्रस्य प्राबल्यादिन्द्रियापेक्षया मनसः पूर्वोत्पत्तिकथनेनाविशेषवचनाच्च। तत्सहकृतौ एतस्माज्जायते प्राण इति

मन्त्रेणेत्यर्थः। तत्प्राक्श्रुतेश्चेति सूत्रार्थस्तु तत्तु मन इन्द्रियेभ्यः पूर्वमुत्पद्यते 'मनः सर्वेन्द्रियाणि च' इति श्रुतेः। ननु श्रद्धाया मनोमात्रकारणत्वोक्तेः सर्वोत्पत्ति-लयकारणत्वं भाष्ये कथमुच्यत इत्यत आह 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः' इति स्मृतिवचनाच्चेति॥ **योज्यमिति** ॥ वरुणः सृष्ट इत्यत्र विद्यमान-जातशब्दपर्यायः सृष्टशब्दः। तस्मादग्निस्ततोऽवर इत्यत्र विद्यमानावरशब्दश्च तत्र पञ्चम्यन्तात्परो योज्य इति भावः॥ **उपलक्षणमिति** ॥ उपलक्षणस्या-जहत्स्वार्थत्वेन कामस्य तारतम्यासम्भवेनात्रागृहीतत्वेऽपि पूर्वोक्ता इति बहुवचनोपपत्तिः ॥ **इन्द्र इत्यपीति** ॥ उपलक्षणमिति शेषः। कामाहङ्कारिक-प्राणादयोऽपि केचिदिन्द्रियाभिमानिनोऽग्न्याद्या इत्यर्थः। ननु प्रकृतजडचेतना-त्मककलासु मध्ये चेतनानां मन्त्रादेश्चानादित्वेन कथमुत्पत्तिः। साक्षादवरत्वञ्च कथमित्यत आह– **यथायोग्यमुत्पत्त्यादीति** ॥ चेतनेषूत्पत्तिर्देहतः। जडेषु स्वरूपतः। क्वचिदभिमानव्यक्तिः। आदिशब्दात्क्वचित्साक्षात्क्वचित्परम्परयावरत्वं ग्राह्यम्॥ **तस्य सकाशादिति** ॥ उत्पत्तौ तस्येत्यनन्वयात् सकाशादित्युक्तम् । वरुणस्याभिमन्यमानानुक्तेराह– **वीर्यदेवतेति** ॥ सृष्ट इत्यस्योत्पादित इत्यर्थभ्रान्तिं वारयितुमाह– **तत उत्पन्न इति** ॥ भूतवाय्वभिमान्यहङ्काररूपप्राणस्य गणेशा-दुत्तमत्वेन गणेशजन्यत्वतदवरत्वयोरसम्भवात्। भाष्योक्तं ततो वायोः सुतो मरुदिति तदप्रतीतेर्व्याचष्टे॥ **मरुद्भूतवायुदेवतेति**॥ वायोः प्रवहवायोः सुतः मरुत्। मरुन्नामकभूतवायुदेवता अत्र विवक्षित इति भावः॥ **ततः मरुदुत्पत्त्य-नन्तरमिति**॥ पावको जात इत्यन्वयः। क्रमवन्तस्तारतम्यवन्तः॥ **उत्तमत्व-मात्रमिति**। शतगुणादिपरिमितोत्तमत्वमित्यर्थः॥ **ततस्तेभ्यः सर्वेभ्य इति** ॥ ततो नित्यमुक्तत्वात्। अपिशब्दसमुच्चितोऽर्थस्तेभ्य इति॥ **पूर्ववाक्येऽपीति** ॥ एतस्माज्जायते प्राण इत्यत्र खं वायुरितिवाक्य इत्यर्थः॥ ६-२ ॥

**ताम्रपर्णीय–** ॥ **स प्राणमसृजतेति** ॥ विवरणग्रन्थानुसारेण यस्मिन्निति सप्तम्या विपरिणामेनार्थमाह– **यस्मादिति**॥ स यथा नद्य इत्यादौ सदृष्टान्तं कलानां भगवदाश्रयत्वाभिधानात्तदनुसारेण यथाश्रुतसप्तम्यर्थमाह– **यस्मिं-श्चेति**॥ **तत्स्थितिकारणमिति**॥ अन्नसारस्य शरीरावयवोपचायकतया

स्थितिकारणत्वेनान्नभागस्य शरीरांशत्वमिति भावः॥ **शरीरहेतुभूतमिति** ॥ बीजभूतमित्यर्थः। तथाच पितृभुक्तान्नस्य पुत्रशरीरबीजभूतवीर्यहेतुत्वेनान्नाज्जातवीर्यस्य शरीरावयवत्वमिति भावः॥ **ज्ञानादिहेतुतयेति** ॥ अन्तःकरणशुद्धिद्वारा ज्ञानादिहेतुतया सुखस्य परम्परया साधनं कायक्लेशसाधनं एकादश्युपवासादिजनितं पुण्यमित्यर्थः॥ **तप आलोचनमिति** ॥ प्राचीनटीकोक्तेर्मननापरनामकं वा ॥ **ऋगादिवेदा इति**॥ अन्तःकरणशुद्धिद्वारमन्तरेण युक्त्यनुसन्धानात्मकमीमांसावत्प्रमाणानुग्राहकत्वं वान्तरेण साक्षाज्ज्ञानकारणीभूता ऋगादि वेदा मन्त्रास्तदुच्चारणशक्तिर्वा। प्राचीनटीकोक्तरीत्या तद्विषयवाग्व्यवहारो वाऽत्र विवक्षितः। अन्यथा वेदानां शरीरभागत्वायोगाच्च॥ **कर्म पुण्येति**॥ ज्ञानादिद्वारमन्तरेण साक्षात्सुखसाधनमपूर्वलक्षणमित्यर्थः॥ **नाम देवदत्तादिकमिति**॥ यद्यपि नाम वर्णमालारूपं शरीरावयवं न भवति । तथापि नाम लक्षणाविशेषोपलक्षितत्वेन विशिष्टोत्पादाद्भागत्वं द्रष्टव्यम्। अत एव नामविकल्पे यथा डित्थ इत्यन्यत्रोक्तम्। कर्मेति पुष्करः प्रोक्त इत्यत्र पुष्करो वरुणपुत्रः कर्मदेवतेति प्राचीनटीकायाम्॥ **विवरणमिति**॥ चक्षुराद्यभिमानित्वव्यतिरिक्ततदीशत्वाभावादिति भावः॥ **क्वचिदिति**॥ 'वैदिकं गरुडोऽथेन्द्रो यज्ञादिविषयं मनः। शेषोऽसौ पाञ्चरात्रिकः' इत्यादावैतरेयभाष्य इत्यर्थः॥ **स्वाम्यमिति** ॥ पूर्वोत्पन्नश्रद्धाया उत्पत्तिलयाधिकरणत्वेन स्वाम्योक्त्या पूर्वोत्पन्नाः सर्वेऽप्यनन्तरजान् प्रति स्वामिन इति सूचित इत्यर्थः। 'विष्णोः प्राणः' इत्यादिप्रकरणेन तस्य वरुणः सृष्ट इत्यस्य सोमाद्वरुणः सृष्ट इत्यन्वयेऽपि, ततो वर आकाशदेवता विघ्न इत्यस्य ततः प्रधानाग्नेः आकाशदेवता विघ्नो वर इत्यन्वयेऽपि शिष्टानां विष्णोः प्राणस्ततः श्रद्धेत्यादीनामन्वयो न प्रतीयत इत्यतः सर्वत्र सृष्टो वर इति परयोः सयोजनेनान्वयमाह– **प्राणो जातो वरश्चेत्यादि योज्यमिति** ॥ **पूर्ववाक्योक्ता इति**॥ 'मनोनामानिरुद्धकः। रुद्रो वीन्द्रः शेषकामौ' इति पूर्वोक्ता अपीत्यर्थः॥ **एवमिन्द्र इत्यपीति**॥ इन्द्रस्त्विन्द्रियात्मेत्येतत् 'इन्द्रियेशाश्च सूर्याद्याः' इत्यस्योपलक्षणमित्यर्थः॥ **तेष्विति** ॥ मनोऽभिमानिभ्यो रुद्रवीन्द्रशेषेभ्यः इन्द्रियेश इन्द्रो मनोऽभिमानी

कामः तन्मान्येवानिरुद्धः तस्मादिन्द्रियेशाः सूर्याद्या इति यथायोग्यमित्यर्थः । तस्य सोम इति षष्ठ्याः 'सृष्टः वर' इति पदद्वयेनाप्यन्वयायोगात् कथमन्वय इत्यत आह– **तस्य सकाशादिति** ॥ इन्द्रियमुख्याभिमानीन्द्रसकाशात्सोमो जातो वरश्चेत्यर्थः ॥ ६-२ ॥

**मङ्गालीय–॥ शिष्टस्येति** ॥ उर्वरितस्य कश्चासाविति प्रश्नेतरप्रश्नस्येत्यर्थः। षोडशकला इत्यस्य व्याख्या॥ **सजीवस्य शरीरस्य भागा इति** ॥ कलाशब्दस्य भागार्थत्वादिति। अत्र भागशब्देनोपकारकं विवक्षितम्। तेन पृथिव्यादीनां पञ्चानामपि भूतानां ब्रह्माण्डान्तर्विद्यमानानां संसृष्टशब्दशब्दितानां असंसृष्टशब्दशब्दितमहदादिव्यतिरिक्तानां कलात्वम्। तथाहि–भूतानां तावच्छरीरोपादानत्वमस्ति।

यत्किञ्चिदिह लोकेऽस्मिन्देहबद्धं विशाम्पते।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥

इति शरीरस्य पाञ्चभौतिकत्वोक्तेः। अतस्तेषां शरीरोपकारकत्वमवश्यं वाच्यम्। उपादानानामुपादेयोपकारकत्वस्य तन्त्वादौ सुप्रसिद्धत्वात्। ततश्च पृथिव्यादीनां भूतानां कलात्वसिद्धिः। एवं जीवस्य शरीरप्रेरकतया श्रद्धापदोक्तास्तिक्यनिष्ठायाः यागादिविहितप्रवृत्तिहेतुत्वेन चक्षुरादीन्द्रियस्य प्रवृत्तावुपकरणत्वेन मनसः प्रवृत्तौ प्रधानकारणत्वेन अन्नस्य शरीरस्थितिकारणत्वेन वीर्यस्य शरीरहेतुत्वेन तपसो जीवज्ञानादिहेतुतया सुखसाधनत्वेन ऋगादिवेदरूपाणां मन्त्राणां सम्यग्ज्ञानादिहेतुत्वेन कर्मणः पुण्यापुण्यरूपस्य सुखादिनिमित्तत्वेन लोकशब्दोक्तेन्द्रियाश्रयगोलकानां शरीरावयवत्वेन देवदत्तादिनाम्नो व्यवहारहेतुत्वेन सजीवशरीरोपकारकतया कलात्वं बोध्यम्। अत्र किञ्चिज्जीवोपकारकं किञ्चिच्च शरीरोपकारकम्। सर्वथापि सजीवशरीररूपविशिष्टोपकारकत्वं सर्वेषां समानमिति। कल्पादावीक्षाञ्चक्र इत्यन्वयः। जीवस्य मोक्षोपयोगिज्ञानार्थं प्रवृत्त्याद्यर्थञ्च शरीराणि तावदुत्पादनीयानि। अतः शरीरोपयुक्ताः प्राणादिषोडशकलाः सृजानीति ईक्षाञ्चक्र इत्यर्थः। इदं प्राणादिषोडशकलासर्जनं जीवानां शरीरेषु तत्तत्काले पृथक्पृथगेव। नतु महत्तत्त्वादिसृष्टि-

वदादिसृष्टावेकवारमिति ज्ञेयम्। प्रतिष्ठः प्रतिष्ठितः॥ **यं निमित्तीकृत्येति** ॥ द्वारीकृत्येत्यर्थः॥ **प्राणं जीवकलाभिमानिनमिति** ॥ श्वासनिश्वासरूपप्राण-नामिकायाः कलायाः अभिमानिनं मुख्यप्राणमित्यर्थः॥ **तं प्राणं निमित्ती-कृत्येति** ॥ प्राणादिति पञ्चमी कर्मणि ल्यब्लोपे कर्मण्यधिकरणे पञ्चमी वाच्येति वार्तिकोक्तेः। निमित्तीकृत्येत्यनेनाप्रधानकारणत्वोक्तिः॥ **अन्नं निमित्तीकृत्येति** ॥ अन्नं स्थूलभागरूपं निमित्तीकृत्य अपादानीकृत्य सूक्ष्मभागोपादानकं वीर्यमित्यर्थः॥ **सुखसाधनमिति** ॥ कृच्छ्रचान्द्रयणादिकमिति शेषः॥ **सूचय-न्तीति** ॥ पञ्चम्याः ल्यब्लोपनिमित्तत्वस्य विवक्षितत्वात्। सामान्यकारणा-र्थत्वप्रतीतेर्लोकेष्वित्यत्र निमित्तसप्तमीविवक्षणाच्चेति भावः। कर्मेति पुष्करः प्रोक्त इति भाष्ये उषा इति सान्तः शब्दः तदर्थस्त्वश्विनोर्भार्येति। पर्जन्यः द्वादशादित्ये-ष्वेकः। स्वाहा अग्नेर्भार्या। अनिरुद्ध एवानिरुद्धकः कामपुत्र इत्यर्थो द्रष्टव्यः॥ **इत्यस्यैव विवरणमिति** ॥ अतो न पुनरुक्तिरिति भावः॥ **यथासम्भवमिति** ॥ त्वचः प्राणः, जिह्वाया वरुणः, घ्राणस्याश्विनौ तथा वाचोऽग्निः, पाण्योर्दक्षः, पादयोर्जयन्तः, पाय्वोर्मित्रः, गुह्येन्द्रियस्य मनुरित्येव-मित्यर्थः। ननु श्रद्धाया वक्ष्यमाणक्रमानुरोधेन मनोमात्रकरणत्वोक्तेः सर्वोत्पत्ति-लयकारणत्वं कथमुच्यते भाष्ये इत्यत आह– **पूर्वोत्पन्नानामिति** ॥ ननु तं ज्ञात्वेत्येतत्कस्य व्याख्यानमित्यप्रतीतेराह– **तं ज्ञात्वेत्यनेनेति** ॥ उत्तरत्रोदा-हरिष्यमाणो मन्त्र इत्यर्थः॥ **तत्र मनसोऽनन्तरमिति** ॥ उत्तरत्र एतस्मादित्यनुवृत्तेः प्राणान्मन उत्पन्नम्। मनसः इन्द्रियाण्युत्पन्नानि। तेभ्यः पञ्चमहाभूतानीत्यर्थप्रतीतेरित्यर्थः॥ **प्रबलविशेषेति** ॥ निर्णायकत्वेन सूत्रस्य प्राबल्यादिन्द्रियापेक्षया मनसः पूर्वोत्पत्तिकथनेन विशेषवचनत्वाच्च तत्सहकृतै-तस्मादिति मन्त्रेणेत्यर्थः। 'तत्प्राक् श्रुतेश्च' इति सूत्रार्थस्तु मन इन्द्रियेभ्यः पूर्वमुत्पद्यते 'मनः सर्वेन्द्रियाणि च' इति श्रुतेः। 'पूर्वं मनः समुत्पन्नं ततोऽन्येषां समुद्भवः' इति स्मृतिवचनाच्चेति॥ **योज्यमिति** ॥ वरुणः सृष्ट इत्यत्र विद्यमानः जातशब्दपर्यायः सृष्टशब्दस्तस्मादग्निस्ततोऽवर इत्यत्र विद्यमानोऽवरशब्दश्च पञ्चम्यन्तात्परो योज्य इति भावः॥ **उपलक्षण-मिति** ॥ उपलक्षणस्या-

जहत्स्वार्थत्वेन कामस्य ततोऽवरत्वेनात्र ग्रहणासम्भवे-ऽपि पूर्वोक्ता इति बहुवचनोपपत्तिः। मनोऽभिमानित्वेन परम्परया अवरत्वेन कामस्यापि ग्रहणाद्वा॥ **इन्द्र इत्यपीति** ॥ उपलक्षणमित्यनुवर्तते। कामाहङ्कारिक-प्राणादयोऽपि केचिदिन्द्रियाभिमानिनो ग्राह्या इत्यर्थः। ननु प्रकृतजड-चेतनात्मककालसु मध्ये चेतनानां मन्त्रादेश्चानादित्वेन कथमुत्पत्तिः। कथञ्च साक्षादवरत्वमित्यत आह– **यथायोग्यमुत्पत्त्यादीति** ॥ चेतनेषूत्पत्तिर्देहतः जडेषु स्वरूपतः क्वचिदभिमानव्यक्तिः। आदिशब्दात्कचित्साक्षात्क्वचित्पर-म्परयाऽवरत्वं ग्राह्यम्। सकाशादित्यनुक्तौ तस्येत्यस्यानन्वयात्सकाशादि-त्युक्तम्। वरुणस्याभिमन्यमानानुक्तेराह– **वीर्यदेवतेति** ॥ सृष्ट इत्यस्योत्पादित इत्यर्थत्वे तत इति पञ्चम्यनन्वयादाह– **तत उत्पन्न इति** ॥ भूतवाय्वभि-मान्याहङ्कारिकप्राणस्य गणेशादुत्तमत्वेन तज्जन्यत्वतदवरत्वयोरसम्भवा-न्निमित्तात्ततो वायोः सुतो मरुदित्युक्तं भाष्ये तदप्रतीतेर्व्याचष्टे– **मरुद्भूत-वायुदेवतेति** ॥ वायोः प्रवहवायोः सुतो मरुन्मरुन्नामकः भूतवायुदेवतात्र विवक्षित इति भावः। मरुत्पदेनैवाभिमन्यमानं लब्धमित्याशयेन वाह– **मरुद्भूतवायुदेवतेति** ॥ अस्मिन्पक्षे वायोः प्रवहस्य सुतो भूतवायुदेवतेत्यर्थो ज्ञेयः। तस्मादग्निः पावकाख्य इत्यत्र तत इत्यधिकमित्याशङ्क्य तदर्थमाह– **ततो मरुदुत्पत्त्यनन्तरमिति** ॥ **उत्तमत्वमात्रमिति** ॥ शतगुणादिपरिमितोत्तमत्व-मित्यर्थः॥ **पूर्ववाक्येऽपीति** ॥ एतस्माज्जायते प्राण इति पूर्वोदाहृतवाक्येऽपी-त्यर्थः। अतो न तारतम्यविरोध इति भावः॥ ६-२ ॥

**गूढकर्तृक**–॥ **पूर्ववाक्योक्ता अपीति** ॥ 'मनोनामानिरुद्धकः। रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः' इति पूर्ववाक्योक्ता अपीत्यर्थः। एवमिन्द्र इत्युपलक्षणम्। इन्द्रियेशाश्च सूर्याद्याश्चक्षुराद्यभिमानिन इति। पूर्ववाक्योक्ता अपीत्यर्थः। ननु मनोभिमानिरुद्रशेषगरुडैरिन्द्रोत्पत्तावपि कथं कामानिरुद्धाभ्या-मुत्पत्तिरवरत्वञ्च। इन्द्रशब्दस्य सूर्याद्युपलक्षणत्वे च सूर्यादीनां इन्द्रसाम्यञ्च स्यादित्यत आह– **तेष्विति** ॥ आदिपदेनावरत्वमुच्यते। अभिमानोत्पत्त्यर्थ-मेवोपलक्षणं कृतमिति भावः॥ ६-२ ॥

**खण्डार्थ**–एवं पृष्टवते तस्मै स होवाच। वक्ष्यमाणलक्षणः विष्णुरेवासौ पुरुष इति सेत्स्यतीत्यभिप्रायेण शिष्टस्य परिहार उच्यते - **इहैवेति**। हे सोम्य यस्मिन् पुरुषे एता वक्ष्यमाणाः प्राणाद्याः षोडशसङ्ख्याकाः कलाः सजीवस्य शरीरस्य भागाः प्रभवन्ति यस्मादुत्पद्यन्ते यस्मिंश्च प्रतिष्ठिता मुक्तास्सत्यो यमाश्रित्य वर्तन्ते। अनेन षोडशकलत्वं चैतस्य कथमिति परिहृतं भवति। स पुरुष इहैव शरीरे शरीरस्यैवान्तरास्ते। नावश्यं तद्दर्शनाय दूरं गन्तव्यमित्यभिप्रायः।

यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्युक्तं प्रपंच्यते– **स इत्यादि** ॥ स पुरुषः कल्पादौ कलाः सृजामीति ईक्षाश्चक्रे चिन्तितवान्। पुनश्च कस्मिन् पुरुषे शरीरादुत्क्रान्तेऽहमुत्क्रान्तो भविष्यामि? कस्मिन् वा तत्र प्रतिष्ठितेऽहमपि प्रतिष्ठास्यामीति प्रतिष्ठितो भविष्यामि? को नु मद्वशीकरणक्षमभक्तिज्ञानादिसम्पन्नः? यं निमित्तीकृत्याहं कलाः सृजामीत्येवमीक्षित्वा तादृशः प्राण एवेति निश्चित्य स पुरुषः प्राणं जीवकलाभिमानिनमसृजत । प्राणात् तं प्राणं निमित्तीकृत्य श्रद्धां जीवस्य आस्तिक्यनिष्ठाभिमानिनीं भारतीमसृजत् । ततः खं वायुः ज्योतिरापः पृथिवीत्येतानि शरीरोपादानभूतानि भूतानि तदभिमानिनो विघ्नेशाद्या देवाः, इन्द्रियं चक्षुरादिप्रवृत्तौ उपकरणं सूर्यादिदेवाः, मनः प्रधानकरणं तद्देवाः वीन्द्रशेषकामानिरुद्धाः, अन्नं तत्स्थितिकारणं तन्मानी सोमः, तस्माच्चान्नात् अन्नं निमित्तीकृत्य वीर्यं शरीरहेतुभूतं तद्देवता वरुणः, तपो जीवस्य ज्ञानादिहेतुतया सुखसाधनं तदभिमानी वह्निः, मन्त्रा ऋगादिवेदाः साक्षाज्ज्ञानादिहेतवः तद्देवता स्वाहा, कर्म पुण्यापुण्यलक्षणं सुखादिनिमित्तं, तदभिमानी पुष्करः, लोकाः गोलकाः इन्द्रियाश्रयभूताः, तद्देवः पर्जन्यः, नाम देवदत्तादिकं तन्मानिनी उषा इत्येताः कलाः पुरुषेण सृष्टा इति ग्राह्यम्।

अत्र स प्राणमसृजत, प्राणाच्छ्रद्धामित्यादौ, अन्नाद्वीर्यमिति मध्ये लोकेषु सृष्टेषु सत्सु नाम चेत्यन्तेऽपि कथनेन पूर्वपूर्वोत्पन्नाः कलाः निमित्तीकृत्योत्तरोत्तराः कलाः परमेश्वरेण सृष्टा इति सूच्यते। तच्च यथोक्तक्रमेऽनुपपन्नम्। अतो भाष्याद्युक्तदिशा क्रमोऽवगन्तव्यः॥ ६-२॥

**नर**–इत्येवं पृष्टवते तस्मै भरद्वाजाय स उवाच । वक्ष्यमाणलक्षणैः विष्णुरेवासौ पुरुष इति सेत्स्यतीत्यभिप्रायेण शिष्टस्य परिहारमाह— **इहैवेति** ।। हे सोम्य यस्मिन्पुरुषे एता हि वक्ष्यमाणाः प्राणाद्याः षोडशसङ्ख्याकाः कलाः सजीवस्य शरीरस्य भागाः प्रभवन्ति। यस्मादुत्पद्यन्ते यस्मिंश्च प्रतिष्ठिता भवन्ति। मुक्ता सत्यो यमाश्रित्य वर्तन्ते, अनेन षोडशकलात्वं तस्य तदुत्पादेनेत्युक्तं भवति। स पुरुषः इहैव शरीरे शरीरस्यान्तरेवास्ते नावश्यं तस्य दर्शनार्थं दूरं गन्तव्यम्। यस्मिन्नेताः षोडशकलाः प्रभवन्तीत्युक्तं विवृणोति– **स इति** ।। स पुरुषः कल्पादौ कलाः सृजानीति ईक्षाञ्चक्रे चिन्तितवान् । पुनश्च कस्मिन्पुरुषे शरीरादुत्क्रान्ते अहमुत्क्रान्तो भविष्यामि? कस्मिन्वा प्रतिष्ठित अहमपि प्रतिष्ठास्यामि प्रतिष्ठितो भवामि? को नु मद्वशीकरणक्षमः भक्तिज्ञानादिसम्पन्नः यं निमित्तीकृत्याहं कलाः सृजामि? इत्येवमीक्षित्वा तादृशश्च प्राण एवेति निश्चित्य स पुरुषः प्राणं जीवकलाभिमानिनं असृजत। प्राणं निमित्तीकृत्य श्रद्धां जीवस्य श्रद्धां आस्तिक्यबुद्ध्यभिमानिनीं वायुपत्नीं भारतीम्। ततः खं आकाशम्। अत्र सृष्टिकथने तात्पर्यं नतु क्रमे तात्पर्यम्। क्रमस्तु विशेष-प्रमाणादवगन्तव्यः। तथाहि विशेषस्मृतिः।

विष्णोः प्राणस्ततः श्रद्धा तस्या रुद्रो मनोऽभिधः।
तस्मादिन्द्रस्त्विन्द्रियात्मा ततः सोमोऽन्नदेवता।।
ततश्च वरुणः सृष्टः तस्मादग्निस्ततोऽवरः।
आकाशदेवता विघ्नः ततो वायोः सुतो मरुत्।।
तस्मादग्निः पावकाख्यः प्रथमोऽग्नेस्सुतस्ततः।
ततः पर्जन्य उद्भूतः स्वाहातो मन्त्रदेवता।।
उदात्मको बुधस्तस्य उषा नामात्मिका ततः।।
ततः शनिः पृथिव्यात्मा कर्मात्मा पुष्करस्ततः।
क्रमात्प्रत्यवरा एते मुक्ताः सर्वगुणैरपि।।
नित्यमुक्तस्ततो विष्णुः प्राणादप्युत्तमोत्तमः।। इति ।।

प्राणाच्छ्रद्धा, अन्नाद्वीर्यं मन्त्रेषूत्पन्नेषु सत्सु नाम चेति। आदिमध्या-

वसानेषूक्तेः पूर्वोत्पन्नकलां निमित्तीकृत्य उत्तरोत्तरकलां स पुरुषो विष्णुः सृजतीत्यवगन्तव्यम्। आकाशादिकलानां जीवेन सह मुक्त्यभिधानादाकाशादिशब्दैः तदभिमानिदेवा ग्राह्याः। जडानां मुक्त्यनुपपत्तेः। अभिमानिनतस्तूक्तप्रमाणोक्ताः तच्छेषवचनान्तरोक्ताश्च। वचनान्तरं तु–

कर्मेति पुष्करः प्रोक्तः उषा नामाभिमानिनी।
लोकाभिमानी पर्जन्यः स्वाहा वै मन्त्रदेवता॥
तपोऽभिमानी वह्निश्च वरुणो वीर्यदेवता।
अन्नस्य देवता सोमो मनोमान्यनिरुद्धकः॥
इन्द्रियेशाश्च सूर्याद्याः चक्षुराद्यभिमानिनः।
रुद्रो वीन्द्रः शेषकामौ मनसस्त्वेव देवताः॥
श्रद्धेति वायोः पत्नी स्यात्सर्वेषां प्रभवाप्यया।
तस्याश्च कारणं प्राणः सर्वेषामुत्तमोत्तमः॥
तस्यापीशः कारणश्च वासुदेवः परोऽव्ययः।
न तस्य सदृशः कश्चित् कुत एवोत्तमो भवेत्॥
तं ज्ञात्वा मुच्यते जन्तुः विदित्वैवं परात्परम्॥ इति तत्त्वविवेके॥

ततश्चायमर्थः–'खं वायुर्ज्योतिरापः पृथिवी' इत्येतानि आकाशादिभूतानि शरीरोपादानानि। आकाशाभिमानी विनायकः। वाय्वभिमानी प्रवहः। ज्योतिरभिमानी अग्निः तत्पुत्रः पावकश्च। अबभिमानी वरुणः। पृथिव्यभिमानिभूता धरा। इन्द्रियज्ञानोपकरणं श्रोत्रादि वागादि च। तत्र श्रोत्राभिमानिन्यो दिग्देवताः। त्वगभिमानी प्राणवायुः। चक्षुरभिमानी सूर्यः। जिह्वाभिमानी वरुणः। घ्राणाभिमानिनावश्विनौ। वागभिमानी वह्निः। हस्ताभिमानी दक्षः। पादाभिमानी जयन्तः। पाय्वभिमानी मित्रः। उपस्थाभिमानी स्वायम्भुवो मनुः। ज्ञानप्रधानोपकरणमनोऽभिमानिनो गरुडशेषरुद्रेन्द्रकामानिरुद्धाः। बुद्ध्यभिमानिन्यः सौपर्णीवारुण्युमाः। अन्नं देहस्थितिकारणं तदभिमानी सोमः । तस्माच्यान्नादन्नं निमित्तीकृत्य वीर्यं शरीरहेतुभूतं तदभिमानी वरुणः। तपः जीवस्य ज्ञानादिहेतुतया सुखसाधनं तदभिमानी वह्निः। मन्त्राः ऋगादिदेवाः सम्यज्ज्ञानहेतवः

तदभिमानी स्वाहा। कर्म सुखदुःखसाधनं कर्मजन्यं पुण्यपापलक्षणमदृष्टं तदभिमानी पुष्करः। लोका इन्द्रियगोलकाः तदभिमानी पर्जन्यः। लोकेषु निमित्तेषु सत्सु नाम व्यवहारोपयोगिभूतइन्द्रादिनाम तदभिमानी उषा अश्विभार्या। यस्मिन्नेताविति प्राणादिकलानां मुक्तानां परमपुरुषाश्रयत्वमुक्तम्॥ ६-२ ॥

**उदय**–एवं पृष्टवते तस्मै भरद्वाजाय स गुरुः हि आनन्दपूर्वकमुवाच। हे सोम्य सोमपानार्ह। यस्मिन् पुरुषे यस्मात्पुरुषात्। एता वक्ष्यमाणाः प्राणाद्याः षोडशकलाः प्रभवन्ति उत्पद्यन्ते । प्रविष्टाश्च भवन्ति। स पुरुषः इहैव शरीरे अन्तः शरीरान्त-र्भागे। वर्तत इति शेषः। इत्याहेत्यनुषङ्गः। तद्दर्शनार्थं दूरगमनं नापेक्षितमिति भावः। षोडशकलाप्रभवत्वमेव विशदयति– **स ईक्षाञ्चक्र इति** ॥ स पुरुषो भगवान् कल्पादौ सृजामीति ईक्षाञ्चक्रे चिन्तितवान्। वेत्यनन्तरं कस्मिन् पुरुष उत्क्रान्ते गच्छति सति अहं उत्क्रान्तो भविष्यामि तस्माच्छरीराद्गमिष्यामि। कस्मिन्पुरुषे प्रतिष्ठिते अहमपि प्रतिष्ठास्यामि प्रतिष्ठितो भवामीति, मद्वशीकरणक्षमो भक्तिज्ञाना-दिसम्पन्नश्च कः स्यादिति चिन्तितवानिति भावः। चिन्तानन्तरं किमकरोदित्यत आह– **स प्राणमसृजदिति** ॥ स भगवान् परमात्मा प्राणं जीवकलाभिमानिनं मुख्यप्राणं असृजत। प्राणात् श्रद्धां जीवस्यास्तिक्यनिष्ठां तदभिमानिनीं भारतीं असृजत। उत्पादितवान्। खं वायुरित्यादिपञ्चभूतानि तदभिमानिनश्च। इन्द्रियं चक्षुरादि च। तदभिमानी सूर्यश्चेत्यादि। प्रधानेन्द्रियं तदभिमानिनो रुद्रादयश्च। अन्नं तदभिमानी सोमश्च। अन्नाद्वीर्यमन्नं निमित्तीकृत्य शरीरहेतुभूतं तदभिमानी वरुणश्च। तपः ज्ञानादिसाधनभूतं तदभिमानी वह्निश्च । मन्त्राः ऋग्वेदादयः। तदभिमानिनी स्वाहा। कर्म पुण्यपापोपलक्षितसुखादि । तदभिमानी पुष्करः । लोकाः गोलकानीन्द्रियभूतानि । तदभिमानी पर्जन्यः। एवं लोकेषु सृष्टेषु नाम च देवदत्तादिकम् । तदभिमानी उषा च। एवंप्रकारेण स भगवान् सर्वमुत्पादितवान्। देवतोत्पत्तिक्रमस्तु आथर्वणोपनिषदुक्तो ज्ञातव्यः। अत्र क्रमविवक्षेति भावः। क्रमस्तु 'विष्णोः प्राणस्ततः' इति भाष्योक्तो ज्ञातव्यः॥ ६-२ ॥

उपनिषत्

**स यथेमा नद्यः स्यान्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते। स एषोऽकलोऽमृतो भवति ॥ ३ ॥**

भाष्यम्

'समुद्रे इत्येवं प्रोच्यते। पुरुषे इत्येवं प्रोच्यते। भिद्येते तासां नामरूपे। भिद्येते चासां नामरूपे' इत्युक्तत्वात् । अज्ञैरनवगतान्यपि समुद्रे स्थितानां नदीनां, विष्णौ स्थितानां मुक्तानाञ्च भिन्नान्येव नामरूपाणि सन्त्येवेत्यर्थः ॥

न च भेदशब्दो नाशे प्रयुज्यमानः क्वापि दृष्टः । घटादावपि बहुभाव एव भेदशब्दः प्रयुज्यते। नाशस्त्वर्थत एवावगम्यते। न चात्रार्थतोऽपि नाशोऽवगम्यते। न हि नामानि रूपाणि च कपालवद् बहुधा भूतानि तिष्ठन्ति। अतो भिद्येते इति पृथक्त्वमेवोच्यते। 'अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः' इति वाक्यशेषाच्च। अतः पुरषे भिन्नानि नामरूपाणि प्रतिष्ठितानीत्येवार्थः। अस्तगमनं त्वादित्यवदज्ञाना-मविज्ञेयत्वमेव।

'प्राणादयः कला यस्मिन् मुक्ता नित्यं प्रतिष्ठिताः।
पृथक् पृथक् नामरूपैर्नमस्तस्मै पराय ते ॥' इति सत्तत्त्वे॥

'नामरूपाद्विमुक्तः' इत्यनेनापि नामरूपामुक्तत्वमुच्यते। विप्रिय इत्यादिवत्। नामरूपे अविहायेति च पूर्वत्र। 'अनन्तं वै नामानन्ता वै विश्वेदेवाः' इति नामरूयोरनन्तत्वं हि श्रुतिर्वक्ति।

'यत्र पूर्वे साध्याः सन्ति देवाः' 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः'

**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्वरीषु' इत्यादेश्च। अतः सर्वमुक्तेभ्यो-ऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम्॥ ३॥**

**टीका**– 'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इति कलानां मुक्तौ परमपुरुषाश्रयत्वमभिधाय यथेत्यादितद्विवरणवाक्ये सदृष्टान्तं पुरुषैक्यमुच्यते। यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्यो गच्छन्त्य इति यावत्। समुद्रायणाः समुद्रगमनस्वभावाः समुद्रं प्राप्यास्तं स्वरूपतिरस्कारं गच्छन्ति। तासाञ्च भिद्येते विनश्यतः। नामरूपे गङ्गा यमुना इत्यादिलक्षणे। तद्भेदे समुद्र इत्येवं प्रोच्यते तदुदकलक्षणं वस्तु। एवमेवास्य परिद्रष्टुर्जीवस्येमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति। तासाञ्च नामरूपे प्राण इत्यादिनामरूपे भिद्येते। नाशे च नामरूपयोर्यदनष्टं चैतन्यं तत्पुरुष एवेत्युच्यते विद्वद्भिः। ततस्स एष जीवोऽकलोऽमृतो भवतीति। तदेतत्कथमित्यतो मुक्तेश्वरभेदस्यात्रानुपलभ्यमानत्वाद्यस्मिन्निति तदुक्तिरयुक्तेति शङ्कापरिहाराय भेद एव समर्थ्यत इति भावेनाऽह– **समुद्र इति**॥ समुद्रे पुरुषे इति सप्तमी। न प्रथमेत्यर्थः। तत्कुत इत्यत आह– **भिद्येते इति**॥ समुद्रं प्राप्तानां नदीनां, पुरुषं प्राप्तानां कलानां च परस्परं समुद्रादेश्च विविक्तानामरूपवत्त्वस्योक्तत्वात्। प्रथमान्तत्वाङ्गीकारे तद्विरोधः स्यात्। नहि नद्यादीनां समुद्रादिभिरैक्यं विविक्तनामरूपवत्त्वञ्चेति युज्यते। अतः सप्तम्यन्तत्वमेवेत्यर्थः। तर्हि भिद्येते तासामित्यादिवाक्यस्य कथं योजनेत्यत आह– **अज्ञैरिति**॥ अस्तं गच्छन्तीत्यस्यानुवादो अज्ञैरिति। तथाहि वक्ष्यति। तथाचेयमक्षरयोजना– नद्यः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति। अज्ञानामदर्शनं गतानामपि तासां समुद्रे स्थितानां नामरूपे भिद्येते विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। एवं कला अपि जीवमोक्षकाले मुक्ताः परमपुरुषं प्राप्यादर्शनं गच्छन्ति। तथापि पुरुषे स्थितानां तासां नामरूपे विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। ततश्च कलादेवतासु मुक्तिं गतासु स एष जीवो नष्टाचेतनकलो भवति। तत एवामृतो भवति। कलानिमित्तं हि मरणमस्येति॥

ननु भिद्येते इत्यस्य नाशोऽर्थो मयाऽङ्गीक्रियते। तत्कथम्। प्रथमान्तत्वे एतद्विरोध इत्यत आह– **नचेति**॥ दृष्ट एव घटो भिन्न इत्यादौ नाशे च प्रयुज्यमानो भेदशब्द इत्यत आह– **घटादावपीति**॥ बहुभावे अवयवविभागे। कथं तर्हि भिन्नो घट इति प्रयोगे नष्ट इति प्रत्ययः श्रोतॄणामित्यत आह– **नाशस्त्विति**॥ भिन्नशब्दाज्ज्ञातावयवविभागेन श्रोत्रा यस्यावयवविभागस्तस्य नाशमन्तरेणासावनुपपन्न इत्यनुमानेनैव नाशोऽवगम्यते, न शब्दशक्त्येत्यर्थः। अस्तु तर्हि प्रकृतेऽप्यर्थत एव नाशावगमः। नहि शब्दशक्त्यैवेति प्रतिज्ञातमस्माभिरित्यत आह– **नचेति**॥ कुतो नेत्यत आह– **नहीति**॥ नहि घटादाविव नामरूपयोरवयवविभागो भेदशब्देनोच्यते इति वक्तुं शक्यते। येन तदनुपपत्त्या नाशं निश्चिनुमः। अद्रव्यत्वात्। नह्यनुपपद्यमानादर्शनेऽप्युपपादके बुद्धिर्भवतीत्यर्थः। यत एवं भेदशब्दः शक्तितो-ऽर्थतश्च न नाशवाचकोऽत उक्तरीत्या पृथक्त्वपर एव। ततश्चैतद्विरोधात्समुद्रादिपदं सप्तम्यन्तमेवेति। उपसंहरति– **अत इति**॥

किञ्च तदेष श्लोकः । अरा इवेत्युक्तार्थसम्मतित्वेनोदाहृतमन्त्रे कलानां परमपुरुषाश्रयत्वस्योक्तत्वात् । अत्रापि पुरुषपदं सप्तम्यन्तमेवेत्याह– **अरा इति**॥ पुरुषशब्दस्य सप्तम्यन्तत्वोपपादनमुपसंहरति– **अत इति** ॥ अरा रथनाभाविव कलाः प्राणाद्याः यस्मिन् प्रतिष्ठिताः तं वेद्यं पुरुषार्थकामैर्ज्ञातव्यं पुरुषं वासुदेवं वेदयथाः जानीध्वं हे शिष्याः न इति कस्यचिद्वाक्यम्। ततश्च मृत्युस्संसारो वो युष्मान् मा परिव्यथाः मा परिव्यथयतु। परमपुरुषाज्ञाने संसारव्यथा भवेत्। सा भवतां मा भवत्विति। एवं चेत् 'समुद्रं प्राप्यास्तं गच्छन्ति' इति 'पुरुषं प्राप्यास्तं गच्छन्ति' इति स्वरूपतिरस्कारोक्तिः कथमित्यतः प्राक् सूचितमेवार्थं विवृणोति– **अस्तगमनं त्विति**॥ एवं समर्थितं वाक्यार्थं वाक्यान्तरसमाख्ययाऽपि समर्थयते– **प्राणादय इति**॥

ननु मदुक्तार्थेऽपि 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति मन्त्रसमाख्याऽस्ति। अत्र हि मुक्तस्य नामरूपाद्विमुक्तत्वमुच्यत इत्यत आह– **नामरूपादिति**॥

**'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' 'ऋचां त्वः पोषमास्ते पुपुष्वान् गायत्रं त्वो गायति शक्करीषु' इत्यादेश्च। अतः सर्वमुक्तेभ्यो-ऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धम्॥ ३॥**

**टीका**–'यस्मिन्नेताः षोडशकलाः प्रभवन्ति' इति कलानां मुक्तौ परमपुरुषाश्रयत्वमभिधाय यथेत्यादितद्विवरणवाक्ये सदृष्टान्तं पुरुषैक्यमुच्यते। यथा लोके इमा नद्यः स्यन्दमानाः स्रवन्त्यो गच्छन्त्य इति यावत्। समुद्रायणाः समुद्रगमन-स्वभावाः समुद्रं प्राप्यास्तं स्वरूपतिरस्कारं गच्छन्ति। तासाञ्च भिद्येते विनश्यतः। नामरूपे गङ्गा यमुना इत्यादिलक्षणे। तद्भेदे समुद्र इत्येवं प्रोच्यते तदुदकलक्षणं वस्तु। एवमेवास्य परिद्रष्टुर्जीवस्येमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति। तासाञ्च नामरूपे प्राण इत्यादिनामरूपे भिद्येते। नाशे च नामरूपयोर्यदनष्टं चैतन्यं तत्पुरुष एवेत्युच्यते विद्वद्भिः। ततस्स एष जीवोऽकलोऽमृतो भवतीति। तदेतत्कथमित्यतो मुक्तेश्वरभेदस्यात्रानुपलभ्यमानत्वाद्यस्मिन्निति तदुक्तिरयुक्तेति शङ्कापरिहाराय भेद एव समर्थ्यत इति भावेनाऽह– **समुद्र इति**॥ समुद्रे पुरुषे इति सप्तमी। न प्रथमेत्यर्थः। तत्कुत इत्यत आह– **भिद्येते इति**॥ समुद्रं प्राप्तानां नदीनां, पुरुषं प्राप्तानां कलानां च परस्परं समुद्रादेश्च विविक्तानामरूप-वत्त्वस्योक्तत्वात्। प्रथमान्तत्वाङ्गीकारे तद्विरोधः स्यात्। नहि नद्यादीनां समुद्रादिभिरैक्यं विविक्तनामरूपवत्त्वञ्चेति युज्यते। अतः सप्तम्यन्तत्वमेवेत्यर्थः। तर्हि भिद्येते तासामित्यादिवाक्यस्य कथं योजनेत्यत आह– **अङ्गैरिति**॥ अस्तं गच्छन्तीत्यस्यानुवादो अङ्गैरिति। तथाहि वक्ष्यति। तथाचेयमक्षरयोजना– नद्यः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति। अज्ञानामदर्शनं गतानामपि तासां समुद्रे स्थितानां नामरूपे भिद्येते विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। एवं कला अपि जीवमोक्षकाले मुक्ताः परमपुरुषं प्राप्यादर्शनं गच्छन्ति। तथापि पुरुषे स्थितानां तासां नामरूपे विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। ततश्च कलादेवतासु मुक्तिं गतासु स एष जीवो नष्टाचेतनकलो भवति। तत एवामृतो भवति। कलानिमित्तं हि मरणमस्येति॥

ननु भिद्येते इत्यस्य नाशोऽर्थो मयाऽङ्गीक्रियते। तत्कथम्। प्रथमान्तत्वे एतद्विरोध इत्यत आह– **नचेति**॥ दृष्ट एव घटो भिन्न इत्यादौ नाशे च प्रयुज्यमानो भेदशब्द इत्यत आह– **घटादावपीति**॥ बहुभावे अवयवविभागे। कथं तर्हि भिन्नो घट इति प्रयोगे नष्ट इति प्रत्ययः श्रोतॄणामित्यत आह– **नाशस्त्विति**॥ भिन्नशब्दाज्ज्ञातावयवविभागेन श्रोत्रा यस्यावयवविभागस्तस्य नाशमन्तरेणा-सावनुपपन्न इत्यनुमानेनैव नाशोऽवगम्यते, न शब्दशक्त्येत्यर्थः। अस्तु तर्हि प्रकृतेऽप्यर्थत एव नाशावगमः। नहि शब्दशक्त्यैवेति प्रतिज्ञातमस्माभिरित्यत आह– **नचेति**॥ कुतो नेत्यत आह– **नहीति**॥ नहि घटादाविव नामरूपयोरवयव-विभागो भेदशब्देनोच्यते इति वक्तुं शक्यते। येन तदनुपपत्त्या नाशं निश्चिनुमः। अद्रव्यत्वात्। नह्यनुपपद्यमानादर्शनेऽप्युपपादके बुद्धिर्भवतीत्यर्थः। यत एवं भेदशब्दः शक्तितो-ऽर्थतश्च न नाशवाचकोऽत उक्तरीत्या पृथक्त्वपर एव। ततश्चैतद्विरोधात्समुद्रादिपदं सप्तम्यन्तमेवेति। उपसंहरति– **अत इति**॥

किञ्च तदेष श्लोकः । अरा इवेत्युक्तार्थसम्मतित्वेनोदाहृतमन्त्रे कलानां परमपुरुषाश्रयत्वस्योक्तत्वात् । अत्रापि पुरुषपदं सप्तम्यन्तमेवेत्याह– **अरा इति**॥ पुरुषशब्दस्य सप्तम्यन्तत्वोपपादनमुपसंहरति– **अत इति** ॥ अरा रथनाभाविव कलाः प्राणाद्याः यस्मिन् प्रतिष्ठिताः तं वेद्यं पुरुषार्थकामैर्ज्ञातव्यं पुरुषं वासुदेवं वेदयथाः जानीध्वं हे शिष्याः न इति कस्यचिद्वाक्यम्। ततश्च मृत्युस्संसारो वो युष्मान् मा परिव्यथाः मा परिव्यथयतु। परमपुरुषाज्ञाने संसारव्यथा भवेत्। सा भवतां मा भवत्विति। एवं चेत् 'समुद्रं प्राप्यास्तं गच्छन्ति' इति 'पुरुषं प्राप्यास्तं गच्छन्ति' इति स्वरूपतिरस्कारोक्तिः कथमित्यतः प्राक् सूचितमेवार्थं विवृणोति– **अस्तगमनं त्विति**॥ एवं समर्थितं वाक्यार्थं वाक्यान्तरसमाख्ययाऽपि समर्थयते– **प्राणादय इति**॥

ननु मदुक्तार्थेऽपि 'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति मन्त्रसमाख्याऽस्ति। अत्र हि मुक्तस्य नामरूपाद्विमुक्तत्वमुच्यत इत्यत आह– **नामरूपादिति**॥

वीत्युपसर्गस्य वर्जनार्थतायाः विप्रियादिशब्दे दर्शनादत्रापि तथात्वेन विमुक्त इत्यमुक्तत्वमुच्यत इत्यर्थः। नच समासानुपपत्तिः। मुक्तशब्दस्य भावप्रधानत्वोपपत्तेः। भावे वाऽयं क्तप्रत्ययः। ततश्च विगतं मुक्तं मुक्तिरस्मादित्यतिचतुरस्रम्। एवं सति पूर्वार्धोक्तदृष्टान्तविरोधः स्यात्। तत्र नामरूपे विहायेति तद्धानस्योक्तत्वादित्यत आह– **नामरूपे इति**॥ पूर्वत्र पूर्वार्धेऽपि अविहायेत्येव योज्यम्। नतु विहायेतीत्यर्थः। कुत एवं पूर्वोत्तरार्धयोजनेत्यत आह– **अनन्तमिति**॥ विश्वेदेवा इति रूपस्यानन्तत्वमुच्यते। मोक्षेऽपि भेदश्रुतिबाहुल्याच्चैवमेवार्थ इत्याह– **यत्रेति**॥ श्रुतिविरोधादेव मणीवादिवदत्राप्यप्रगृह्यत्वं वक्तव्यम्। एतत्प्रश्नप्रतिवचनार्थं प्रसङ्गादुपसंहरति– **अत इति**॥ ३ ॥

**वामन**–समुद्र इत्येवं प्रोच्यते। पुरुष इत्येवं प्रोच्यते। इत्यनयोर्दृष्टान्तदार्ष्टान्तिकवाक्ययोः समुद्रे पुरुषे चेति पदच्छेदं करोति। स यथेमा नद्यः स्यन्दमाना इति दृष्टान्तवाक्येन नद्यः समुद्रे स्थिता इत्येवं भेद एवोच्यते। एवमेवास्येति दार्ष्टान्तिकवाक्येऽपीमाः कलाः पुरुषे स्थिता इत्येवं भेद एवोच्यते। कुतस्तासां नदीनां नामरूपे समुद्रस्य नामरूपाभ्यां भिद्येते इत्युभयत्रापि भेदस्यैवोक्तत्वात्। अथ समुद्रः पुरुष इति पदं छित्वा ताः समुद्रा भवन्ति इमाश्च पुरुषा भवन्तीत्येवमभेदः प्रोच्यत इत्यङ्गीकारे तत्तन्नामरूपयोर्भेदविधिविरोधः स्यात्। अनयोर्वाक्ययोरभिप्रायं वक्ति– **अङ्गैरिति** ॥ अत्र भिद्येते इति भेदशब्दस्य नाशार्थत्वमित्याशङ्क्य परिहरति– **नचेति** ॥ भेदशब्दार्थं निगमयति – **अत इति** ॥ नामरूपयोः पृथक्त्वमेवोच्यते। नतु नाशः। वाक्यशेषेऽप्याधाराधेयभावेन भेदोक्तेः। अथ वाक्यार्थं निगमयति– **अत इति** ॥ नच 'अस्तं गच्छन्ति' इत्यपि नाश उच्यत इत्याह– **अस्तगमनं त्विति** ॥ अविज्ञेयत्वं स्थानान्तरप्रवेशान्मुक्तानां नामरूपप्रहाणमन्यत्रापि नोच्यत इत्याह– **नामरूपादिति** ॥ नामरूपाभ्यां मुक्तो न भवतीति विमुक्त उच्यते। प्रियो न भवतीति विप्रिय इतिवत्। नच तत्र नामरूपे विहायेति पूर्ववाक्यविरोधः। तत्राप्यविहायेत्यभिप्रेतत्वात्। नामरूपयोरनन्तत्वमनन्तकालीनत्वम्। 'यत्र पूर्वे साध्याः सन्ति देवाः' इत्यादिश्रुत्युपन्यासादिहोक्तानां प्राणादिदेवतानां पूर्वापरकालवर्तिना-

मप्यनन्तपरम्पराणां परमपुरुषाद्भिन्नत्वं तदुपासनान्मोक्षं स्वेच्छयैव सञ्चरणादिकं सर्वकामभोगं सर्वविद्याभिरपि भगवद्ध्यानं चेत्यादि बहूनर्थविशेषानभिप्रेतान् प्रकटयति। अस्यामुपनिषद्यादित आरभ्य उक्तमर्थमशेषं निगमयति– **अतः सर्वमुक्तेभ्योऽप्युत्तमोत्तमः परिपूर्णो नारायण इति सिद्धमिति** ॥ ६-३ ॥

**प्रकाशिका**–'अनुपलभ्यमानत्वाद्यस्मिन्निति तदुक्तिः' इत्यत्र यस्मिन्निति वाक्ये तदुक्तिः भवद्भिः कथितजीवेश्वरभेदोक्तिरयुक्तेति शङ्कितुरभिप्रायः। अदर्शनं गच्छन्तीत्यत्रामुक्तानामदर्शनं गच्छन्तीत्यर्थः।

'बहुभाव एव भेदशब्दः प्रयुज्यते' इत्यत्र अत एवाऽऽमघटे स्वरूपत एव जलेन द्रवीभूते सति, अग्निना पटे स्वरूपत एव दग्धे सति च भिन्नो घटो, भिन्नः पट इति च प्रयोगो न दृश्यते, किन्तु नष्ट इत्येव प्रयोगः। शकलीभूतघटपटयोरेव भिन्नो घटो, भिन्नः पट इत्यादिव्यवहारो जायत इति। 'भिदॢ विदारण' इति हि धातुः, नतु विनाश इति युक्तिरनुसन्धेया। 'अरा इव रथनाभौ' इत्यत्रारशब्देनान्योन्यसन्धायकतया निर्मिता अयश्शलाका उच्यते। अत्र चारा इति रथनाभाविति च नामभेदस्य रूपभेदस्य च स्फुटतयोक्तत्वात् पूर्ववाक्येऽपि भेदोऽन्योन्याभाव एव, नतु नाशः। 'विप्रियादिशब्दे दर्शनात्' इत्युपलक्षणम्। 'विर्निषेधे पृथग्भावे' इत्यनुशासनादित्यपि द्रष्टव्यम्। 'नच समासानुपपत्तिः' इत्यत्र वीत्युपसर्गस्य विगत इत्यर्थग्रहणे समासानुपपत्तिरित्यर्थः। अनुशासन-बलेन विशब्दस्य निषेधार्थकत्वे विमुक्त अमुक्त इत्येवार्थकथनान्न काचिदनु-पपत्तिरित्यनुसन्धेयम् ॥ ३ ॥

षट्प्रश्नोपनिषद्भाष्यटीकार्थकथनेन मे।
प्रीतो हयमुखः श्रीमान् कामादीन् हन्तु षड्रिपून्॥

**इति श्रीमत्कविकुलतिलकवादिराजपूज्यचरणविरचिता**
**षट्प्रश्नोपनिषद्भाष्यटीकाटिप्पणी समाप्ता**

**श्रीनिवास**– भवतीति पुरुषैक्यमुच्यत इत्यन्वयः॥ **तत्कथमिति** ॥ परस्परविरुद्धं वाक्यद्वयं कथमित्यत एकवाक्योक्तं स्वीकृत्य अपरवाक्योक्त-मयुक्तमिति वाच्यम्। तत्र वयं वदामो यस्मिन्नित्याश्रयत्वेन भेदोक्तिरेवायुक्तेति

कुत इत्यतस्तत्र हेतुः— **मुक्तेश्चेरेति** ॥ यथेत्यादितद्विवरणवाक्य इति शेषः। इति शङ्कापरिहारायेत्यर्थ :। समर्थ्यत इति । यथेत्यत्राविरोधमेवोपपादयति— **नहीति** ॥ **विविक्तेति** ॥ भेदोपपादकमिति शेषः। ननु तस्यायमनुवाद इति कुतो ज्ञायत इत्यतो वक्ति— **तथाहीति** ॥ अस्तगमनं त्वित्युत्तरत्रेत्यर्थः॥ **कलानिमित्तमिति** ॥ पञ्चमहाभूतैकादशेन्द्रियरूपषोडशकलात्मकदेहसम्बन्धस्यैवोत्पत्तिमत्त्वेन तत्सम्बन्धनाशस्यैव मरणत्वादिति भावः। भेदशब्दो दृष्ट एवेत्यन्वयः। विभागेन विभागवता अनुमानेन अयं नष्टोऽवयवविभागवत्त्वाद्घटवदित्यनुमानं द्रष्टव्यम्। अर्थत एव अवयवविभागा येन घटादाविव नामरूपयोरवयवविभागो यदि भेदशब्देन यद्युच्यतेति यावत्। तदनुपपत्त्या तस्यावयवविभागस्य नाशं विनानुपपत्त्येत्यर्थः। ननु नामरूपे भिद्यत इत्यत्र नामरूपयोर्भेदशब्देनावयवविभागाङ्गीकारे को दोष इति चेन्न। द्रव्य एवावयवानां सत्त्वेन तत्रैव तद्विभागसम्भवात्। नामरूपयोश्चाद्रव्यत्वात्तत्रावयवविभागोक्तिरयुक्तेत्याह— **अद्रव्यत्वादिति** ॥ नन्ववयवविभागासम्भवेऽपि नाशो भेदशब्दार्थतयावगम्यत इति चेन्नेत्याह— **नहीति** ॥ **प्राक्सूचितमिति**॥ अज्ञैरनवगतान्यपीत्यनेनेत्यर्थः॥ **नच समासानुपपत्तिरिति**॥ 'समर्थः पदविधिः' समर्थं सुबन्तं समर्थेन सुबन्तेन समस्यत इत्युक्तत्वेन विगतो मुक्तो यस्मादिति विग्रहे मुक्तशब्दोक्तमुक्तिमत्पुरुषवियोगस्यैव प्राप्त्या मोचनरूपक्रियावियोगस्याप्राप्त्यार्थाबाधरूपयोग्यतापरपर्यायसामर्थ्याभावेन वीत्युपसर्गस्य मुक्तपदेन समासोऽनुपपन्न इत्यर्थः। ननु अव्ययं विभक्तिसमीपसमृद्धिवृद्ध्यर्थाभावेत्यादिनाऽर्थाभावे यदव्ययमिति मक्षिकाणामभावो निर्मक्षिकमितिवत् मुक्ताभावो मुक्त इत्यव्यीभावसमासः किन्न स्यादिति चेन्न। एवमपि मुक्तशब्दोक्तपुरुषाभावस्यैव प्राप्त्योक्तरीत्या सामर्थ्येन समासानुपपत्तिरेव। किञ्चाव्ययीभावत्वेऽव्ययीभावश्चाव्ययीभावो नपुंसकं स्यादिति निर्मक्षिकमितिवत् विमुक्तमिति नपुंसकनिर्देशः स्यादित्यपि दोषो द्रष्टव्यः। ननु न ब्राह्मणोऽब्राह्मण इत्यादिवन्न मुक्तो विमुक्त इति नञ्समासः कस्मान्न स्यादिति चेत्सत्यम्। अत्र नामरूपाभ्यां मुक्तो न भवतीत्यर्थाबाधरूपसामर्थ्यस्याप्राप्तत्वान्नञ् इति सूत्रेण

नञः समासो वक्तव्यः। नचासावत्र सम्भवति। वीत्युपसर्गस्य नत्वाभावादिति पुनः समासानुपपत्तिरेवेति प्रकारान्तरेणैतद्वाक्यार्थोपपादनं कार्यम्॥ **भावेति** ॥ तथाच मुक्तो मुक्तत्वम्। मुक्तत्वशब्देन च धूमवतो भावो धूमवत्त्वम्। धूम एवेतिवन्मुक्तत्वस्य भावे धर्मो मुक्तत्वं मुक्तिरेवेत्यायाति। तथाच विगतं मुक्तत्वं नाम मुक्तिर्यस्मादिति भावप्रधानं कृत्वा बहुव्रीहिसमासकरणे नानुपपत्तिरित्यर्थः॥

भावप्रधानमकृत्वा इममेवार्थं प्रकारान्तरेणानयति– **भावे वेति** ॥ पक्षद्वयेऽप्यर्थस्त्वेक एव। परं तु पूर्वे भावप्रधानकरणमिदानीं तदभाव इत्येतावानेव विशेषो बोध्यः। अतिचतुरस्रम्। अत्युपपन्नमित्यर्थः। विश्वेदेवा इति रूपस्येति। अनन्तं नामेति नामप्रपञ्चस्यानन्तशब्देन नाशाभावमुक्त्वा 'अनन्ता वै विश्वेदेवाः' इति समस्तदेवरूपप्रपञ्चस्यार्थरूपप्रपञ्चस्यापि नाशाभावोऽनन्तशब्देनोच्यत इत्यर्थः।

ननु 'ईदूदेद्द्विवचनं प्रगृह्यम्' ईदूदेदन्तं द्विवचनान्तं प्रगृह्यसंज्ञं स्यात् । न सन्धिं यातीत्यर्थः इत्युक्तत्वादस्य च ईदन्तत्वात् गङ्गे अमू इत्यादिवत् नामरूपे अविहाय इति प्रगृह्यसंज्ञं स्यादिति शङ्कायां तत्रोक्तम्– **मणीवादिवदिति** ॥ 'मणीवादिना' इति वार्तिकेन मणीवादिगणोपरि प्रगृह्यसंज्ञानिषेधात्तस्य चाकृतिगणत्वात् मणी इव मणी वा, रोदसी इव रोदसी वेतिवन्नायं नामरूपेऽविहाय नामरूपे विहायेति सन्धिर्ज्ञातव्य इत्यर्थः। ननु बलादेवं पदं विच्छिद्य तत्र प्राप्तानुपपत्तिपरिहाराय मणीवादित्वसमाधानाय सः कुतः विहायत्येव न पदं क्रियत इत्यत उक्तम्॥ **श्रुतीति** ॥ अनन्तं वा इत्यादि श्रुतिरित्यर्थः ॥ ६-३॥

**छलारी–स्रवन्त्य इति**। स्यन्दू प्रस्रवणे इति धातोः । गच्छन्त्य इति तु तात्पर्यकथनम्। समुद्रायणा इत्यत्र अय पय गतावित्यतः भावे ल्युटि समुद्रं प्रति अयनं गमनमेषामस्तीति नित्ययोगे 'अर्श आद्यच्' इति भावेनाह– **समुद्रगमनस्वभावा इति** ॥ **अस्तमिति** ॥ असु क्षेपण इत्यतः नपुंसके भावे क्त इति क्तप्रत्यय इति भावः॥ **नामरूपे गङ्गायमुनेत्यादिलक्षण इति** ॥ नामशब्दात्मकं

**रूपं** तद्वाच्यार्थात्मकमित्यर्थः। नतु रूपशब्देन शुक्लादिकं गृह्यत इति ज्ञेयम्। पुरुष इत्येवं प्रोच्यत इत्यत्र पुरुषशब्दस्य विशेषादर्शनात्तदध्याहारति– **यदनष्टं चैतन्यमिति** ॥ एवं दृष्टान्ते तदुक्तलक्षणं वस्त्वित्यत्रापि सङ्गतिर्द्रष्टव्या॥ **तदेतत्कथमिति** ॥ तस्मात्प्राणमसृजतेत्यादिवाक्ये प्राणादिदेवानां विष्णोश्च मुक्तौ तारतम्यकथनपरत्वेन कथं व्याख्यातमित्यर्थः । इत्यत इत्यस्य भेद एव समर्थ्यत इति भावेनेत्यनेनान्वयः॥ **मुक्तेश्वरभेदस्यानुपलभ्यमानत्वादिति**॥ समुद्र इत्येवं प्रोच्यत इत्यादिमूलसङ्गत्यनन्तरं अस्यार्थः। यस्मिन्निति भेदप्रयुक्ताश्रयत्वोक्तिः कथम्? अस्मिन्प्रकरणे भेदस्याप्रतीतेरित्याशङ्कापरिहाराय चेति। अस्यापि भेद एव समर्थ्यत इति भावेनाहेत्यनेनान्वयः॥ **नाशोऽर्थ इति** ॥ मुद्गरेण घटो भिद्यत इत्यादौ तथा प्रतीतेरित्यर्थः॥ **अनुमानेनेति** ॥ मूले अर्थत इत्यनेनार्थापत्तिरूपमनुमानं गृह्यते। अत्रापत्तिरित्यत्रार्थापत्तिः अर्थाल्लिङ्गदर्शनादापत्तिः प्रमेयज्ञानम्। यथा पीनत्वदर्शनेन रात्रिभोजनज्ञानम् । तथा चार्थत इत्यत्रानुपपद्यमानदर्शनाद्घटावयवविभागदर्शनात्। घटस्य नाशोऽवगम्यत इति अर्थापत्तिरूपानुमानेन नाशोऽवगम्यत इत्युक्तं भवति॥ **अद्रव्यत्वादिति** ॥ घटादिवत् प्रत्यक्षेण प्रतीयमानावयवविभागशून्यद्रव्यत्वादित्यर्थः। पक्षे हेतुमुपपादयति– **नहीति** ॥ नद्यादावयवविभागानां प्रत्यक्षेण प्रतीतावपि नाशानुमानं नहि सम्भवि। घटावयवानां समुद्रावयवैर्मिश्रत्वरूपसंयोगमात्रप्रतीतेरिति भावः॥ **उपसंहरतीति** ॥ भाष्ये भिन्नानि प्रतिष्ठितानीति नपुंसकलिङ्गपदयोर्नामानि रूपाणीति। पूर्वोक्तपदाभ्यामन्वयः॥ **अरा इति** ॥ धारा इत्यर्थः॥ **वेदयथा जानीध्वमिति**॥ उत्तरत्र मा व इति बहुवचनप्रयोगात् वेदयथा इत्येकवचनव्यत्ययेन बहुवचनं कृतम्। तेषां मोक्षफलोक्तेस्तत्साधनज्ञानस्यापेक्षितत्वाण्णिजपि स्वार्थे कृतः॥ **मा परिव्यथाः मा परिव्यथयत्विति**॥ न भयं प्रापयत् न समचालयत्। तत्त्वज्ञानादिति शेष इति वा। व्यथ भयसञ्चलनयोः इति धातोरन्तर्णीतण्यर्थाल्लेटि तिप्स्थाने व्यत्ययेन मध्यमपुरुषशिबादेशे अडागमे इतश्च लोपे परस्मैपदेषु इतीकारलोपे सस्य रुत्वविसर्गयोर्मूले परिव्यथा इति रूपं सिद्धम्। अत्र निषेधार्थको माशब्दः प्रयुक्तः। तेन माङ्योगाभावात् 'माङि लुङ्' इति लुङन्तम्। अनेनैवाशयेन टीकायां

निषेधार्थकं माशब्दं प्रयुज्य परिव्यथा इत्यस्य प्रतिपदं परिव्यथयत्विति लोट्प्रयोगः कृतः। लिङर्थे लोडिति विधिनिमन्त्रणेत्यनुवृत्तौ लोट् चेति लोट्समानाथत्वोक्तेः। अत्र लेट् लोडर्थस्तु प्रार्थना ग्राह्या। जानीध्वमिति मध्यमपुरुषप्रयोगबलात् हे शिष्या इत्यध्याहृतम् । सम्मतित्वेनोदाहृतस्य शाखान्तरस्थत्वेन पिप्पलादेर्वाक्यत्वाभावात् कस्येदं वाक्यमित्यत आह– **कस्यचिद्वाक्यमिति** ॥ तच्छाखाद्रष्टुरित्यर्थः॥ **प्राक्सूचितमिति** ॥ समुद्रं प्राप्यास्तं गच्छन्तीत्यत्र पूर्वं भाष्ये अज्ञैरनवगतानीत्यनुवादेनास्तं गच्छन्तीत्यस्य अज्ञैरनवगतत्वमेवार्थ इति सूचितमिति भावः॥ **आदित्यवदिति** ॥ भाष्यस्य यथा मेरोः पूर्वभागे विद्यमानं प्रति मेरोः पश्चिमभागे विद्यमानस्याप्यस्तङ्गमनं नाम तदज्ञेयत्वम्। तथा मुक्तपुरषाणामपि परमपुरुषेऽस्तगमनं नाम संसार्यज्ञेयत्वमित्यर्थः॥ **आदित्यवदिति** ॥ 'तत्र तस्यैवेति षष्ठ्यन्ताद्वतिः– **मदुक्तार्थेऽपीति** ॥ समुद्रप्रविष्टनदीनां ब्रह्मप्रविष्टमुक्तानां नामरूपाभाव इत्यर्थः॥ **वर्जनार्थताया इति** ॥ 'विर्लये च विशेषे च वैपरीत्यादिषु स्मृतः' इति एकाक्षररत्नमालायाम्। विशब्दः लय विशेषणवैपरीत्यादिषु स्मृत इत्युक्तेः । अत्र विशब्दस्य वैपरीत्यार्थग्रहणात्। मुक्तवैपरीत्यं नाम मुक्त्यभावार्थप्रतीतेः। नामरूपराहित्यस्यैव प्रतीतेरिति भावः॥ **नच समासानुपपत्तिरिति** ॥ विशब्दस्यात्र वर्जनार्थकत्वे मुक्तशब्दस्य पुरुषवाचकत्वात्। समासान्तरानुपपत्तेः बहुव्रीहिसमासस्य तु नामरूपादितिपदेनान्वयानुपपत्तिरिति भावः ॥ **भावे वेति** ॥ नपुंसके भावे क्त इत्युक्तेः। तदेव स्पष्टयति– **ततश्चेति** ॥ भावप्रधानपक्षे तु विगतं मुक्तं मुक्तत्वं यस्मादिति विग्रहो ज्ञेयः। अतिचतुरस्रं सर्वथानुपपत्तिशून्यमित्यर्थः॥ **अविहायेति योज्यमिति** ॥ नञ्प्रश्लेषं कृत्वेत्यर्थः। नन्वेवमकारप्रश्लेषोऽनुपपन्नः। नामरूपे इत्यस्येदं तद्विवचनत्वेन इदूदेदिति प्रगृह्यसंज्ञकत्वात् प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावप्राप्तेरिति चेन्न। संज्ञापूर्वको विधिरनित्य इत्युक्तेः। वैदिकत्वाच्चास्य प्रयोगस्यानुपपत्त्यभावात्। 'पुत्रेति तन्मयतया' इति भागवतप्रयोगाच्च॥ **रूपस्यानन्तत्वमिति** ॥ पूर्वं नामानन्तत्वोक्तिसामर्थ्यात्। उत्तरत्र 'अनन्ता वै विश्वेदेवाः' इत्यत्र तत्प्रतियोगित्वेनोपलक्षणतया रूपग्रणादिति भावः। अनन्तत्वं नाम नाशराहित्यम्। एवं नाम्नोऽनन्तत्वमपि नाशराहित्यमेव ॥

**एवमेवार्थ इति**॥ भिद्येते चासां नामरूपे इति दार्ष्टान्तिकवाक्यस्येति शेषः। भाष्येऽप्यत्र पूर्वे इति गृहीतश्रुतिवाक्यस्य 'यज्ञेन यज्ञमयजन्त' इति पूर्ववाक्येनान्वयः। मन्त्रार्थस्तु देवः यज्ञेन ज्ञानकर्मात्मकेन यज्ञं विष्णुं "यज्ञो विष्णुर्देवता" इति श्रुतेः। अयजन्त पूजितवन्तः। यज देवपूजासङ्गतिकरणदानेष्विति धातोः। तानि देवाः प्रथमानि मुख्यः धर्माणि धारकाः आसन्नभवन्। नपुंसकत्वाच्छान्दसम्। देवा यत्र यस्मिन्लोके पूर्वेण साध्याः देवाः बह्मादयः सन्ति। तत्र महिमानः स्वयोग्यमाहात्म्योपेताः नाकं कं सुखं तद्विरुद्धमकं दुःखं तद्विरुद्धं अतिसुखं सचन्ते प्राप्नुवन्ति। यत्र पूर्वे इति बहुवचनप्रयोगान्मुक्तानां भेदसिद्धिः। 'स तत्र' इति वाक्ये तु उत्तरत्र स्त्रीभिर्वा यानैर्वा युक्तः स मुक्तः। तत्र वैकुण्ठादौ पर्येति। परितः एति इत्युक्तेर्भेदसिद्धिः। 'सोऽश्नुत' इति वाक्येऽपि हृदयगुहायां निहितं ब्रह्म यो वेद सः विपश्चिता ब्रह्मणा सह सर्वान्कामानश्नुते भुङ्क्ते। अत्र सहोक्तेर्भेदसिद्धिः। 'ऋचां त्व' इति मन्त्रस्यायमर्थः। त्वः कश्चित् ब्रह्मा मुक्तिस्थान इति शेषः। ऋचां पोषं पुपुष्वान्पुष्टिं कुर्वन्नास्ते। त्वः कश्चिद् ब्रह्मा शक्करीषु छन्दस्सु गायत्रं साम गायति। त्वः ब्रह्मा जातविद्यां पौरुषेयविद्यां वदति । शिष्यान्प्रतीति शेषः। ब्रह्मा यज्ञस्य विष्णोः मात्रामंशं रामादिकम्। विमिमीते विशेषेण जानातीति। अत्र पादचतुष्टये त्वशब्दचतुष्टयात् ब्रह्मणः बहुत्वावगमात् मुक्तानां भेदसिद्धिः। ननु निरुक्ते पादचतुष्टयस्य होत्रादिऋक्चतुष्टयपरत्वेन व्याख्याततत्वाद् ब्रह्मशब्दस्यैकस्यैव सत्वान्नानुपपत्तिरिति चेन्न। ब्रह्मा त्व इत्यत्र ब्रह्मशब्दविशेषणस्य त्वशब्दस्य वैय्यर्थ्यप्राप्तेः । यज्ञे एकस्यैव ब्रह्मणः सत्वात्। ब्रह्मणः यज्ञे जातविद्यात्वस्याप्रसिद्धेश्च। ननु नामरूपे विहायेत्यत्र नञः प्रश्लेषानङ्गीकारे बाधकं वदन् संज्ञापूर्वको विधिरनित्य इति समाधाने सत्यपि स्पष्टत्वात्तदनुक्त्वा समाधानान्तरमाह– **श्रुतिविरोधादेवेति** ॥ नच वाच्यं 'मणीवादीनां प्रतिषेधो वाच्यः' इति काशिकोक्तं मुनित्रयानुक्तत्वादप्रमाणम्। मणीवाष्ट्रस्य लम्बेतेत्यादिभारतप्रयोगस्तु वा इति पदच्छेदेन समाधेयः। ननु इवेति पदच्छेदेनेति कैय्यटोक्तं ग्राह्यमिति। कैय्यटापेक्षया काशिकायाः प्राचीनत्वेन तेन वार्तिकेन धृते वाक्ये

मुनित्रयानुक्तत्वस्य सन्दिग्धत्वात्। ननु एतावता ग्रन्थेनाभेदखण्डनेन भेदोपसंहारे कर्तव्ये सर्वोत्तमत्वोपसंहारः कुतः क्रियत इत्यत आह– **प्रसङ्गादिति**॥ एतत्प्रश्न-प्रतिवचनस्य विष्णोर्मुक्तौ प्राणादिषोडशकलाधारकत्वेन सर्वोत्तमत्वप्रतिपादनार्थं प्रवृत्तत्वेन ब्रह्मप्रतिपादनस्यैव मुख्यत्वात्। अद्वैतखण्डनपूर्वकभेदसमर्थनस्य सर्वोत्तमत्वसिद्ध्यर्थं कृतत्वात्। तेन तस्य स्मृतत्वादिति भावः॥ ६-३ ॥

**ताम्रपर्णी**–उपनिषदि पूर्वोत्तरग्रन्थयोर्विरोधमाशङ्क्य तत्परिहारकत्वेन मता-न्तरमुत्थाप्य तद्दूषणपरत्वेन भाष्यमवतारयति– **यस्मिन्नेता इत्यादिना**॥ **तदेतदिति**॥ तत् उपक्रमवाक्योक्तं कलानां परमपुरुषाश्रयत्वम्। एतत् विवरण-वाक्योक्तमैक्यञ्च कथम्, विरोधादित्यतो मुक्तेश्वरभेदस्यानुपलभ्यमानत्वाद-प्रामाणिकत्वात् अस्मिन्निति मुक्तानां तदाश्रयत्वोक्तिरयुक्ता अतः सा सगुण-मुक्तिपरा योज्येति शङ्कापरिहाराय उपक्रमोक्ताभेद एवोत्तरत्र समर्थ्यते न विरोधः नापि परकीयसमाधानमितिभावेनाहेत्यर्थः॥ **कथं योजनेति** ॥ अस्तं स्वरूप-तिरस्कारं गच्छति । भिद्यतेत्यनयोः कथं योजना। स्वरूपसत्त्वे खलु भेदचिन्तेति भावः॥ **अद्रव्यत्वादिति** ॥ अत्र रूपशब्देन शुक्लादिगुणस्यापि ग्रहणादवयव-विभागस्य द्रव्यनिष्ठत्वादिति भावः। नच समासानुपपत्तिरिति कर्तरि क्तप्रत्यय-विधानाद्विगतो मुक्त इति विग्रहे समासानुपपत्तिरित्यर्थः। अतिचतुरस्रमिति भावप्रधाननिर्देशस्यागतित्वादिति भावः॥ **रूपस्येति** ॥ रूपपदेन नाम-प्रतिपाद्यस्य द्रव्यस्यापि विवक्षितत्वान्नामानन्तं नाशरहितं विश्वेदेवाश्चानन्ता इति रूपस्यानन्तत्वमुच्यत इत्यर्थः। नन्वविहायेति पदच्छेदे 'ईदूदेद्द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञायां 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावविधानादकारप्रश्लेषेणैव पाठः स्यादित्यत आह– **श्रुतिविरोधादेवेति**॥ **मणीवादिवदिति** ॥ मणीवादिगणप्रविष्टस्य प्रकृतिभावनिषेधात्तस्य चाकृतिगणत्वात्तद्वदत्राप्यगृह्यत्वं वक्तव्यम्। अन्यथा 'अनन्तं वै नाम' इत्यादि श्रुतिविरोधादिति भावः। प्राक्प्रश्नार्थानामनुपसंहृतत्वादाह– **प्रसङ्गादिति**॥ भाष्योपसंहारप्रसङ्गादित्यर्थः। सर्वमुक्तोत्तमत्वे विवादस्य प्रसक्तत्वादिति वा। प्राचीनटीकायां तु अस्या-मुपनिषदि आदित आरभ्य उक्तमशेषार्थं निगमयतीत्यवतारितम्॥ ६-३ ॥

**मङ्गालीय–स्रवन्त्यो गच्छन्त्य इति** ॥ स्यन्दू प्रस्रवण इति धातोर्गच्छन्त्य इति तात्पर्यकथनम्। समुद्रायणा इत्यत्राय पय गताविति धातोर्भावे ल्युटि समुद्रं प्रति अयनं गमनमासामस्तीति नित्ययोगेऽर्श आद्यजिति भावेनाह– **समुद्र-गमनस्वभावा इति** ॥ **अस्तमिति** ॥ असु क्षेप इत्यतः नपुंसके भावे क्त इति क्तप्रत्यय इति भावः॥ **नामरूपे गङ्गायमुना इत्यादिलक्षणे इति** ॥ नामशब्दात्मकं रूपं तद्वाच्यार्थात्मकमित्यर्थः। नतु रूपशब्देन शुक्लादिकं गृह्यत इति ज्ञेयम्॥ **तद्भेद इति** ॥ तन्नाश इत्यर्थः। पुरुष इत्येवं प्रोच्यत इत्यत्र विशेष्यादर्शनात्तदध्याहरति– **यदनष्टं चैतन्यमिति** ॥ एवं दृष्टान्तेऽपि तदुदक-लक्षणं वस्त्वित्यत्रापि सङ्गतिर्द्रष्टव्या। अकलोऽमृतो भवतीतीतिशब्दस्य पुरुषैक्यमुच्यत इति पूर्वेणान्वयः॥ **तदेतत्कथमिति** ॥ यस्मिन्नेता इति वाक्येन भेदसापेक्षं कलानां मुक्तौ पुरुषाश्रयत्वमभिधाय यथेत्यादितद्विवरणपरे वाक्ये तद्विरोध्यभेदवचनं कथमित्यर्थः। इत्यत इत्यस्य भेद एव समर्थ्यत इति भावेनाहेत्यनेनान्वयः। यथेत्यादिवाक्यस्य भेदसमर्थनपरत्ववचनेनोत्तरवाक्ये तद्विरोध्यभेदः कथमुच्यते इति शङ्कानिरासेऽपि तत्र भेदसमर्थनस्य किं फल-मित्याशङ्क्य यस्मिन्नित्यादिवाक्ये मुक्तकलानां पुरुषाश्रितत्वोपयुक्ततयाभि-मतभेदस्यानुपलभ्यमानतया यस्मिन्नित्यनेन भेदसापेक्षाश्रयाश्रयिभावोक्ति-रयुक्तेत्याशङ्कानिरासफलकत्वाद्यथेत्यादिवाक्यकृतभेदसमर्थनस्य न वैयर्थ्यमि-त्यभिप्रेत्याह– **मुक्तेश्वरभेदस्येति** ॥ अनुपलभ्यमानत्वात्प्रमाणेनेति शेषः॥ **यस्मिन्निति तदुक्तिरिति** ॥ भेदसापेक्षाश्रयाश्रयिभावोक्तिरित्यर्थः॥ **इति शङ्कापरिहारायेति** ॥ इत्याशङ्क्य प्रतिवचनकर्त्रापि पिप्पलादेन भेद एव समर्थ्यत इत्यर्थः। नत्वभेद उच्यत इत्येवकारार्थः। केचित्तु– **तदेतत्कथमितीति** ॥ तत्तस्मात्स प्राणमसृजतेत्यादिवाक्यस्य प्राणादिदेवानां विष्णोश्च मुक्तौ तारतम्यकथनपरत्वेन कथं व्याख्यानमित्यत इत्यस्य भेद एव समर्थ्यत इति भावेनाहेत्यनेनान्वयः। मुक्तेश्वरभेदस्यात्रानुपलभ्यमानत्वादिति समुद्र इत्येवं प्रोच्यत इति मूलस्य सङ्गत्यन्तरम्। अस्यार्थः–यस्मिन्निति भेदप्रयुक्ता-श्रयत्वोक्तिः कथम्? अस्मिन्प्रकरणे भेदस्याप्रतीतेरित्याशङ्कापिराहाराय चेति।

अस्यापि भेद एव समर्थ्यत इति भावेनाहेत्यनेनान्वयः इति व्याचक्षते– **तथाहि वक्ष्यतीति** ॥ अस्तगमनं त्वादित्यवदज्ञानामविज्ञेयत्वमेवेत्यनेनेत्यर्थः॥ **नाशोऽर्थ इति** ॥ मुद्गरेण घटो भिद्यत इत्यादौ तथा प्रतीतेरिति भावः॥ **अनुमानेनेति** ॥ मूले अर्थत इत्यनेनार्थापत्तिरूपानुमानं गृह्यते। अर्थापत्तिरित्यत्रार्थादापत्तिः। अर्थात् लिङ्गदर्शनात् आपत्तिः प्रमारूपं ज्ञानम्। यथा पीनत्वदर्शनेन रात्रिभोजनज्ञानम्। तथा घटो भिद्यत इत्यत्रानुपपद्यमानदर्शनात् घटावयवविभागदर्शनाद्घटस्य नाशोऽवगम्यत इत्यर्थापत्तिरूपानुमानेन नाशोऽवगम्यत इत्युक्तं भवति– **अद्रव्यत्वादिति** ॥ घटादिवत्प्रत्यक्षेण प्रतीयमानावयवविभागशून्यद्रव्यत्वादित्यर्थः। यद्वाऽवयवानारब्धद्रव्यत्वादित्यर्थः। एतच्च दार्ष्टान्तिकाभिप्रायेणोक्तमिति मन्तव्यम्॥ **तद्विरोधादिति** ॥ पृथक्त्ववाचकभेदशब्दविरोधादित्यर्थः। अत्र वाक्ये समुद्रपुरुषपदयोरुभयोरपि सप्तम्यन्तत्वोपपादनोपसंहारः। उपपादकस्य भेदशब्दविरोधस्य प्रथमान्तत्वाङ्गीकारे शब्दद्वयसाधारण्यादिति भावः। अत एव समुद्रादिपदमित्युक्तम्। उत्तरवाक्ये तु केवलपुरुषपदस्यैव सप्तम्यन्तत्वोपपादनोपसंहारः। उपपादकवाक्यशेषयुक्तेः तन्मात्रनिष्ठत्वात्। अत एव पुरुषपदस्येत्येव वक्ष्यति। अतः पुरुष इति भाष्ये भिन्नानि भिन्नानीति नपुंसकलिङ्गपदयोः नामानि रूपाणीति पूर्वोक्तपदाभ्यामावृत्ताभ्यामन्वयो बोध्यः। श्लोकार्थमाह– **अरा इति** ॥ **वेदयथाः जानीध्वमिति** ॥ उत्तरत्र मा व इति बहुवचनप्रयोगाद्वेदयथा इत्येकवचनं व्यत्ययेन बहुवचनं कृतम्। तेषां मोक्षफलोक्तेः तत्साधनज्ञानस्यापेक्षितत्वाण्णिजपि स्वार्थे कृतः। मध्यमपुरुषबलात् हे शिष्या इत्यध्याहृतम्। सम्मतित्वेनोदाहृतस्य पिप्पलादवाक्यत्वाभावात्कस्यचिद्वाक्यमित्युक्तम्॥ **मा परिव्यथयत्विति** ॥ न भयं प्रापयतु। न सञ्चालयतु तत्त्वज्ञानादिति शेषः। व्यथ भयसञ्चलनयोः इति धातोः अन्तर्णीतण्यर्थस्य लेटि परिव्यथा इति रूपम्। अत्र निषेधार्थको माशब्दः। तेन माङ् योगाभावात् माङि लुङिति न लुङ्। अनेनैवाशयेन टीकायां निषेधार्थकमाशब्दं प्रयुज्य परिव्यथा इत्यस्य प्रतिपदं परिव्यथयत्विति लोडन्तं प्रयुक्तम्॥ **एवञ्चेदिति** ॥ उक्तरीत्या भेदपरश्चेदित्यर्थः॥ **प्राक्सूचितमिति** ॥

समुद्रं प्राप्यास्तं गच्छन्तीत्यस्य पूर्वभाष्ये अज्ञैरनवगतानीत्यर्थानुवादेनास्तं गच्छन्तीत्यस्याज्ञैरनवगतत्वमेवार्थ इति सूचितमिति भावः। आदित्यवदिति भाष्ये तत्र तस्यैवेति षष्ठ्यन्ताद्वतिः'। यथा मेरोरुत्तरभागे विद्यमानस्याप्यादित्यस्यास्तगमनं नाम दक्षिणदिक्स्थैरविज्ञेयत्वमेव। तथा मुक्तकलानां परमपुरुषेऽस्तगमनं संसार्यविज्ञेयत्वमित्यर्थः। समाख्ययापीत्यपिशब्दः प्रागुक्तोपपत्तिसमुच्चायकः॥ **मदुक्तार्थेऽपीति** ॥ समुद्रप्रविष्टनदीनां ब्रह्मप्रविष्टमुक्तानां नामरूपाभाव इत्यर्थः॥ **वर्जनार्थताया इति** ॥ 'विर्लये च विशेषे च वैपरीत्यादिषु स्मृतः' इति एकाक्षररत्नमालायां विशब्दस्य वैपरीत्यार्थत्वोक्तेः। मुक्तवैपरीत्यस्य मुक्त्यभावरूपत्वात् नामरूपसाहित्यस्यैव प्रतीतेरित्यर्थः॥ **नच समासानुपपत्तिरिति** ॥ विशब्दस्य वर्जनार्थत्वे मुक्तशब्दस्य पुरुषवाचित्वात्समासान्तरानुपपत्तेर्बहुव्रीहेरपि नामरूपादिति पञ्चम्यन्तेनानन्वयेनानुपपत्तिरिति भावः॥ **भावे वेति** ॥ नपुंसके भावे क्त इत्युक्तेरिति भावः। तदेव स्पष्टयति– **ततश्चेति** ॥ भावप्रधानपक्षे तु विगतं मुक्तं मुक्तत्वं तस्मादिति विग्रहो ज्ञेयः॥ **अतिचतुरस्रमिति** ॥ सर्वथाऽनुपपत्तिशून्यमित्यर्थः॥ **अविहायेति योज्यमिति** ॥ नञ्प्रश्लेषं कृत्वेत्यर्थः॥ **अनन्तत्वमुच्यत इति** ॥ नाशराहित्यमुच्यत इत्यर्थः॥ **एवमेवार्थ इति** ॥ भिद्येते चासां नामरूपे इति दार्ष्टान्तिकवाक्यस्येति शेषः। भाष्ये यत्र पूर्व इति वाक्यस्य यज्ञेन यज्ञमयजन्तेति पूर्वभागेनान्वयः। मन्त्रार्थस्तु देवाः यज्ञेन ज्ञानकर्मात्मकेन यज्ञं विष्णुं यज्ञो विष्णुर्देवतेति श्रुतेः अयजन्त पूजितवन्तः। यज देवपूजासङ्गतिकरणदानेष्विति धातोः। तानि ते देवाः। प्रथमानि मुख्यानि धर्माणि धारकाः आसन् अभवन्। नपुंसकत्वं छान्दसम्। ते देवाः यत्र यस्मिन् लोके पूर्वे साध्या देवाः ब्रह्मादयः सन्ति। तत्र महिमानः स्वयोग्यमाहात्म्योपेताः नाकं कं सुखं तद्विरुद्धमकं दुःखम्। तद्विरुद्धं अतिसुखम्। सचन्ते प्राप्नुवन्तीति। अत्र पूर्व इति बहुवचन-प्रयोगान्मुक्तानां भेदसिद्धिः। स तत्रेति वाक्ये स्त्रीभिर्वा यानैर्वा युक्तः स मुक्तः तत्र वैकुण्ठादौ पर्येति परितः एति इत्युक्तेर्भेदसिद्धिः। सोऽश्नुत इति वाक्येऽपि हृदयगुहायां निहितं ब्रह्म यो वेद स विपश्चिता ब्रह्मणा सह सर्वान्कामानश्नुते भुङ्क्ते। अत्रापि

सहेत्युक्तेर्भेदसिद्धिः॥ ऋचां त्व इति मन्त्रस्यायमर्थः। त्वः कश्चिद्ब्रह्मा मुक्तः सन्निति शेषः। ऋचां पोषं पुपुष्वान् पुष्टिं कुर्वन्नास्ते त्वः कश्चिद्ब्रह्मा शक्करीषु शक्करीच्छन्दस्कासु गायत्रं सम गायति। त्वो ब्रह्मा जातविद्यां पौरुषेयविद्यां वदति। शिष्यान्प्रतीति शेषः। त्वो ब्रह्मा यज्ञस्य विष्णोः मात्रामंशं विमिमीते जानातीति। ननु नामरूपे अविहायेति अकारप्रश्लेषोऽनुपपन्नः। नामरूपे इत्यस्य द्विवचनत्वेन ईदूदेद्द्विवचनं प्रगृह्यमिति प्रगृह्यसंज्ञकत्वात्प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावे प्राप्ते नामरूपे अविहायेत्येवनिर्देशः स्यादिति चेन्न। संज्ञापूर्वको विधिरनित्य इति समाधानस्य स्पष्टत्वात्तदनुक्त्वा समाधानान्तरमाह– **श्रुतिविरोधादेवेति** ॥ नन्वेतावता ग्रन्थेनाभेदखण्डनेन भेदोपसंहारे कर्तव्ये सर्वोत्तमत्वोपसंहारः कुतः क्रियत इत्यत आह– **प्रसङ्गादिति**॥ एतत्प्रश्नप्रतिवचनस्य विष्णोर्मुक्तप्राणादिषोडशकलाधारकत्वेन सर्वोत्तमत्वप्रतिपादनार्थं प्रवृत्तत्वेन तत्प्रतिपादनस्यैव मुख्यत्वादद्वैतखण्डनपूर्वकं भेदसमर्थनस्य सर्वोत्तमत्वसिद्ध्यर्थमेव कृतत्वात्। तेन तस्य स्मृतत्वादिति भावः॥ ६-३ ॥

**गूढकर्तृक–**॥ **तदेतत्कथमिति** ॥ अस्याभेद एव समर्थ्यत इति भावेनाहेत्यनेनान्वयः। तदेव विवृणोति– **मुक्तेश्वरभेदस्येत्यादिना** ॥ यद्वा इत्यत इतिपर्यन्तं प्रतिज्ञावाक्यविरोधं विवरणवाक्यस्योक्त्वा प्रतिज्ञावाक्यमेवानुपपन्नमित्याह– **मुक्तेश्वरेति** ॥ तदुक्तिः भेदोक्तिः। अयुक्तेतीत्यनन्तरं चशब्दोऽध्याहार्यः। कथं योजनेति। अस्तं स्वरूपतिरस्कारं गच्छन्ति भिद्येतेत्यनयोः कथं योजना। स्वरूपसत्त्वे खलु भेदचिन्तेति भावः ॥ **अद्रव्यत्वादिति** ॥ अवयवविभागस्य द्रव्यनिष्ठत्वान्नामरूपयोरद्रव्यत्वादिति भावः। नन्वत्र रूपशब्देन द्रव्यं विवक्षितम्। अनन्तं वै नामानन्ता वै विश्वेदेवा इति रूपस्यानन्तत्वमुच्यत इति व्याख्यास्यमानत्वादिति चेत्, तत्र रूपप्राधान्यविवक्षयोक्तत्वादिति॥ **नच समासानुपपत्तिरिति**॥ कर्तरि क्तप्रत्ययविधाने विगतो मुक्त इति विग्रहे असङ्गतिप्राप्तेरिति भावः॥ **अतिचतुरस्रमिति** ॥ भावप्रधाननिर्देशस्यागतिका गतित्वादिति भावः। अनन्तं वै नामेति नामानन्तं नाशरहितम्।

विश्वेदेवाश्च नाशरहिता इत्यर्थः। नन्वकारप्रश्लेषेण पदच्छेदे तथैव पाठः स्यात्। 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति प्रगृह्यसंज्ञाया 'प्लुतप्रगृह्या अचि' इति प्रकृतिभावविधानादित्यत आह– **मणीवादिवदिति** ॥ मणीवादेराकृतिगणत्वादेतदपि तत्र सङ्ग्राह्येयमित्यदोष इति भावः। आदरार्थ इत्यादिपदेनोक्तावधारणादिकं गृह्यते। हे परमानन्दसन्दोह। सान्द्रानन्दवपुष्मते ते नम इत्यर्थः। यद्वै तदानन्दविशेषणम्।

**खण्डार्थ**–एतासाञ्च कलादेवतानां जीवेन सह मोक्षे पुरुषप्राप्तिरूच्यते– **यथेमा नद्य इत्यादिना** ॥ यथा लोके इमाः प्रसिद्धाः स्यन्दमानाः प्रस्रवन्त्यः समुद्र एवायनमाश्रयो यासां ता नद्यः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति प्राप्नुवन्ति, अज्ञानामदर्शनं गतानामपि तासां समुद्रे स्थितानां नदीनां गङ्गायमुनेत्यादिनामरूपे भिद्येते विविक्ते तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते । एवमेवास्य पुरुषस्य परिद्रष्टुर्ज्ञानिनो जीवस्य षोडशकलाः प्राणाद्याः पुरुषायणाः पुरुष एवायनमाश्रयो येषां ते, त एव पुरुषं प्राप्यास्तमज्ञैरज्ञेयत्वं गच्छन्ति। आसां पुरुषे स्थितानां तासां नामरूपे भिद्येते विविक्ते तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। तथा च कलादेवतासु मुक्तिं गतासु स एष जीवः नष्टाचेतनकलो भवति। तत एवामृतो भवति, कलानिमित्तं हि मरणमस्येति ॥ ६-३ ॥

**नर**–तत्सदृष्टान्तं विवृणोति– **यथेति** ॥ यथा लोके स्यन्दमाना गच्छन्त्यः समुद्रायणाः समुद्रगमनस्वभावा इमाः गङ्गाद्याः नद्यः समुद्रं प्राप्यास्तमदर्शनं गच्छन्ति। अज्ञानां अदर्शनं गतानामपि तासां समुद्रे स्थितानां नामरूपे भिद्येते विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। एवं कला अपि जीवानां मोक्षकाले मुक्ताः परमपुरुषं प्राप्यास्तमदर्शनं गच्छन्ति। तथापि पुरुषे स्थितानां तासां नामरूपे विविक्ते एव तिष्ठत इत्येवं विद्वद्भिः प्रोच्यते। ततश्च कलादेवतासु मुक्तिं गतासु स एष जीवः नष्टाचेतनकलो भवति। तत एवामृतो भवति। जडकलानिवृत्तिर्हि मरणमस्येति॥ ६-३ ॥

**उदय**–न केवलं संसारावस्थायामेव तदाश्रयत्वं किन्तु मुक्तावपीति

सदृष्टान्तमाह– **यथेमा इति** ॥ यथेमा नद्यः स्यन्दमानाः स्रवन्त्यः । गच्छन्त्य इति यावत्। समुद्रायणाः समुद्रा एव अयनं स्थानं यासां ताः। समुद्रगमनस्वभावा इत्यर्थः। समुद्रं प्राप्यास्तं अदर्शनं गच्छन्ति। अज्ञानामदर्शनं गतानां समुद्रे स्थितानामिति शेषः। तासां नदीनाम् । समुद्र इति सप्तमी न प्रथमा। नामरूपे भिद्येते विविक्ते भिन्ने इति यावत्। एवं प्रोच्यते विद्वद्भिरीति शेषः। एवमेव खलु अस्य परिद्रष्टुः जीवस्य सम्बन्धिन्य इमाः पूर्वोक्ताः षोडशकलाः देवताः प्राणाद्याः पुरुषायणाः पुरुषो भगवान् नारायणो अयनं मुख्यस्थानं यासां ताः। जीवमोक्षकाले पुरुषं नारायणं प्राप्यास्तं गच्छन्ति। अज्ञानिदृष्ट्याऽदर्शनं प्राप्नुवन्ति। पुरुष इति सप्तमी। पुरुषे स्थितानामासां कलानां नामरूपे भिद्येते विविक्ते भिन्ने इत्यर्थः। इत्येवं प्रोच्यते ज्ञानिभिः। कलादेवतासु मुक्तिं गतासु स एष जीवः अकलः सन् नष्टकला अचेतनकला यस्य सः नष्टाचेतनकल इत्यर्थः। अमृतो मुक्तो भवति। कलानिमित्तं अस्य जीवस्य मरणम् । तदभावे अमृतत्वं सिद्धमित्यर्थः॥ ६-३ ॥

उपनिषत्

**तदेष श्लोकः । अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः । तं वेद्यं पुरुषं वेदयथा मा वो मृत्युः परिव्यथा इति। तान् होवाच। एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति। ते हि तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति। नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥ ४ ॥**

इति षष्ठः प्रश्नः

इति षट्प्रश्नोपनिषत् समाप्ता

**टीका**–एवं स पिप्पलादस्तेभ्यस्तत्त्वमुपदिश्य तान् भरद्वाजादीन् प्रत्युवाच किल। एतदुक्तलक्षणम् । परं ब्रह्म अहमेतावदुक्तमात्रमेव वेद। नातः परं मया विदितमस्तीति। अस्मदादयस्तदेकदेशविद एव न त्वपरिमितविद इति भावः।

एवमुपदिष्टास्ते मुनयस्तमाचार्यमर्चयन्तः प्रणामादिना पूजयन्त इदमूचुः। भगवन्, त्वं हि नः पिता निरुपाधिकोपकारकः। कथम्? यस्त्वमस्माकमस्मानविद्यायाः परं पारं तारयसि अतारयः। को हि नामैवमुपकुर्यादिति। एवमाख्यायिकां समाप्य वेदपुरुषः शिष्यशिक्षार्थमाह– **नमः परमऋषिभ्य इति**॥ पिप्पलादादिभ्य इति। द्विर्वचनमादरार्थ इति ॥ ६-४ ॥

**छलारी–एतदुक्तलक्षणमिति**। एतदित्यस्यार्थ उक्तलक्षणमिति। सृष्ट्यादिकर्तृत्वादिलक्षणमित्यर्थः। एतावदेवाहं वेदेत्यत्र उक्तैवकारव्यावृत्त्यर्थमुक्तम्– **नातः परमस्तीति** ॥ तच्च ब्रह्म इतः परं नास्त्यतोऽधिकं नास्तीति परिच्छिन्नत्वभ्रान्तिं वारयितुं वेदेत्यनेन लब्धमध्याहरति– **विदितमिति** ॥ स्वस्याहं वेदेत्युक्तेः समयज्ञानाभावेऽपि अन्येषां ब्रह्मज्ञानं स्यादित्यतस्तदभिप्रायमाह– **अस्मदादय इति** ॥ आदिशब्देन रमाब्रह्मादयो गृह्यन्ते। 'तातस्तु जनकः पिता' इत्युक्तेः। जनकत्वाभावात्कथं पितृत्वमित्यत उपचारमाश्रित्याह– **निरुपाधिकोपकारक इति** ॥ द्रव्यदानाद्युपाध्यभावेऽपि उपकारक इत्यर्थः। अस्माकमस्मानिति कर्मणः शेषत्वविवक्षया षष्ठी शेष इति षष्ठीति भावः। शेषत्वं नाम सम्बन्धमात्रम्। पूर्वमेव ज्ञानोपदेशस्य कृतत्वात्तरणस्य वर्तमानत्वाभावात् तारयसीति वर्तमनार्थकलट्प्रयोगः कथमित्यत आह– **तारयस्यतारय इति**॥ वर्तमानसामीप्ये वर्तमानवद्वेति श्रुतौ लट्प्रयोग इति भावः। अविद्यातारकस्य कथं निरुपाधिकोपकारकत्वमित्यत आह– **को हीति** ॥ अन्नद्रव्यादिदानोपकारकारिणां तात्कालिकदुःखोपशामकानां बहुलमुपलम्भादात्यन्तिकसंसारदुःखनिवर्तकानां बहूनामभावादिति भावः।। नमः परमऋषिभ्य इति उत्तरवाक्यं सुकेशादीनामिति भ्रान्तिं वारयितुमाह– **एवमिति** ॥ वेदद्रष्टुः पुरुषस्य विष्णुरमाब्रह्मादिरूपत्वेन पिप्पलादा-दीनां तन्नीचत्वेन तन्नमस्कारायोग्यत्वादाह– **शिष्यशिक्षार्थमिति** ॥ शिष्याणामध्ययनाद्यन्तयोर्गुरुनमस्कारः कर्तव्य इति शिक्षणार्थमिति भावः॥ ६-४ ॥

**ताम्रपर्णी–॥ आदराद्यर्थ इति** ॥ आदिपदेन पूर्वोक्तस्यावधारणञ्च गृह्यते ॥ ६-४ ॥

**मङ्गालीय**–एतदित्यस्यैव विवरणम्– **उक्तलक्षणमिति** ॥ सृष्ट्यादि-कर्तृत्वादिलक्षणमित्यर्थः। एतावदेवाहमित्यत्रोक्तैवकारव्यावर्त्यकथनम् ॥ **नातः परं मया विदितमस्तीति** ॥ अहमेतावद्वेदेत्युक्ते स्वस्य समग्रज्ञाना-भावेऽपि अन्येषां समग्रज्ञानमस्तीति प्राप्तावाह– **अस्मदादय इति** ॥ आदि-शब्देन रमाब्रह्मादयो गृह्यन्ते। जनकत्वाभावात्कथं पितृत्वमित्यत उपचारमा-श्रित्याह– **निरुपाधिकोपकारक इति** ॥ **अस्माकमस्मानिति** ॥ कर्मणः शेषत्वविवक्षया षष्ठी शेष इति षष्ठीति भावः। शेषत्वं नाम सम्बन्धमात्रम्। ननु पूर्वमनेन ज्ञानोपदेशस्य कृतत्वात्तरणस्य वर्तमानत्वाभावात्तारयसीति वर्तमाना-र्थकलट्प्रयोगः कथमित्यत आह– **तारयस्यतारय इति** ॥ वर्तमानसामीप्ये वर्तमानवद्वेति श्रुतौ लट्प्रयोग इति भावः। अविद्यातारकस्य कथं निरुपाधिकोपकारत्वमित्यत आह– **को हीति** ॥ अत्र द्रव्यादिनोपकारकाणां तात्कालिकदुःखोपशामकानां बहुलमुपलम्भेऽपि आत्यन्तिकदुःखनिवर्तकानां विरलत्वादिति भावः। नमः परमःऋषिभ्य इत्युत्तरवाक्यं सुकेशादीनामिति भ्रान्तिं वारयितुमाह– **एवमिति** ॥ वेदद्रष्टुः पुरुषस्य रमाब्रह्मादिरूपत्वेन पिप्पलादादीनां तन्नीचत्वेन तन्नमस्कारायोग्यत्वादाह– **शिष्यशिक्षार्थमिति** ॥ शिष्याणामध्ययनाद्यन्तयोर्गुरुनमस्कारः कर्तव्य इति शिक्षार्थमित्यर्थः ॥

**खण्डार्थ**–तत्तत्रोक्तार्थे एष वक्ष्यमाणः श्लोकः सम्मतित्वेन भवति। रथनाभौ अरा इव यस्मिन् पुरुषे कलाः प्रतिष्ठिताः तं वेद्यं वेदितव्यं पुरुषं वासुदेवं वेदयथाः जानीध्वम्। ततश्च मृत्युः संसारो वो युष्मान् मा परिव्यथाः मा परिव्यथयतु। पुरुषाज्ञाने संसारव्यथा भवेत्। सा भवतां मा भवत्विति। एवं स पिप्पलादः तत्त्वमुपदिश्य तान् भारद्वाजादीन् प्रत्युवाच। एतदुक्तलक्षणं परं ब्रह्माहमेताव-दुक्तमात्रमेव वेद नातः परं मया विदितमस्ति। अस्मदादयः तदेकदेशविद एव न त्वपरीमितविद इति भावः। एवमुपदिष्टास्ते मुनयस्तमाचार्यमर्चयन्तः प्रणामादिना पूजयन्त इदमूचुः। भगवन्, त्वं हि नः पिता निरुपाधिकोपकारकः । कथम्? यः त्वमस्माकं अस्मानविद्यायाः परं पारं तारयसि अतारयः। को हि नामैवमुप-कुर्यादिति । एवमाख्यायिकां समाप्य वेदपुरुषः शिष्यशिक्षार्थमाह– **नमः परम**–

**ऋषिभ्यः** ॥ पिप्पलादादिभ्य इति ॥ द्विर्वचनमादरार्थमित्यशेषमङ्गल-मिति ॥ ६-४॥

**इति श्रीराघवेन्द्रयतिविरचितः षट्प्रश्नखण्डार्थः**

**नर**–उक्तार्थे मन्त्रसम्तिमाह— **तदेष इति** ॥ अराः रथनाभाविव कलाः प्राणाद्याः यस्मिन्परमपुरुषे प्रतिष्ठिताः। तं वेद्यं पुरुषार्थकामैर्ज्ञातव्यम्। पुरुषं वासुदेवं वेदयथा जानीध्वम्। हे शिष्या इति कस्यचिद्वाक्यम्। ततश्च मृत्युः संसाराख्यमृत्युः युष्मान् मा परिव्यथाः मा परिव्यथयत्। परमपुरुषाज्ञाने संसारव्यथा भवेत्। सा भवतां मा भवत्विति। एवं पिप्पलादः तेभ्यो भगवत्तत्त्वं उपदिश्य स्वज्ञातादधिकं माहात्म्यं भगवतोऽस्तीत्युवाचेत्याह वेदपुरुषः– **तानिति** ॥ पिप्पलादः तान् भारद्वाजादीन् उवाच ह। किमिति? एतदुक्तलक्षणं परब्रह्म एतावत् उक्तमात्रमेव वेद नातः परं मया विदितमस्ति। अस्मदादयः तदेकदेशविद एव तद्ब्रह्मापरिमितमिति। एवं उपदिष्टाः ते मुनयः तमाचार्य-मर्चयन्तः प्रणामादिना पूजयन्तः इदमूचुः। भगवन् त्वं हि नः पिता निरुपा-धिकोपकारकः। कथम्? यस्त्वमस्माकं यस्मादविद्यायाः पारं उत्तरतीरं पारयसि। को हि नामैवमुपकुर्यादिति। एवमाख्यायिकां समाप्य वेदपुरुषः शिष्यशिक्षार्थं प्रवर्तकऋषीन् प्रणमति– **नम इति**॥ परमऋषिभ्यः पिप्पलादादिभ्यो नमः। आदराद् द्विरुक्तिः॥ ६-४ ॥

विद्याधीशार्यशिष्येण नरसिंहेन भिक्षुणा।
रचिता श्रीशसन्तुष्ट्यै षट्प्रश्नार्थप्रकाशिका॥

**इति श्रीनरसिंहभिक्षुविरचिता षट्प्रश्नार्थप्रकाशिका**

**उदय**–स्वतःप्रमाणत्वेऽपि स्फुटमन्त्राश्रयाश्रयीभावो न ज्ञायते प्रत्युत ऐक्यमेव प्रतीयत इत्यतो संवादत्वेन स्फुटं मन्त्रमाह वेदपुरुषः– **तदेष श्लोक इति** ॥ ततस्तस्मिन् विषये एषः श्लोकः मन्त्रो संवादरूपो अस्तीति शेषः। रथनाभौ अरा धारा इव। कलाः षोडशकलाः यस्मिन् पुरुषे प्रतिष्ठिताः। तदाधारत्वेन स्थिताः इत्यर्थः। तं वेद्यं पुरुषार्थकामैः ज्ञेयम्। पुरुषं वासुदेवाख्यम्। वेदयथा जानीध्वम्। हे शिष्याः। इति कस्यचित् वाक्यम्। वो युष्मान्। मृत्युः संसारः मा परिव्यथाः मा

दुःखयतु। परमपुरुषाज्ञानेन संसारव्यथा भवेत् स मा भूदित्यर्थः। तस्मान्मुक्तावपि जीवानां भेदसद्भावात्परमात्मनः सकलजीवोत्तमप्राणनियामकत्वाच्च युज्यते तस्य सर्वोत्तमत्वमिति॥

एवं पिप्पलादस्तत्त्वमुपदिश्य भारद्वाजादीन् प्रति अत्युत्कर्षपूर्वमुवाच गुरुः । एतमुक्तलक्षणं ब्रह्म अहमेतावदेव उक्तमात्रमेव वेद जानामि। अतः परमुक्तादधिकं मया विदितं नास्ति। अस्मदादयो भगवदेकशविदः तत्त्वपरिच्छिन्नमिति भावः। एवं तत्त्वोपदेष्टारं मुनिं ते किं कुर्युरित्यत आह– **ते हि तमर्चयन्त इति** ॥ भारद्वाजादयः मुनयः तमाचार्यं अर्चयन्तः प्रणामादिना पूजयन्तः सन्तः । ऊचुरिति शेषः । किमिति। हे गुरो त्वं हि त्वमेव नोऽस्माकं पिता निरुपाधिकोपकारकः। यस्मात्। अस्माकं अस्मान्। अविद्यायाः संसारानयनहेतुभूतायाः परं पारं श्रेष्ठतमं उत्तारणे हेतुभूतोपायेन यथा भवति तथा तारयसि अतारयः। यः कश्चित् प्लवेन नदीपारो भवति एवं त्वया गुरुणा वयं संसारार्णवादुद्धारिता इत्यर्थः। तदेतत्।

'पिता माता तथा भ्राता सर्वे संसारहेतवः।
गुरुरेकः सदा सेव्यः संसारोद्धरणक्षमः ॥' इति स्मृतिः स्पष्टमाह।

एवं समापिताख्यायिको भगवान् वेदपुरुषः स्वयमन्तरायविधुरोऽपि शिष्यशिक्षार्थं मङ्गलमाधत्ते– **नमः परमऋषिभ्य इति** ॥ पिप्पलादादिभ्यः । द्विर्वचनमादरार्थम्। प्रमेयावधारणार्थं वा। अतः सकलगुणगणपूर्णः सर्वदोषविदूरः सर्वोत्तमः सकलजगज्जन्मादिकर्ता स्थाता संहर्ता च नान्योऽस्तीति सकलसच्छास्त्रैः प्रतिपाद्यत इति स्थितम्॥ ६-४ ॥

षट्प्रश्नोत्तरवाक्यैश्च षट्शत्रुघ्नं मरुत्प्रियम्।
वासुदेवात्मकं कण्ठीरवास्यं नौमि सर्वदा॥
श्रीवासुदेवजनुषा केशवेन विनिर्मिता।
षट्प्रश्नपञ्चिका भूयात्प्रीत्यै माधवमध्वयोः॥
षट्प्रश्नोपनिषद्व्याख्या वरदा मञ्जुलस्वरा ।
यशोवतंसभूपालमानसे मोदतां सदा ॥

**श्रीमदुदयगिरिस्थितवासुदेवात्मजकेशवरचिता**

**षट्प्रश्नपञ्चिका समाप्ता ॥**

**भाष्यम्**

**नमो नमोऽस्तु हरये प्रेष्ठप्रेष्ठतमाय ते।**
**परमानन्दसन्दोहसान्द्रानन्दवपुष्मते ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं**
**षट्प्रश्नोपनिषद्भाष्यं सम्पूर्णम्**

**टीका**–अत एव भाष्यकारोऽप्यन्ते च भगवत्प्रणामं निबध्नाति– **नम इति** ॥

वचनप्रसूनमाला जयतीर्थाख्येन भिक्षुणा रचिता।
ध्रियतां हृदये सदये कमलामहिलेन पूरुषेण॥

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य षट्प्रश्नोपनिषद्भाष्यस्य**
**विवरणं जयतीर्थभिक्षुविरचितं सम्पूर्णम्**

**वामन**–अथ भाष्यकारभट्टारको ग्रन्थावसानेऽपीष्टदेवतायै हरये नमस्करोति – **नम इति** ॥

यस्य त्रिरूपाण्युदितानि वायौ वेदे बलज्ञानवतो बलादौ।
दशप्रमत्याख्यतृतीयरूपी षट्प्रश्नभाष्यं कृतवान् रमेशे॥

तस्य टीकामिमां शक्त्या कृत्वा विष्णोः पदाब्जयोः।
समार्पयद्वामनोऽयं सततं तत्प्रसत्तये ॥
ज्ञानानन्दादिनिर्दोषसम्पूर्णगुणविग्रह।
सर्वप्रेष्ठप्रेष्ठतम नमो नारायणाय ते॥
नमोऽस्तु श्रीमदानन्दतीर्थप्रज्ञाय नित्यशः।
श्रीमन्नारायणपदद्वन्द्वं वन्दामहेऽनिशम्॥
तत्पादसेवासुधया स्पर्धिता ये निरन्तरम्।
परमेभ्यो गुरुभ्यो नः सर्वदैव नमो नमः॥

**इति श्रीमद्वामनपण्डिताचार्यविरचिता षट्प्रश्नटीका**

**श्रीनिवास**– एवं समापितग्रन्था: टीकाकाराः स्वकृतां वचनप्रसूनमालां भगवत्यर्पयति– **वचनेति** ॥ महिला स्त्री । तत्तु परं ब्रह्म॥ **अत एवेति** ॥ शिष्यशिक्षणार्थमन्ते वेदपुरषेण प्रणामस्य कृतत्वादेवेत्यर्थः॥

श्रीनिवासेन विदुषा रचिता टिप्पणी शुभा ।
भूयाच्छ्रीव्यासदेवस्य पदयोरर्पिता सदा ॥

**इति श्रीश्रीनिवासतीर्थविरचिता षट्प्रश्नभाष्यटीकाटिप्पणी**

**छलारी–अत एवेति** ॥ भाष्यकारस्य सर्वदा विष्णुनमस्कारकरणशीलत्वात् ग्रन्थान्ते निबन्धनस्य शिष्यशिक्षणार्थत्वादेवेति भावः। भाष्यस्थपदानामयमर्थः। अतिशयेन प्रियं प्रेष्ठं शरीरादि । **तस्मादतिशयेन प्रियं रमादि**। ततोऽप्यतिशयेन प्रियाय प्रेष्ठतमाय 'अतिशायने तमबिष्ठनौ' इति प्रत्यये प्रिय स्थिरेति प्रियशब्दस्य प्रवेशप्रकृत्यैकाजितिप्रकृतिभावे 'आद्गुणः' इति गुणे प्रेष्ठ इत्यादिरूपं भवति। परमाश्च ते निरवकाशाश्च ते आनन्दादयश्च तेषां सन्दोहः समुदायस्तेन सान्द्रं शिरः करचरणादिरूपेण स्थितं तच्च तत् आनन्दवपुश्चानन्दात्मकशरीरम्। तदस्तीति परमानन्दसन्दोहसान्द्रानन्दवपुष्मान् तस्मै। 'तस्य प्रियमेव शिरः' इत्यादि श्रुतेः। अन्तेऽपि श्रीमज्जयार्यवर्या मङ्गलं निबध्नन्ति– **वचनप्रसूनमालेति** ॥ कमला महिला पत्नी यस्य स कमलामहिलस्तेन कमलामहिलेन "वनिता महिलाऽथ सा" इत्यमरोक्तेः॥

स्रष्टा पाता प्राणसौख्यदाता...रणादिदः।
तारोपास्यो मुक्तगम्यः श्रीपतिः पातु मां सदा॥
श्रीमध्वपुंसिंहकृतस्य भूयाच्छट्प्रश्नभाष्यस्य जयार्यटीका।
छलारिनारायणसिंहनाम्ना विवृतेशतुष्टये॥

**छलारि श्रीनारायणाचार्यकृतं षट्पश्नटीकाविवरणं समाप्तम्**

**ताम्रपर्णी–॥ अत एवेति** ॥ शिष्यशिक्षार्थमेव। परमानन्दसन्दोहसान्द्रेति सम्बोधनम् । अत्र टीकाकृन्मुनिः स्वकृतिं हरावर्पयति— **वचनेति**॥

लक्ष्मीब्रह्मशिवेन्द्रवीन्द्रमुखसद्देवेन्द्रसंवन्दित-
श्रीमत्पादयुगं जगज्जनिलयस्थित्यादिहेतुं परम्।
श्रीमन्मध्वमहामुनीन्द्रविलसद्धृत्पद्ममुख्यासनं
सान्द्रानन्दनिधिं भजे हरिमहं व्यासाभिधं शाश्वतम्॥

श्रीविठ्ठलार्यपुत्रेण श्रीमत्तीर्थार्यसेविना।
श्रीनिवासेन विवृता टीका षट्प्रश्नभाष्यगा॥

**इति श्रीमद्विठ्ठलाचार्यपुत्रेण श्रीमत्तीर्थार्यचरणसेविना श्रीनिवासेन रचितं षट्प्रश्नटीकाविवरणं समाप्तम्**

**मङ्गालीय–॥ अत एवेति** ॥ भाष्यकारस्य सर्वदा विष्णुनमस्कारशीलत्वाद्ग्रन्थान्ते निबन्धनस्य शिष्यशिक्षार्थत्वादेवेति भावः। भाष्यस्थपदानामयमर्थः। अतिशयेन प्रियं प्रेष्ठं शरीरादि। तस्मादतिशयेन प्रियं रमादि। ततोऽप्यतिशयप्रियाय प्रेष्ठप्रेष्ठतमाय। परमाश्च ते निरवधिकाश्च ते आनन्दाश्च तेषां सन्दोहः समुदायः तेन सान्द्रं शिरःकरचरणादिरूपेण स्थितं तच्च तत् आनन्दवपुश्च। आनन्दात्मकं शरीरं तदस्यास्तीति परमानन्दवपुष्मान् तस्मै। 'तस्य प्रियमेव शिरः' इत्यादिश्रुतेरिति॥

अन्तेऽपि जयतीर्थश्रीमच्चरणः मङ्गलं निबध्नाति– **वचनेति** ॥ कमला लक्ष्मीः। 'कमला श्रीर्हरिप्रिया' इत्यमरोक्तेः महिला पत्नी यस्य स कमलामहिलः तेन कमलामहिलेन। अन्यपदार्थस्य कमलामहिलत्वं कुत इत्यत उक्तम्– **पुरुषेण पूर्णषड्गुणत्वात्परमपुरुषेणेति** ॥ भिक्षोर्मालानिर्माणे नाधिकार इत्यत उक्तम्॥ **वचनेति** ॥ वचनानि प्रसूनानीव वचनान्येव प्रसूनानीति वा समासः। कमलापतेरेतादृशमालाधारणेन किं प्रयोजनमित्यत उक्तम्॥ **सदय इति** ॥ भक्तानुकम्पयैव धारणमिति भावः॥ ६-४ ॥

षट्प्रश्नोपनिषद्भाष्यटीकाव्याख्यानमात्रतः।
इन्दिरारमणः प्रीतिं यातु मध्वार्यहृद्गतः॥

**इति श्रीमङ्गालीधर्माचार्यविरचिता षट्प्रश्नटीकाटिप्पणी समाप्ता**

**गूढकर्तृक–**एवं समापितभाष्यविवरणः श्रीमज्जयतीर्थश्रीमच्चरणः स्वकृतं हरावर्पयति– **वचनप्रसूनमालेति** ॥ ६-४ ॥

**इति गूढकर्तृकं दुर्घटार्थविवरणं समाप्तम्**

# षट्प्रश्नोपनिषद्वाक्यानुक्रमणिका